the problem regarding Nāgārjuna, and his eminent disciple Candrakīrti, our commentator here. In the history of the ancient Indian literature Nāgārjuna is an epochmaking personality. His biography, which is available in Chinese was written by Kumārajiva leaves room to doubt whether Nāgārjuna the Mādhyamika philosopher and the Tantrik Nāgārjuna were one and the same person. The Tibetan sources throw no light. The Vetāla stories, as they are preserved in Tibetan, mention a Siddha Nāgārjuna who could contract his body-stature as small as he could to put him within a nest of birds. There we also find a Candrakīrti who had been stricken with poverty in his boyhood. Candrakīrti was asked to practice the alchemy of transforming other metals into gold for the cause of the spread of Buddha's doctrine.

The PDSV commentary which is ascribed to our Candrakīrti may be connected with the Siddha-Nāgārjunapāda and his disciple Candrakirti who was also well-versed in śāstras and conversant in the Tantric rituals. The commentator has occasionally referred to authoritative Tantric texts like

1 Vyākhyātantra ( Sandhyāvyākaraṇa ).
2 Samajottaratantra.
3 Prajñā sūtra (-Pāramitā).
4 Śrīvajrajvālāmahāyogatantra
5 Śrī māyājālatantrā.
6 Guhyendratilaka.
7 Śrī vairocanasambodhicaryātantra.
8 Vajroṣṇīṣatantra.
9 Mūlatantra ( Mañjuśrīmūlakalpatantra).
10 Mahāyānaratnarāja sūtra.
11 Sākṣībhaṭṭārikā.
12 Laṅkāvatārasūtra.
13 Devendraparipṛcchā.

30-1-78 S. K. Pathak

श्रीजगन्नाथ द्विवेदी
२७-४-८८

# गुह्यसमाजतन्त्रप्रदीपोद्योतनटीका
# षट्कोटिव्याख्या

**ओं नमः श्रीवज्रसत्त्वाय**

## ।। प्रथमः पटलः ।।

श्रीमत्तन्त्राधिराजं विवृतपटुतरैर्योगतन्त्रैश्च नेयं
बुद्धं षट्कोटिवन्धैर्जिनसुतविषयं यत्समाजं जिनानाम् ।
तत् श्रीनागार्जुनाप्तं क्रमयुगनिलयं मुद्रितं सर्वबुद्धै-
र्नत्वा श्रीवज्रसत्त्वं प्रकटयति विभुं चन्द्रकीर्तिः क्रमेण ।।

उत्पत्तिक्रममादौ स्यान्मन्त्रमूर्तिप्रसाधकः ।
चित्तनिध्यप्तिमात्रं तु द्वितीयः क्रम उच्यते ।।
तृतीयश्च क्रमो रम्यः संवृतेः सत्यदर्शनम् ।
सत्यस्य संवृतेः शुद्धिश्चतुर्थक्रम उच्यते ।।
पञ्चमो युगनद्धाख्यो यत् सत्यद्वययोजनम् ।
साधनाङ्गमिदं षष्ठं सर्वतन्त्रार्थसंग्रहम् ।।
एषां क्रमाणां भेदांस्तु प्रस्तारविधिना वहून् ।
संमीलनं च तेषां वै यो वेत्ति स हि तन्त्रवित् ।।
मन्त्रार्थिचत्तादतः कायाद् विशुद्धेर्योगवाहतः ।
क्रमशः पञ्चपिण्डार्थान् ज्ञात्वा षट्कोटिमाविशेत् ।। इति ।।
यावद् यरलवा हान्ता कखघान्ता च भान्तकाः ।
डढपास्तथतान्ताश्च ते ते द्व्यक्षरमूलिकाः ।।
चतुरशीतिसाहस्रो धर्मस्कन्धो महामुनेः ।
श्रीसमाजकरण्डोऽसौ तस्मात् तत् तन्त्रशेखरम् ।।

स्वल्पग्रन्थे प्रभूतार्थे समाजे तन्त्रदुष्करे ।
सप्तालङ्कारदुर्बोधाद् विभ्रमन्ति च सर्वथा ।।
तस्माद् विज्ञाय यत्नेन गुरुपादप्रसादतः ।
तद्विभागं करिष्यामि सत्त्वानुग्रहकाम्यया ।।
पञ्चसंख्य उपोद्घातो न्यायश्चापि चतुर्विधः ।
षट्कोटिकं तु व्याख्यानमाख्यानं तु चतुर्विधम् ।।
पञ्चमो द्विप्रभेदश्च षष्ठः पञ्चप्रभेदवान् ।
सप्तमो द्विप्रभेद[:] स्यादलङ्कारः समासतः ।।
अलङ्कारस्य सप्तानामेकैकस्य यथाक्रमम् ।
निर्देशं तु करिष्यामि व्याख्यातन्त्रानुसारतः ।।
का संज्ञा अस्य तन्त्रस्य किंनिमित्तमिदं कृतम् ।
को वा कर्ता प्रमा कास्य किं वा चास्य प्रयोजनम् ।।
तन्त्रस्य नाम संज्ञा स्यान्निमित्तं रागिणो जनाः ।
कर्ता तु वज्रसत्त्वोऽस्य परिमाणं तु कीर्त्यते ।।
परिच्छेदोऽथ कल्पश्च खण्डः पटल एव च ।
चतुर्विधं भवेत् तच्च ग्रन्थतश्चापि संख्यया ।।
प्रयोजनं तु गणितं शान्तिकादि क्रियाविधिः ।
अष्टौ च सिद्धयश्चैव बुद्धत्वमपि चोत्तमम् ।।
अभिक्रान्त उपोद्घातो द्वितीयः कथ्यते पुनः ।
सन्तानश्च निदानं च निरुक्तिर्हेतुरित्यपि ।।
जन्मोत्पत्तिर्मनुष्येषु सन्तान इति कथ्यते ।
अन्तःपुरस्य मध्याच्च निष्क्रमस्तु निदानकम् ।।
संवरो विनयोद्दिष्टो निरुक्तिरिति गद्यते ।
फलाकांक्षी चरेद्धर्मं स हेतुरिति कथ्यते ।।
अयं विरागधर्मस्य चतुर्धा न्यायमिष्यते ।
रागधर्मनये वक्ष्ये प्रस्फुटार्थावबोधनम् ।।
पञ्चबुद्धकुलोत्पत्तिः सन्तान इति कथ्यते ।
पुनरेककुलीभावं निदानं च प्रदर्शितम् ।।

वज्रादिग्रहणं चैव निरुक्तिरिति कथ्यते ।
शृङ्गारादिरसैश्चर्या हेतुरित्यभिधीयते ॥
पुनस्तृतीयोऽलङ्कारः षट्कोटिपदनिश्चयः ।
योगतन्त्रनयोद्दिष्टो मुद्रितार्थप्रबोधनः ॥
सन्ध्यायभाषानोसन्ध्यानेयनीतार्थभेदतः ।
यथारुतं च नरुतं षट्कोटिरिति कीर्तितम् ॥
प्रच्छन्नदुर्भगानां च नेयार्थं भाषते जिनः ।
सद्भूतार्थप्रकाशाय नीतार्थं भाषते पुनः ॥
विशिष्टरुचिसत्त्वानां धर्मतत्त्वप्रकाशनम् ।
विरुद्धालापयोगेन यत् तत् सन्ध्यायभाषितम् ॥
मण्डलादिप्रकल्पेषु चर्यायां च यथायथम् ।
उत्तानमर्थकथनं तद् यथारुतभाषितम् ॥
कोटाख्यकादयः शब्दा लोकशास्त्रवहिष्कृताः ।
तथागतानां संकेता नरुतं तत्प्रकीर्तितम् ॥
मृद्विन्द्रियाणां सत्त्वानां प्रबोधार्थमतिस्फुटम् ।
तत्त्वस्य कथनं व्यक्तं नासन्ध्या समुदाहृतम् ॥
उक्तः षट्कोटिभेदस्तु व्याख्याभेदो निगद्यते ।
अक्षरार्थः समस्ताङ्गं गर्भी वाप्यथ कोलिकम् ॥
प्रथमस्त्वेक एव स्यात् समस्ताङ्गं द्विभेदकम् ।
गर्भी च त्रिविधः ख्यातो द्विविधः कोलिको मतः ॥
वाह्यशास्त्रविदो नैके शब्दमात्रपरायणाः ।
तद्व्युत्पत्तिप्रकाशाय अक्षरार्थो निगद्यते ॥
सूत्रान्तादौ प्रपन्नानां कौकृत्यविनिवृत्तितः ।
उत्पत्तिक्रमयोगाच्च समस्ताङ्गं प्रकाशितम् ॥
गर्भीति गर्भमस्यास्ति रागधर्मप्रकाशनम् ।
संवृतेः सत्यसंबोधज्ञानत्रयविवेचनम् ॥
प्रभास्वरप्रकाशश्च युगनद्धप्रबोधनम् ।
द्विविधः कोलिकः प्रोक्तः कोलः पर्यन्तवाचकः ॥

इच्छेच्छ्रावयितुं वक्ता भूयो द्विविधभेदतः ।
सत्रव्याख्याननिर्दिष्टं शिष्याख्यानं द्वितीयकम् ॥
यथारुतं न सन्ध्या च नेयार्थं वापि योजयेत् ।
अक्षरार्थः समस्ताङ्गं सत्रव्याख्यानमुच्यते ॥
नरुतं नियतार्थश्च सन्ध्याभाषा तथैव च ।
गर्भी वै कोलिकं चापि शिष्यव्याख्यानमिष्यते ॥
क्रमद्वयं समाश्रित्य व्याख्याभेदः प्रदर्शितः ।
व्याख्यातन्त्रानुसारेण विनेयेषु तथागतैः ॥
लोके नियतिसंभूताः सर्वदाश्रवणार्थिनः ॥
अनेकाकारबुद्धित्वात् पुद्गलाः पञ्च संमताः ॥
रत्नचन्दनपद्माश्च पुण्डरीकस्तथोत्पलः ।
प्रकृत्या भिन्नसंज्ञास्ते सर्वज्ञेन च भाषिताः ॥
अश्रुत्वा वस्तु निखिलं धारणायां विचक्षणः ।
क्षणाद् विस्मरणं याति प्रख्यातोत्पलपुद्गलः ॥
ग्राह्यं श्रुत्वाधिकं भूरि न शक्नोति प्रकाशि[तु]म् ।
कुण्डी कर्पासवद् भूयः पुण्डरीकाख्यपुद्गलः ॥
श्रद्धावान् जनकारुण्यो विकासहृदयश्रुतेः ।
निष्पर्ववेणुवच्छ्रावी पद्मविख्यातपुद्गलः ॥
अल्पश्रुतिरहङ्कारी निर्मूलं वहुभाषिते ।
न शक्योऽनुग्रहं कर्तुं चन्दनाख्यातपुद्गलः ॥
सुशीलो विशदो दक्षः प्रज्ञावानेकसन्धिकः ।
श्रुत्वा प्रकाशयेत् सम्यक् प्रख्यातो रत्नपुद्गलः ॥
पुण्डरीकोत्पलौ चैव पद्मचन्दन एव च ।
चत्वारः पुद्गला ह्येते सत्रव्याख्यानपुद्गलाः ॥
निष्पन्नक्रमयोग्यश्च सदाचारविभूषणः ।
रत्नपुद्गलनामायं शिष्यव्याख्यानभाजनः ॥
पात्रापात्रं परीक्ष्यैवं पुद्गलज्ञानभेदतः ।
व्याख्यानं द्विविधं कुर्याद् वज्राचार्यो विचक्षणः ॥

एभिः षड्भिरलङ्कारैः सत्यद्वयविनिर्णयः ।
स सप्तमो ह्यलङ्कारो निष्पन्नक्रमसाधनः ॥
व्याख्यातन्त्रानुसारेण प्रोक्ता व्याख्या सुदुर्लभा ।
अनयैव हि नीयन्ते योगतन्त्राणि नान्यथा ॥
तस्माद् वज्रगुरोर्यत्नाद् योगतन्त्राणि धारयेत् ।
निदानक्रमयोगाभ्यां व्याख्यातन्त्रविशारदात् ॥

इति सप्तविधालङ्काराख्यायिकान्यायः ॥

इदानीं सप्तदशपटलानां पिण्डार्थो विधीयते । तत्राभिधानाभिधेयात्मको महावज्रधरः । प्रथमे पटले निर्माणमण्डले श्रवणभव्यानां विद्याभिषेकं दत्वा नेयनीतार्थभेदेन कल्पितनिष्पन्नक्रमसाधनं प्रतिपादितवान् । वक्ष्यमाणषोडशपटलेऽप्यर्थान्तरं प्राप्य द्विविधदेवतायोगमेव वर्णयति । इममर्थमाह **समाजोत्तरे**

क्रमद्वयं समाश्रित्य बुद्धानां धर्मदेशना ।
क्रम उत्पत्तिकश्चैव निष्पन्नक्रम एव च ॥ इति ॥

तत्र द्वितीयपटले केवलं निष्पन्नक्रमं द्योतयति ।
तृतीये पटले परिशुद्धदेवतायोगं स्पष्टयति ।
चतुर्थपटलेऽभिषेकमण्डलं दर्शयति ।
पञ्चमपटले योगचर्यामाह ।
षष्ठपटले कायवाक्चित्ताधिष्ठानमाह ।
सप्तमपटले पञ्चमपटलोक्तचर्यां प्रपञ्चयति ।
अष्टमपटले गुह्याभिषेकमाह ।
नवमपटले [तत्त्वाद्वय]व्याकरणमाह ।
दशमपटलेऽभिमतसिद्ध्यभिमुखीकरणानां चापुण्यात्मिकदेवताहृदयसंचोदनमाह ।
एकादशपटले मन्त्रमूर्त्तिनिष्पत्तिं ज्ञानमूर्त्तिनिष्पत्तिं च दर्शयति ।
द्वादशपटले महामुद्रापरिणाममाह ।
त्रयोदशपटले चतुर्दशपटले च कर्मप्रसरमाह ।
पञ्चदशपटले सर्वसिद्धयस्तत्त्वाधिगतस्यैव सिध्यन्तीति मायोपमसमाधिमाह ।

षोडशपटले चतुर्थपटलोक्तरजोमण्डलं प्रपञ्चयति ।
सप्तदशपटले समयसम्वरं प्रतिपादितवानिति ।।

इदानीं सप्तदशपटलानां षट्कोटिपदविभागश्चतुर्विधाख्यायिकाविभागश्च क्रियते । **एवं मयेत्यादि विजहारेत्यन्तश्चतुर्विधाख्यायिका । अनभिलाप्ये**त्यादि पर्षदमारभ्य **बोधिचित्तवज्रस्य हृदये विजहारेत्यन्तं** नेयनीतार्थम् । सर्वतथागताभिभवनवज्रो नाम समाधिम्, ज्ञानप्रदीपरजोवज्रं नाम समाधिम्, कायवाक्चित्तविसंवादनवज्रं नाम समाधिम्, चतुर्विधाख्यायिका । महारागविनयं नाम समाधिम्, समयोद्भववज्रं नाम समाधिम्, रत्नसंभववज्रं नाम समाधिम्, महारागसंभववज्रं नाम समाधिम्, सर्वतथागतानुरागणवज्रं नाम समाधिम्, रागधरानुरागणवज्रं नाम समाधिम्, वैरोचनवज्रं नाम समाधिम्, सर्वतथागताभिसंबोधिवज्रं नाम समाधिम्, धर्मरत्नाकरं नाम समाधिम्, कायवाक्चित्तवज्रं नाम समाधिम्, नेयनीतार्थम् । कायवाक्चित्तगुह्यमिति वज्रसमयसंभवपदैरिति चतुर्विधाख्यायिका । महाविद्यापुरुषमूर्तिरिति पूजास्फरणसमयरत्नैर्मेयैरिति नेयनीतार्थम् ।

**अहो हि सर्वबुद्धानां बोधिचित्तप्रवर्तनम् ।**
**सर्वताथागतं गुह्यमप्रतर्क्यमनालयम् ।।**

इति नासन्ध्यम् । **किं तु सर्वतथागतानामपि सन्देहकरोऽयमित्यादि कायवाक्चित्तगुह्यं निर्देष्टुं नोत्सहते** इत्यन्तं सन्ध्यायभाषा । **द्वेषकुलेत्यादि उत्तरद्वारे निषीदयामास** इत्यन्तं **वज्रसत्त्वोत्सर्ग**मारभ्य **यावदमृतकुण्डलिक्रोधोत्सर्ग**पर्यन्तं यथारुतम् । वज्रधृक् । जिनजिक् । रत्नधृक् । आरोलिक् । प्रज्ञाधृक् । द्वेषरति । मोहरति । [ईर्ष्यारति][१] । रागरति । वज्ररति । यमान्तकृत् । प्रज्ञान्तकृत् । पद्मान्तकृत् । विघ्नान्तकृत् इत्यादि मन्त्रपदानि यावत् **सर्वतथागतसमाधिमण्डलाधिष्ठानपटलपर्यन्तं** नेयनीतार्थम् ।।

।। प्रथमपटले षट्कोटिपदविभागः ।।

**अथ भगवानित्यादि परिवितर्कमाज्ञाय तान् बोधिसत्त्वानेव**[२]**माहेत्यन्तं यथारुतम् । उत्पादयन्त्वित्यादि वाक्यव्याहारेणेत्यन्तं** नेयनीतार्थम् ।

---

१. ईर्ष्यारति om MS २. °न्नेवमा° MS

**अहो हि समन्तभद्रस्य कायवाक्चित्तवज्रिणः ।**
**अनुत्पादप्रयोगेण उत्पादोऽयं प्रगीयते ॥**

इत्यन्तं नासन्ध्यम् । **अभावे भावनाभाव** इत्यादि महावज्रधरस्य बोधिचित्तगाथा चतुर्विधाख्यायिका । **सर्वभावविगतं स्कन्धधात्वायतनग्राह्यग्राहकवर्जितं धर्मनैरात्म्यसमतया स्वचित्तमाद्यनुत्पन्नं शून्यतास्वभावमित्यादि** यावद् **बोधिचित्त नमोऽस्तु ते** इत्यन्तं नासन्ध्यम् ॥

॥ द्वितीयः पटलः ॥

**अथ भगवानित्यादि ओं धर्मधातु [वज्र][1]स्वभावात्मकोऽहमित्यन्तं** नेयनीतार्थम् । **पञ्चवर्णमहारत्न**मित्यादि यावत् **स्फारयेत् स्फरणात्मक**मित्यन्तं चतुर्विधाख्यायिका ।

**आकाशधातुमध्यस्थं [2]चन्द्रमण्डलमालिखेत्**

इत्यादि यावत् **वज्रव्यूहो नाम [3]पटलमित्यन्तं** नेयनीतार्थम् ॥

॥ तृतीयः पटलः ॥

**अथेत्यादि स्तोत्रराजेनाध्येषितवन्त** इत्यन्तं यथारुतम् । **सर्वतथागतेत्यादि [4]घोषमण्डलसारथेत्यन्तं** नासन्ध्यम् । **अथ वज्रधरेत्यादि मण्डलाकृतिमि**त्यन्तं यथारुतम् । **अथातः संप्रवक्ष्यामीत्यादि** यावत् **सर्वतथागतचित्तमण्डलमित्यन्तं** नेयनीतार्थम् ॥

॥ चतुर्थः पटलः ॥

**अथेत्यादि भाषते चर्यलक्षण**मित्यन्तं यथारुतम् । **निर्विकल्पार्थसंभूता**मित्यादि **[5]महायानमनुत्तरमित्यन्तं** नासन्ध्यम् । **चण्डालेत्यादि**

**आचार्यनिन्दनपरा नैव सिध्यन्ति साधने**

इत्यन्तं यथारुतम् । **प्राणातिपातिन** इत्यादि **भव्यास्ते खलु साधन** इत्यन्तं सन्ध्याभाषा । **मातृभगिनीत्यादि निर्विकल्पस्य धीमत** इत्यन्तं नेयनीतार्थम् ।

---

१. °वज्र° om MS २. वज्रमण्डल° M ३. समाधिपटल° M ४. °मण्डलमुत्तमम् MS ५. अग्रयाने ह्यनुत्तरे M

**अथ खल्वित्यादि एषा बोधिचरीपद**मित्यन्तं यथारुतम्। **अथ खल्वनभि-लाप्येत्यादि मूर्च्छिता अभूवन्नि**त्यन्तं नेयनीतार्थम्। **अथ भगवन्त** इत्यादि **स्वेषु स्वेष्वासनेषु स्थिता अभूवन्नि**त्यन्तं नेयनीतार्थम्। अथेत्यादि **समन्त-चर्याग्रपटल**मित्यन्तं नासन्ध्यम्॥

॥ पञ्चमः पटलः॥

अथेत्यादि **मन्त्रलक्षणलक्षित**मित्यन्तं नेयनीतार्थम्। **अथ भगवा**नित्यादि **कायवाक्चित्तलक्षित**मित्यन्तं सन्ध्यायभाषा। **अथ वज्रधरः श्रीमा**नित्यादि **काय**[१]**वाक्चित्तलक्षित**मित्यन्तं नेयनीतार्थम्।

॥ षष्ठः पटलः॥

**अथ भगवा**नित्यादि **सेवयन्नाशु सिध्यती**त्यन्तं यथारुतम्। **भिक्षाशिने**त्यादि **सर्वकामोपभोगकृ**दित्यन्तं नेयनीतार्थम्। **बुद्धास्त**[२] इत्यादि **सर्वकामोपसेवनै-**रित्यन्तं चतुर्विधाख्यायिका। **बुद्धानुस्मृतिसंयोगै**(?)रित्यादि **बोधिमाप्नुया-**दित्यन्तं सन्ध्याभाषा। **षोडशाब्दिका**मित्यादि **मनोरमा**मित्यन्तं नासन्ध्यम्। **बुद्धानुस्मृती**त्यादि **मण्डलाकार**मित्यन्तं सन्ध्याभाषा। **तत् कथ**मित्यादि **ममापि तादृशं भवे**दित्यन्तं यथारुतम्। **तत्र कथ**मित्यादि **सुतरां सिद्धि-माप्नुया**दित्यन्तं सन्ध्याभाषा। **तत्र कथ**मित्यादि **सुनिर्मलमित्यन्तं** नासन्ध्यम्। तत्र कथमित्यादि **चर्यापटल**मित्यन्तं यथारुतम्॥

॥ सप्तमः पटलः॥

**अथ भगवा**नित्यादि **देशपूजां जिनोत्तम** इत्यन्तं यथारुतम्। **रागद्वेष-महामोहे**त्यादि **वज्रयान नमोऽस्तु त** इत्यन्तं नेयनीतार्थम्। **अथे**त्यादि **वज्ररत्नधृ**गित्यन्तं नासन्ध्यम्। **पूजा**मित्यादि तिर्यग्भ्योऽपि प्रकल्पयेदित्यन्तं सन्ध्याभाषा। **शुचा**वित्यादि पूजां मेघां स्फरेद् बुधः इत्यन्तं यथारुतम्। **पद्म**मित्यादि प्रपूजयेदित्यन्तं नेयनीतार्थम्। **योजनशत** इत्यादि [३]रहस्यवज्र-ज्ञानमित्यन्तं यथारुतम्।

---

१. °चिन्तलक्षितम् M २. बुद्धाश्च M ३. रहस्यं ज्ञानवज्रिणाम् MS

॥ अष्टमः पटलः ॥

**अथ वज्रधर** इत्यादि **बुद्धज्ञानिनामित्यन्तं** यथारुतम् । **आकाशधातु-मध्यस्थमित्यादि वज्रव्यूह** इत्यन्तं नेयनीतार्थम् । **अथ खल्वित्यादि शुद्ध-तत्त्वार्थसमय** इत्यन्तं सन्ध्याभाषा ॥

॥ नवमः पटलः ॥

**अथ भगवानित्यादि समता न क्वचित् स्थितमित्यन्तं** नासन्ध्यम् । अथ भगवानित्यादि **तदन्तं तस्य जीवितमित्यन्तं** यथारुतम् । **अथ वज्रधरो** राजेत्यादि [1]**बोधिचित्तजिनोदधिरित्यन्तं** सन्ध्याभाषा ॥

॥दशमः पटलः ॥

**अथ** भगवानित्यादि **समयवज्रो नाम समाधिरित्यन्तं** यथारुतम् । **महावज्रधरमित्यादि चन्द्रवज्रो नाम समाधिरित्यन्तं** सन्ध्याभाषा । **खधातु-मध्यगतमित्यादि संबोधिवज्रो नाम समाधिरित्यन्तं** नासन्ध्यम् । **पर्वते-ष्वित्यादि** ध्यानसमुच्चयमित्यन्तं नेयनीतार्थम् । **अक्षोभ्येत्यादि समयाभिज्ञ** इत्यन्तं यथारुतम् । **पञ्चशूलमित्यादि विद्यापुरुषपटल** इत्यन्तं सन्ध्याभाषा ॥

॥ एकादशः पटलः ॥

**अथ वज्रधर** इत्यादि **नाटकोऽयं** [2]**विभाव्यते** इत्यन्तं नासन्ध्यम् । **महाटवीत्यादि सर्वसिद्धिसमुच्चयमित्यन्तं** नेयनीतार्थम् । **कायवाक्चित्तेत्यादि मञ्जुवज्रसमप्रभ** इत्यन्तं सन्ध्याभाषा । **स्वमन्त्रेणेत्यादि सिध्यन्ते ज्ञान-वज्रिण** इत्यन्तं यथारुतम् । **सेवाज्ञानामृतेनेत्यादि मन्त्रतत्त्वार्थसाधक** इत्यन्तं सन्ध्याभाषा । **महाटवीत्यादि सिद्धिं समश्नुत** इत्यन्तं नेयनीतार्थम् । **चतुःसन्ध्येत्यादि** दिनभेदप्रचोदनैरित्यन्तं यथारुतम् । पक्षाभ्यन्तरतः सिद्धिरुक्ता गुह्याग्रसंभवैः इति सन्ध्याभाषा । **तत्रेदमित्यादि** साधनाग्रनिर्देशपटल इत्यन्तं यथारुतम् ॥

---

१. बोधिसत्त्वो MS २. प्रभाव्यते M

॥ द्वादशः पटलः ॥

**अथ भगवन्त** इत्यादि **वज्रघोषमुदीरयन्नित्यन्तं** यथारुतम् । **अहो-बुद्धनय** इत्यादि **मन्त्रनयं दृढमित्यन्तं** सन्ध्याभाषा । **अनुत्पन्नमित्यादि ज्ञानोत्पादः प्रमीयत** इत्यन्तं नासन्ध्यम् ।

भाषस्व भगवन् रम्यं सर्वमन्त्रसमुच्चयम् इत्यादि **जापो नपुंसकैरि-त्युच्यते**[1] इत्यन्तं सन्ध्याभाषा। **वज्राधिपतय** इत्यादि **सेव्यमानैर्यथेप्सत**[2] इत्यन्तं यथारुतम् । **मोहसमयेत्यादि साधकस्याग्रधर्मिण** इत्यन्तं नेयनीतार्थम् । **हृदि मध्यगतं वज्रमित्यादि बोधिरक्षार्थमुच्यते** इत्यन्तं यथारुतम् । **खवज्र-मध्यगतमित्यादि वज्ररत्नमन्त्रप्रद्योतको नाम समाधिरित्यन्तं** सन्ध्याभाषा । **सर्वाकार** इत्यादि जलस्योपरि चङ्क्रमेदित्यन्तं यथारुतम् । [3]**समयादेत्यादि** वज्रोदधिपदाक्रान्तो नाम समाधिरित्यन्तं सन्ध्याभाषा। **माहेन्द्रमण्डलमित्यादि** यावद् वज्रसुम्भप्रभावनो नाम समाधिरित्यन्तं यथारुतम् । **निरोधक्रोध-वज्रेणेत्यादि सिध्यन्ते** वज्रमण्डलादित्यन्तं नेयनीतार्थम् ।

॥ त्रयोदशः पटलः ॥

चतुर्दशपटले मालामन्त्राणि कर्मप्रसराणि च यथारुतानि । अन्तरान्तरे कानिचित् सन्ध्याभाषितानि । तथैव पञ्चदशे पटले च सप्तदशपटले च वज्रपदानि कानिचित् सन्ध्याभाषितानि कानिचित् नासन्ध्याभाषितानि कानिचिद् यथारुतानि कानिचिन्नरुतानि । कानिचिन्नेयनीतार्थानीति ।

एषां षट्कोटिपदानां सूत्रं निर्दिष्टं भगवता **व्याख्यातन्त्रे**

सन्ध्याचभाषा न च सन्ध्याभाषं
नेयार्थमर्थं न च नेयमर्थम् ।
यथारुतं नैव यथारुतं च
षट्कोटिकायं खलु योगतन्त्रे ॥

**इति । अनेन** क्रमेण **विजहारपदमारभ्य** षट्कोटिपदाख्यानेन चतुर्विधा-ख्यानेन च **श्रीसमाजार्थो** मुद्रितः । तमनधिगम्य यथारुतशब्दार्थमाश्रित्य

१. नपुंसक उच्यते M २. °थेच्छत M ३. समयोदक° M

विषयासक्तसत्त्वा विरुद्धा ह्यद्भुतकारणाद्वेलां कृत्वा कर्मवशगा भवन्ति। यथोक्तं **भगवता सन्ध्याव्याकरणव्याख्यातन्त्रे,**

इदं नयोत्तमं प्राप्य गुह्यकाधिपतिर्बुधाः।
उत्तानार्थं समासाद्य ते चोन्मार्गे पतन्ति हि॥
योगिनो वयमित्येवं वदन्ति प्रहर्षान्विताः।
अभिमानरता नित्यं मायाकृतकधर्मणः॥
समाजं ते न जानन्ति कुर्वन्ति समयादिकम्।
न रक्षयन्ति गुह्यं ते प्रकाशयन्ति सर्वतः॥
साक्षाद्बुद्धवदाचार्यमिन्द्रं ते पर्युपास्य च।
क्षणाद् द्वेषं प्रकुर्वन्ति तथैवानुनयं क्षणात्॥
अगम्यं चैव गच्छन्ति मातरं भगिनीं सुत[ाम्]।
मातापितृवधं चैव तथान्यप्राणिघातकम्॥
मृषा वादं वदन्त्येव चौर्यं चैव विशेषतः।
परदारांश्च गच्छन्ति कुर्वन्त्यन्यच्च गर्हितम्॥
समाधिं ते न जानन्ति तथताज्ञानसंभवम्।
स्वल्पमात्रेण दोषेण कुर्वन्त्यप्यभिचारकम्॥
योगप्रयोगहीनाश्च न च सिध्यन्ति मन्त्रिणः।
वाह्यशास्त्ररता नित्यं तत्प्रयोगैकनैपुनाः॥
स्वसमयं परित्यज्य भवन्त्येव निरङ्कुशाः।
मन्त्रमुद्राप्रयोगेण जीविकां कल्पयन्ति ते॥
व्याख्यानं च करिष्यन्ति यत्र लब्धिर्भविष्यति।
एतेषां संग्रहं कर्तुं गुह्यं सन्ध्यायभाषितम्॥इति॥

एवं पिण्डार्थं निर्दिश्येदानीमवयवार्थविभक्तये तन्त्रमवतार्यते। अत्र **सङ्गीति[कृ]दार्यवज्रपाणिर्यथाश्रुतं** चेतस्यारोप्य विनेयानां दर्शयन्नाह—**एवं मयेत्यादि।** एवमिति सकलतन्त्रार्थसूचकोऽयं निपातः। मयेति साक्षात् परम्परया वा श्रुतं नाधिगतम्। **एकस्मिन् समये** एकस्मिन् काले एतत् श्रुतम्। अन्यदा अन्यत् श्रुतम्। अथवा अन्यदा एतत् न श्रुतम्। अथवा एकस्मिन् समये एकस्मिन् क्षणे इत्येभिस्त्रिभिरात्मनो बाहुश्रुत्यं तन्त्रदुर्लभत्वं

प्रज्ञाप्रकर्षं च प्रकाशयति। कुतः कुत्र कैः सह श्रुतमिति निदानं निर्दिशन्नाह— **भगवानित्यादि**। देशकसम्पदं दर्शयति, भाग्यसम्पन्नत्वादशेषविपक्षभञ्जनाच्च भगवान्। **सर्वतथागत** इत्यादिना स्थानसम्पदं दर्शयति। तथतां गतस्तथागतः। सर्वश्चासौ तथागतश्चेति सर्वतथागतः। स एव सर्वतथागतात्मकत्वात्। अतः सर्वतथागतश्च कायवाक्चित्तहृदयश्च सर्वतथागतकायवाक्चित्तहृदयो महावज्रधरः। तस्य वज्रयोषित् प्रज्ञा। सैव भगं क्लेशभञ्जनात् तस्मिन् विजहार विहृतवानिति। एतदुक्तं भवति। तथताचन्द्रबीजचिन्हकायक्रमेण निष्पन्नो भगवान् चन्द्रमण्डलोपरि यथोक्तकूटागारोदरे निष्पन्न इत्यक्षरार्थः सत्त्वव्याख्या। अत्राह। केन प्रयोजनेन संगीतिकारेण सर्वतथागतप्रवचनेषु एवं मयेति निर्दिश्यते? एतन्मया इदं भयेत्येवमाद्यपि वक्तुं शक्यत एव। उच्यते। सर्वताथागतसङ्केतकं प्रज्ञोपायसूचकमेव प्रवचनादौ निश्चयेन पठ्यते। आह। यद्येवम्, सङ्गीतिकारेणात्र न भवितव्यम्, मयेत्यादिपदैः संबन्धाभावात्। आह। सत्यमेवैतत्, सङ्गीतिकारोऽत्र न विद्यते। आह। '**भदन्तानन्द**प्रभृतयः सङ्गीतिकाराः किमर्थं लोके संदृश्यन्ते? आह। आनन्दोऽत्र समन्तभद्रो महाबोधिसत्त्वः वज्रपाणिः पुनर्नान्यो महावज्रधर एव। अन्यथा सूत्रान्तादिचतुरशीतिमित्येतत्साहस्रं धर्मस्कन्धं वज्रयानं च तथागतसकाशात् श्रुत्वा अन्यूनमनधिकं सकृद् ग्रहीतुं कः समर्थः? उक्तमेवैतद् **भगवता असाधारणगुह्यमहायोगतन्त्रे** अथापरं सर्वज्ञपरिवारसम्पत्ति प्रवक्ष्यामि। तद् यथा। **शुद्धोदनमहाराजो** मञ्जुश्रीर्भवति। **महामायादेवी** लोकेश्वरो भवति। **यशोधरा** श्रीदेवी। **राहुलो** वज्रसत्त्वः, **सारद्वतीपुत्रः** सर्वनिवरणविष्कम्भी भवति। **आर्यानन्दः** स्थविरः समन्तभद्रो भवति। **देवदत्तस्थविरो** देवेन्द्रः। **श्रीशाक्यमुनिः** सम्यक्संबुद्धो महावैरोचनो भवति। अनेन न्यायेन सङ्गीतिकार इति। पर्षदिति। आदिकर्मिकसत्त्वावतारणाय बुद्धनाटकोऽयं प्रदर्शितः। अत्र आह।

न बुद्धः परिनिर्वाति न च धर्मोऽन्तर्धीयते।
सत्त्वानां विनयार्थाय निर्वाणमुपदर्शितम्॥इति॥

आह।..........एवमित्यक्षरद्वयं प्रज्ञोपायात्मकम्। एतच्च कथं ज्ञायते? आह। उक्तं **भगवता देवेन्द्रपरिपृच्छायाम्**। शक्र आह

किमर्थमेवमित्येतत् कस्मादादौ प्रयुज्यते।
किमिदं सौगतं वाक्यं किंवा श्रावकभाषितम्॥

एतन्मे संशयं सर्वमपनेतु भवान्तकः ॥
श्रुत्वा वाक्यं सुरपतेस्तद्धर्मगुणभावितम् ।
साधुकारं ततो दत्त्वा भगवानिदमब्रवीत् ॥
आदावेव मिति प्रोक्तं यदर्थं सर्वदर्शिना ।
तत् शृणु त्वं सुरपते यथावदनुपूर्वशः ॥
धर्मस्कन्धसहस्राणां चतुरशीति संख्यया ।
सर्वाश्रयं पिता माता द्व्यक्षरं कथितं तथा ॥
एकारस्तु भवेन्माता वकारस्तु पिता स्मृतः ।
विन्दुस्तत्र भवेद् योगः स योगः परमाद्भुतः ॥
एकारः पद्ममित्युक्तं वकारो वज्रमेव च ।
विन्दुस्तत्र भवेद् बीजं तत्प्रसूतं जगत्त्रयम् ॥
एकारस्तु भवेत् प्रज्ञा वकारः सुरताधिपः ।
विन्दुश्चानाहतं तत्त्वं तज्जातान्यक्षराणि च ॥
यो विजानाति तत्त्वज्ञो धर्ममुद्राक्षरद्वयम् ।
स भवेत् सर्वसत्त्वानां धर्मचक्रप्रवर्तकः ॥
योऽविदित्वा पठेन्नित्यमक्षरद्वितयं जनः ।
स वाह्यो बुद्धधर्माणां ध्वनिवद् भोगवर्जितः ॥
एवं द्विरक्षरं माया सर्वज्ञोऽत्र व्यवस्थितः ।
आदौ सद्धर्मशास्त्राणां तदेवं प्रतिगीयते ॥
तस्मात् सुराधिपः शक्र यदीच्छेत् शाश्वतं पदम् ।
सद्धर्मो गुरु कर्तव्यः स्मर माया द्विरक्षरम् ॥इति ॥

मयेत्यादि वज्रपदानामप्यर्थो व्याख्यातन्त्रात् अवतार्यते ।

मया श्रुतमिति प्रोक्तं चक्रवर्तिस्वरूपिणा ।
बीजरूपेण यत् स्पृष्टं देवताचक्रमुत्तमम् ॥
परमानन्दकालोऽसौ एकः समय उच्यते ।
अष्टैश्वर्येण भगवान् सदा सुखपदे स्थितः ॥
सर्वतथागताः प्रोक्ताः पञ्चस्कन्धा जिनैरिह ।
तदात्मकायवाक्चित्तो हृद्वज्रोऽसौ महासुखः ॥

योषित्सु संस्कृता मुद्रा भगं पद्मं सुसंस्कृतम् ।
विजहारस्थितस्तत्र विन्दुरूपेण वज्रधृक् ॥

अत्रोच्यते ।

कलाद्वितीयं नवमेन चोक्तं
त्रिशद्दशा पञ्चममेव बीजम् ।
कलाद्वयं पञ्चमषष्ठभिन्नं
विनिर्गतं विन्दुमिमं वदन्ति ॥

इति समस्ताङ्गं सद्रव्याख्यं........................... ॥

॥ए॥ एका चापि सती प्रज्ञा विरागादिक्षणात्मिका ।
एतन्मूलं विनिर्दिष्टं परिज्ञानं भवत्रये ॥
॥वं॥ वंशस्तम्भवदाभाति रागादिप्रसवान्वितम् ।
आलोकाभासविज्ञानमुपायमिति संज्ञितम् ॥
॥म॥ महाविद्या स्वयं मूलं अविद्याया विलोमतः ।
अविद्याया भवेच्चैतत् तस्मादालोकसंभवः ॥
॥या॥ याति विज्ञानमादौ तदालोकाभाससंज्ञितम् ।
तन्महाशून्यतां याति सा च याति प्रभास्वरम् ॥
॥श्रु॥ श्रुतं यदिह विज्ञानमाभासत्रयलक्षणम् ।
प्रकृतीनामिदं मूलं सत्त्वधातोरशेषतः ॥
॥तं॥ तमेकैकमर्थाभासं वायुः संगृह्य धारयेत् ।
वायुयुक्तं च विज्ञानं शश्वज्जगति वर्तते ॥
॥ए॥ एष वायुर्महाधातुर्विज्ञानत्रयवाहनः ।
तेभ्यः प्रकृतयः शश्वन्निर्गच्छन्ति यथायथम् ॥
॥क॥ कःखटाद् धातुरूपश्च तेजोवायुस्तथैव च ।
उपादाय तु विज्ञानं जायते त्रिभवालये ॥
॥स्मिन्॥ अस्मिश्च पञ्च संभूताः स्कन्धाः संस्कृतिलक्षणाः ।
रूपविन्नामसंस्कारा विज्ञानं चैव पञ्चमम् ॥
॥स॥ समता प्रत्यवेक्षा च कृत्नानुष्ठानमेव च । य
आदर्शो धर्मधातुश्च अस्मिन् विज्ञानपञ्चकम् ॥

।।म।। मन आयतने चैव लोचने श्रवणे यथा ।
घ्राणं जिह्वा ततः काय इत्यायतनसंभवः ।।

।।ये।। ये वै त्रैधातुके सत्ता प्राणायामसमाश्रिताः ।
मन्त्रराजं जपन्त्यज्ञा ध्यानाध्ययनवर्जिताः ।।

।।भ।। भवन्त्यस्मिन् प्रकृतयो रागारागादिकाः पुनः ।
ताभ्यः शुभाशुभं कर्म ततो जन्मसमुद्भवः ।।

।।ग।। गतिः संभवति स्कन्धाः पञ्चबुद्धात्मकः पुनः ।
पञ्चाकाराभिसंबोधेरिति नाम प्रचोदितः ।।

।।वान्।। वायुस्तेजोजलमुर्वी लोचनादि चतुष्टयम् ।
ज्ञानत्रयात्मकं ज्ञेयं बुद्धो बोधिप्रदायकः ।।

।।स।। स च तथागतः कायाच्चतुर्मुद्रा समादृतः ।
चक्षुराद्यात्मना तत्र क्षितिगर्भादि जिनौरसाः ।।

।।र्वं।। अर्वन्ति ये तु दुष्टा वै क्रोधराजमहाबलाः ।
तां दिग्विदिक्षु भावेषु भुजाद्यङ्गेषु लक्षयेत् ।।

।।त।। तत्तद्देशसमुद्भूता देवा देव्यः पृथग्विधाः ।
न ते सन्ति न ताः सन्ति सत्त्वार्थं प्रतिदर्शिताः ।।

।।था।। स्थातव्यं विषयेष्वस्माद् योगिनाद्वयदर्शिना ।
हीनमध्यप्रणीतेषु ज्ञानत्रयनिदर्शनात् ।।

।।ग।। गच्छन्त्ये[वें]न्द्रियं तत्तत् स्वयं स्वविषयं प्रति ।
आभासमात्रकं तत्तद् यद्यदिन्द्रियगोचरम् ।।

।।त।। तत्तदिन्द्रियमार्गेण विषयं प्राप्य साधकः ।
तथागतेभ्यः सकलं प्रीणनाय निवेदयेत् ।।

।।का।। कायत्रयं समुद्दिष्टं पृथग्भावेन तायिना ।
एकाकारं पुनर्याति निष्पन्नक्रमयोगतः ।।

।।य।। यत्सत्यं संवृतेः प्रोक्तं बुद्धानां कायलक्षणम् ।
स एष निष्पन्नयोगः स्यात् प्रभास्वरविशुद्धितः ।।

।।वाक्।। वाक्पथस्यैव विषयः कायो ज्ञानमयः प्रभुः ।
सर्वसत्त्वहितार्थाय दृश्यते शक्रचापवत् ।।

।।चि।। चित्तं चैतसिका विद्या प्रज्ञोपायोपलब्धिकम् ।
शून्यातिशून्यमहाशून्यमिति चापि प्रगीयते ।।
।।त्त।। ततश्चर्यां प्रकुर्वीत प्रकृत्याभासभेदवित् ।
कर्मभेदं परित्यज्य वज्रदेहत्वमाप्नुयात् ।।
।।हृ।। हृदि कृत्वार्थचर्यां वै लौकिकीं स तथागतः ।
निर्माय सांवृतं कायं कामान् भुङ्क्ते यथायथम् ।।
।।द।। ददाति प्रार्थितं सर्वं चिन्तामणिरिवापरः ।
हठादाहृत्य भुङ्क्ते च बुद्धानामपि सम्पदः ।।
।।य।। यद् यदिच्छति योगेन्द्रस्तत्तत् कुर्यादनावृतः ।
असमाहितयोगेन नित्यमेव समाहितः ।।
।।व।। वज्रपद्म—समायोगाज् ज्ञानत्रयविभागवित् ।
लिप्तालिप्तमतिस्तत्र सुखेन विहरेत् सदा ।।
।।ज्र।। जृम्भते सर्वभावात्मा मायोपमसमाधिना ।
करोति बुद्धकृत्यानि संप्रदायपदे स्थितः ।।
।।यो।। योगश्चैवातियोगश्च महायोगः स्वयं भवेत् ।
वज्रीव डाकिनी चैव तयोर्योगश्च यः स्वयम् ।।
।।षित्।। निषिद्धमपि कृत्वा वै कृत्याकृत्यविवर्जितः ।
न लिप्यते स्वभावज्ञः पद्मपत्रमिवाम्भसा ।।
।।भ।। भवत्यष्टगुणैश्वर्यैरुपेतः सर्ववित् स्वयम् । २४
विचरेज्—ज्ञानदेहेन लोकधातुरशेषतः ।।
।।गे।। गेहस्तस्याम्वरं चैव यत्र संचरते प्रभुः ।
तत्रैव रमते नित्यं महासुखसमाधिना ।।
।।षु।। एष्वेवाभासभेदेषु सन्ध्यारात्रिदिनेषु च ।
व्यवहारः कृतौ लोके ज्ञानत्रयनिदर्शनात् ।।
।।वि।। विचित्रव्यवहाराश्च लोकिकैः परिकल्पिताः ।
अर्थत्रयविभागेन ज्ञानत्रयसमुद्भवाः ।।
।।ज।। जन्म च स्थितिभङ्गेन अन्तराभवसंस्थितिः ।
यावन्त्यः कल्पना लोके चित्तवायुविजृम्भितम् ।।

।।हा।। हास्यलास्यक्रियाश्चैव नवनाटचरसान्विताः ।
मुद्रामन्त्रविकल्पाश्च वज्रसत्त्वविचेष्टितम् ।।
।।र।। रत्नमन्यन्न चास्तीह स्वाधिष्ठानादृते महत् ।
प्रभास्वरविशुद्धं चेद् वह्निशुद्धो मणिर्यथा ।।
विजहारपदं त्यक्तं श्रीसमाजपरिस्फुटम् ।
आख्यातं मञ्जुघोषेण वज्रमालानुसारतः ।।इति।।

गर्भी । पुनरपरार्थव्याख्यानमाह ।

एवं मया श्रुतं तत्त्वमेकस्मिन् समये स्फुटम् ।
भगवान् गुह्यवज्रेशस्त्रिवज्रसमयोत्तम ।।
सर्वताथागते ज्ञाने अचिन्त्यगुणसम्पदि ।
सदसद्भूतयातीते अस्थानस्थितिसंज्ञिनि ।।
आकाशैकस्वभावेऽस्मिन् सर्वज्ञज्ञानभाविनि ।
जगद्वृत्तिविशुद्धाख्ये विजहार महामुनिः ।। कोलिकम् ।।

शिष्यव्याख्या ।। एवं विजहारपदेनैव सकलतन्त्राभिप्रायं निर्दिश्य तदनन्तरं पर्षत्सम्पदं दर्शयति । **अनभिलाप्येत्यादि** । अनभिलाप्या गणनासमतिक्रान्ताः । पुनरनभिलाप्या रूपगुणादिभिर्वाग्गोचरातीतत्वात् । एषामप्रमेयत्वमेव दर्शितम् । **बुद्धक्षेत्रपरमाणुरजःसमैरिति** । अनन्तबुद्धक्षेत्रसमष्टि(?)परमाणुवत् प्रमाणैरिति यावत् । यैर्देवताचक्रं परिपूर्यते, तन्मात्रमेवोदाहरणमाह । तद्यथा । **समयवज्रेणेत्यादि** समयवज्रोऽमोघसिद्धिः । अत्र पुनस्तत्त्वलीनः । सर्वनिवरणविष्कम्भी समयवज्रशब्देन विवक्षितः । एवं कायवज्रं क्षितिगर्भः । वाग्वज्रो लोकेश्वरः । चित्तवज्रो वज्रपाणिः । समाधिवज्र आकाशगर्भः । जयवज्रो मैत्रेयः । पृथिवीवज्रो लोचना अब्वज्रो मामकी । तेजोवज्रः पाण्डरवासिनी । वायुवज्रः समयतारा । आकाशवज्रो मञ्जुश्रीः । रूपवज्रो रूपविषयः । शब्दवज्रः शब्दविषयः । गन्धवज्रो गन्धविषयः । रसवज्रो रसविषयः । स्पर्शवज्रः स्पर्शविषयः । धर्मधातुवज्रः समन्तभद्रश्चेति । न केवलं बोधिसत्त्वगणैः सार्धं विहृतवान् । अपितु तथागतैश्चेति । आह । आकाशधातुसमाख्यातैरित्यादि । एवं प्रमुखैरित्येवमादिभिः । पञ्चकुलगृहीतैराकाशधातुसमाख्यातैरिति । व्योमव्याप्तैस्तथागतैश्च विहृतवान् । गगनकुहरगततथागतानां स्थितिः

दृष्टान्तेन दर्शयितुमाह । तद्यथेत्यादि । यथा तिलशिम्बे तिलबीजानि अन्योन्यसंपृष्टान्यपरस्परपीडारूपेण स्थितानि, तथा देशनाकाले सर्वतथागता गगनं व्याप्य स्थिता भगवन्त इति भावो । नेयार्थः ।

अनभिलाप्यानभिलाप्य बुद्धक्षेत्रपरमाणुरजः समाः । तथागता बोधिसत्त्वाश्च बुद्धक्षेत्राणि च महावज्रधरस्यैवाङ्गावयवभूताः । पञ्चस्कन्धाः समासेन पञ्चबुद्धाः प्रकीर्तिताः । वज्रायतनान्येव बोधिसत्त्वाश्रयणभू[:] इत्यत्रैव निर्दिशेत् । अतः स एव भगवान् स्वकायमण्डलं विस्फार्यार्यमण्डल-चक्राकारेण विनेयजनावर्जनार्थं कूटागारमध्ये निषण्णः । नीतार्थः ।

एवं देशकस्थान पर्षत्सम्पदं संदर्श्येदानीं कामधात्ववस्थितविषयासक्तसत्त्वानां पञ्चकामगुणद्वारेण युक्तिप्रदर्शनायाह । **अथ भगवानित्यादि** । अथ इत्यानन्तर्ये । अष्टगुणैश्वर्ययोगाद् भगवान् । महांश्चासौ वैरोचनश्चेति महावैरोचनो वीतरागरूपमपनीय महावज्रधररूपमात्मानमभिनिर्माय रागेण रागप्रहाणार्थं सर्वतथागतानां महा [न्] रागो महारागः सत्त्वपावनशौचविषयेष्वासक्तिः स एव नयो यस्य समाधेः, तं समापद्य तमनन्तरोक्तं सर्वतथागतव्यूहमिति माण्डलेयान् स्वकाये प्रवेशयामासेति स्वबीजाक्षररश्म्यङ्कुशेनाकृष्य स्वकाये स्कन्धधात्वादि-स्वभावेन प्रवेशितवानित्यर्थः । **अथ ते सर्वतथागता** महावज्रधरस्य काये प्रतिष्ठा भगवतः परिपोषणार्थमिति भगवतः परमानन्दसुखेनाह्लादनार्थं स्वविम्वानि स्त्रीविम्वान्यभिनिर्मायेति पूर्वावस्थामपनीय दिव्यस्त्रीरूपमभि-निर्माय भगवतः कायान्निष्क्रान्ता निर्गतवन्तः । **तत्र केचिदित्यादि**त्यादिना तामेव दर्शयन्नाह पृथिवीधातुर्लोचनाकारेण । अब्धातुर्मामक्याकारेण । तेजोधातुः पण्डरवासिन्याकारेण । वायुधातुस्ताराकारेणास्थित[ा]ः । पुना रूपस्वभावेन वैरोचनः । शब्दस्वभावेन रत्नगुरवः । गन्धस्वभावेनामिताभः । रसस्वभावेना-मोघसिद्धिः । स्पर्शस्वभावेनाक्षोभ्य इति यावत् नेयार्थः ।।

महांश्चासौ रागश्चेति महारागो महारागधर्मः तस्य नयः । रागविराग-मध्यरागादिक्रमेण विशुद्धिः साक्षात्करणोपायः स एव यस्य समाधेः तं समाधिं समापन्नः । तं सर्वतथागतव्यूहं स्वकाये प्रवेशयामासेति । तं वाह्यतथागतव्यूहालम्वनाभिनिवेशमपनीय सर्वतथागतपरिघटितकायोऽह-मित्यधिष्ठितवान् ।

आत्मा वै सर्वबुद्धत्वं सर्वसैरित्वमेव [?] हि। स्त्व

इत्यादिवचनात् ।

अथ ते सर्वतथागता इत्यादि पूर्ववत् नीतार्थः ।

एवं धारणीमण्डलनिर्माणेन कामैश्वर्यं प्रदर्श्येदानीमस्य तन्त्रस्य चित्तप्राधान्यादक्षोभ्यस्य संग्रहमण्डलनिर्माणव्यापारं दर्शयन्नाह । **अथेत्यादि** । अधिष्ठापयामासेति यावत् । सर्वतथागतयोषिद्भगेष्विति पूर्ववत् प्रज्ञालये तदन्तर्गतचतुरस्रादिकं मण्डलं निर्मिणोति सर्वमलापगतत्वात् । विरजस्क-महासमयो महावज्रधरः तस्य मण्डलं महासमयमण्डलमधिष्ठापयामासेति निर्मित-वानित्यर्थः । **स्वच्छं तत्स्वभावमिति** । कूटागारवहिःस्थितानामपि स्फटि-कान्तर्गतरूपदर्शनवन्माण्डलेयदेवतारूपदर्शनात् । **नानारूपं समन्तादिति** । इन्द्रनीलादिविचित्रवर्णविशेषमाह । **बुद्धमेघसमाकीर्णमिति** । उत्सर्गमण्डलेय-देवताभिर्व्याप्तिम् । **स्फुलिङ्गगहनाकुलमिति** । दशदिक्क्रोधरश्मिप्रज्वलित-गहनम् । **स्वच्छादिमण्डलैर्युक्तमिति** । चन्द्रमण्डलाद्यासनानि स्वच्छादिमण्डलानि तैर्युक्तं सर्वताथागतं पुरमिति । सर्वताथागतानामिदं पुरं मण्डलमित्यर्थः ।

**अथेत्यादिना** कायवाक्चित्ताधिपतिर्महावज्रधरो ह्यनन्तरोक्तमहासमय-मण्डलमध्ये आत्मानं प्रतिष्ठापितवान् । **अथ स्वल्वित्यादि** । बोधिचित्तवज्रस्य हृदये विजहारेति पञ्चकुलप्रतिवद्धदेवताचक्रम् । पुनरपि बोधिचित्तवज्रस्य काये स्थितिं चकार इति नेयार्थः । अक्षोभ्य [:] तथागतो विज्ञानस्कन्धात्मकः । सर्वतथागता रूपस्कन्धादयः । तैर्या उषिता निलयीकृता योषित् । कासौ ? प्रज्ञापारमिता । सैव भगं योनिः बुद्धोत्पत्तिकारणत्वात् । यथोक्तं **भगवता सन्ध्याव्याकरणतन्त्रे**

सर्वबुद्धोषिता या वा भूमिः स्यात् सा त्रयोदशी ।
सा च योषित्समाख्याता तद्धर्मं भग उच्यते ।।इति ।।

तस्मिन् विरजस्कमहासमयमण्डलमात्मानं प्रतिष्ठापयामास स्थापितवान् । कीदृग्विधमित्याह, स्वच्छं स्फटिकवत् तत्स्वभावम् आभासस्वभावं नानारूपं पञ्चरश्मिसमाकीर्णत्वात् सर्वतथागतात्मकत्वाद् बुद्धमेघसमाकीर्णकिरणामल-क्रोधत्वात् । **स्फुलिङ्गगहनाकुलम्** । आलोकाद्याभासत्रयनिर्मितत्वात् । **स्वच्छादि-मण्डलैर्युक्तम्** सर्वताथागतं पुरम् महावज्रधरदेहम् । कीदृग्विधम् ? महा-समयमण्डलं प्रभास्वरं प्रवेशितवानिति यावत् ।

अथ प्रभास्वरप्रवेशादनन्तरं भगवान् महावज्रधरः सर्वतथागतकायवाक्चित्ताधिपतिः सर्वकुलात्मकमात्मानं परमार्थसत्याद् व्युत्क्रायभवनिर्वाणैकरसस्वभावेन सर्वतथागतमहासमयमण्डलमध्ये प्रतिष्ठापयामासेति । त्रैलोक्याधिपतित्वेन स्थापितवानित्यर्थः । "सर्वाकाशावकाशे श्रीवज्रसत्त्व[:] प्रतिष्ठितः" इति **सम्बरे** वचनात् ।

अथ खल्वक्षोभ्यस्तथागत इत्यादिना सत्त्वार्थक्रियां प्रति स्कन्धाद्यनुप्रवेशेन निर्माणकायग्रहणं दर्शयतीति नीतार्थः । तमर्थं द्योतयन्नाह । **अथेत्यादि** । अतीतानागतवर्तमानतथागतानां चन्द्रवज्रादिक्रमेण एकीकरणं सर्वतथागताभिभवनम् । तदर्थं वज्रं (?) तदेव नाम यस्य समाधेः तं समाधिं समापन्नः ।

**समनन्तरेत्यादि सर्वतथागतवज्रसमयसंस्थितोऽभूदिति** । महावज्र एव माण्डलेयाः संवृत्ता इत्यर्थः । तेन महावज्रधरमाण्डलेयेन किं कृतमित्याह । सर्वसत्त्वाः श्रीवज्रसत्त्वावेगेनाविष्टाः वज्रसत्त्वत्वं प्राप्ताः । अत आह सुखसौमनस्यलाभिनोऽभूवन्निति । समस्ताङ्गम् ॥

सर्वतथागताः स्कन्धादिस्वभावाः संवृतिबोधिचित्ताकारेणाभिभूयन्ते एकीक्रियन्ते येन समाधिना स एव वज्रमिवाभेद्यत्वात् । तदेव नाम यस्य समाधेः तं समापन्नः । **समनन्तरेत्यादि** । सर्वाकाशधातुरित्यत्र द्वासप्तति नाडीसहस्राणां सुशिरं सर्वतथागतानां वज्रमत्र उपायज्ञानं तन्मयं तत्स्वभावमभूत् भूतवानित्यर्थः । सर्वसत्त्वा इति स्थाण्वादयः । **वज्रसत्त्वाधिष्ठानेनेति** उपायज्ञानोदयेन सर्वतथागतसुखसौमनस्यलाभिनोऽभूवन्निति । द्वयेन्द्रियसमायोगान्महारागानलेन द्रवीभूताः परमानन्दसुखमनुभवन्त इत्यर्थः ।

**गर्भो** । सर्वतथागताः पञ्चस्कन्धाः तेषामभिभवनं परमार्थसत्ये चैकीकरणम्, तदेव वज्रमभेद्यत्वात् । तन्नामकं समाधिमापन्नः समाधिसमापन्नानन्तरमेवमाकाशधातुः । शून्यत्रयं सर्वतथागतवज्रं सर्वशून्यं तन्मयस्तत्स्वभावो भूतः । अथ यावन्त इत्यादिनापि इममेवार्थं द्योतयति **कोलिकव्याख्या** ।

इममधिमोक्षेण महावज्रधरं निष्पाद्येदानीं परिशुद्धापरिशुद्धदेवतामूर्तिं दर्शयन्नाह । अथेत्यादि सर्वतथागतकायवाक्चित्तवज्रं त्र्यक्षरम् अलङ्घ्यत्वात् । तदेव समयस्तस्यानुभवः । उद्भूताभेद्यत्वात् । वज्रं समाधिं समापन्नः । **महाविद्यापुरुषमूर्तिमिति** महाविद्यामन्त्राक्षराणि तैर्निष्पादिता पुरुषमूर्तिर्यस्य

स महाविद्यापुरुषमूर्तिः सर्वतथागतमन्त्राधिष्ठानमधिष्ठापयामासेति सर्वतथागतानां मन्त्राः ओंकारादयः तैरधिष्ठानं न्यासो यस्य स तथोक्तः । अनेनैतत् सूचितं स्यात् । साधनोक्तन्यायेन चतुर्योगक्रमेण त्रिसत्त्वपर्यन्तं यावत् सर्वमन्त्रमूर्ति महावज्रधरमात्मानमधिष्ठितवान् । सत्याधिष्ठाने किमाकारः संवृत्त इत्याह । त्रिमुखाकारेण विनेयानां दृश्यतां गतः । अत आह । सर्वलोकधातुस्थितैः संदृश्यते स्मेति नेयार्थः । सर्वतथागतकायवाक्चित्तवज्रिणः समयः प्रभास्वरः तस्मादुद्भवः उत्पादो वज्रवदभेद्यो यस्य स तथोक्तः, महा श्रेष्ठोऽप्रमेयो विद्वांश्च वीर्योत्साहक्रियात्मकः ।

अत्यद्भुतस्य कर्ता च महानित्यभिधीयते ।

महाविद्या परमार्थसत्यम्, पुरुषः संवृतिसत्यम् । ताभ्यां निष्पादिता सर्वाकारवरोपेतादियुक्ता पुरुषाकारदेवतामूर्तिः महाविद्यापुरुषमूर्तिः । महावज्रधरः **सर्वतथागतमन्त्राधिष्ठानमधिष्ठापयामासेति** । सर्वतथागतपरमाणुपरिघटितमात्मानं निष्पादितवानित्यभिप्रायः । **समनन्तर** इत्यादि पूर्ववत् नीतार्थः ।

**अथेत्यादि** । अक्षोभ्यादयस्तथागताकृष्टचित्ताः पूर्वोक्ताद् हृदयसमूहान्निष्क्रम्योदानमुदीरितवन्तः । अहो आश्चर्ये । हि शब्दो यस्मादर्थे । **बोधिचित्तप्रवर्तनमिति** । द्विविधदेवतारूपम् । विनेयानां सन्ताने प्रवर्तनं बोधिचित्तप्रवर्तनम् । सर्वतथागतानामिदं सार्वताथागतम् । गोपनीयं गुह्यम् । ऊहापगतत्वादप्रतर्क्यम् । त्रैधातुकान्निःसृतत्वादनालयमिति नासन्ध्यम् ।

इदानीमनागतविनेयानां शिष्याचार्यसंबन्धप्रतिपादनायाह । **अथेत्यानन्तर्ये** । **समाजमागम्येति** । मीलनं कृत्वा सर्वतथागतपूजास्फरणसमयतत्त्वरत्नानां समूहा मेघास्तैः संपूज्य प्रणम्य चोक्तवन्तः । नेयार्थः । सर्वतथागतरूपादयः तैः कृता[1] पूजा सर्वतथागतपूजा तस्याः स्फरणं बहुलीकरणं तदेव समयोऽलङ्घ्यत्वात् । तत्त्वरत्नानि स्त्री (? त्रि) रत्नानि तेषां मेघाः समूहास्तैः संपूज्य प्रणिपत्यैवमाह । नीतार्थः ।। भाषस्व समाजमिति संबन्धः । तत्त्वं यथाभूतम् । वज्रसारास्तथागताः तेषामेकीभावलक्षणं समुच्चयः । सर्वतथागतगुह्यमिति सर्वतथागतपरम्परायातं गुह्यं गोपनीयम् । गुह्यसंभवमिति रहस्यात्मभूतं समाजमिति । द्वयोरेकीभावः समाजम् । अक्षरार्थः । चन्द्रपद्मसमायोगं

---

१. कृत्वा MS

समाजं समस्ताङ्गम् । प्रज्ञोपायसमायोगं समाजम् । **गर्भो** । संवृतिपरमार्थ-सत्ययोर्मीलनं समाजम् । गुह्यसंभवमित्यस्यैव विशेषणम् । गुह्यं प्रभास्वरं तस्मात् संभूतमद्वयज्ञानात्मकं महावज्रधरमिति यावत् । कोलिकम् ।

अथेत्यनन्तरं योऽधिचित्तवज्रधरः सर्वतथागतानेवं वक्ति । साधु साध्वि-त्यभ्युपगमे । अभिमतार्थद्योतकत्वात् प्रश्नस्य । किं तु शब्दो वितर्के । सर्व-तथागतानामपि सन्देहकरोऽयमिति । घटमानयोगिनोऽत्र तथागताः बोधि-सत्त्वाश्च द्रष्टव्याः । न हि क्लेशवासनाप्रहीणानां बुद्धबोधिसत्त्वानां संशयोऽस्ति। तथागता अत्र रत्नपुद्गलाः परिपक्वकुशलमूलाः श्रुतिपारङ्गता बुद्धत्वाभि-लाषिणो नियतगोत्राः । गुरुवक्त्रेण विना तेषामप्यविषयः समाजार्थः ऊहापगतत्वात् । कुतोऽन्येषां बोधिसत्त्वानामिति ? चन्दनादीनां पुद्गलानाम् परिपक्वकुशलमूलानां हीनाधिमुक्तीनां प्रतिपादितेऽपि दुर्ग्राह्यत्वादनुत्साह-मावेदयति ।

एवं भगवद्वचनमुपश्रुत्य नियतगोत्रकाणां रत्नपुद्गलानामप्यविषयोऽ-यमित्याश्चर्यप्राप्ताः । किं पुनर्नियतगोत्रकाणां पुण्डरीकादीनामित्यद्भुत-प्राप्तास्ततः पुनरपि सर्वतथागता भगवन्तमेवमाहुः । यदिह यस्मादेवंगुण-विशिष्टेऽपीति रत्नपुद्गलानेव सूचयति । सन्ध्याभाषा । सर्वतथागतानां कायवाक्चित्तगुह्यं समयसंवरादि कुलत्रयपरिणामः । अक्षरार्थः । सर्वतथागतानां कायवाक्चित्तगुह्यं त्र्यक्षरं समस्ताङ्गम् । सर्वतथागतानां कायवाक्चित्तगुह्यं ज्ञानत्रयप्रकृत्याभासवायुवाहनम् । **गर्भो** । सर्वतथागतकायवाक्चित्तगुह्यं ज्ञानमयदेहः ४। कोलिकम् । सर्वतथागतवज्रसमयसंभवपदैरधिष्ठानं कृत्वा प्रकाशयत्विति संवन्धः । सर्वतथागताधिष्ठानं कायाद्यावेशः ते कृत्वा । कैः? सर्वतथागतवज्रसमयसंभवपदैः । सर्वतथागतवज्रसमयाः कायवज्रादयः तेषां संभवपदानि तदुत्पत्तिबीजाक्षराणि । समस्ताङ्गम् ।

वज्रसमयो द्वयेन्द्रियसमापत्तिः । तत्संभवपदानि । बोधिचित्तविन्दवः तैरधिष्ठानमभिषेकः तं कृत्वा ॥ **गर्भो** ॥ वज्रसमयः प्रभास्वरं तत्संभवपदानि महाशून्यातिशून्यशून्यानि तैरधिष्ठानं विनेयजनसन्ताने द्विविधदेवतामूर्ति-प्रद्योतनं कृत्वा संप्रकाशयतु भगवानिति । **कोलिकम्** ।

एवमध्येषितो भगवानध्येषणां विदित्वा तेषामभिषेकार्थं ज्ञानमण्डलं निर्मिणोति । ज्ञानमेव प्रदीपो ज्ञानप्रदीपः । अक्षरार्थः । ज्ञानप्रदीप अक्षोभ्यः सत्त्वसन्तानेषु ज्ञानालोककरत्वात् । समस्ताङ्गम् । ज्ञानमेव विज्ञानत्रयाभासं दशदिगवभासनात् । प्रदीप इव प्रदीपस्तं समाधिं समापन्नः । **गर्भी** ।। ज्ञा अवबोधने । नः प्रतिषेधे वर्तते । अवबोधाभावो यस्मिन् तज्ज्ञानम् । किं तत् ? परमार्थसत्यमनभिलाप्यम् । अशेषतेजांस्यभिभूयानन्तलोकधात्ववभासनात् तदेव प्रदीपः । अभेद्यत्वाद् वज्रम् । तन्नामकं समाधिं समापद्य । कोलिकम् । प्रभास्वरसमाधेर्व्युत्थाय पञ्चक्लेशाकीर्णसत्त्वधातुं विलोक्य क्लेशस्वभाव-परिज्ञानमेव बोधिः तत्स्वभावोऽहमिति कृत्वा विनेयानां द्वेषक्लेशविशोधनाय इदं द्वेषकुलपरमसारहृदयं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेदिति । इदमिति बुद्धिस्थम् । महाकरुणोपायक्रोधो द्वेषः । तस्य कुलं द्वेषकुलम् । आकांक्षित-फलावाहकत्वात् परमसारं हृदयमन्त्रं स्वकायादिभ्यो निश्चारयेत् समापत्तितः समुत्सृष्टवान् । यथारुतम् । वज्रधृगिति पञ्चाकाराभिसंबोधिसंसूचकम् । वज्रं धारयतीति वज्रधृक् । नेयार्थः । सत्यद्वयात्मकं वज्रज्ञानं धारयतीति वज्रधृक् । नीतार्थः ।

**अथास्मिन्नित्यादि** । निषीदयामासेति संवन्धः । स एवेति पूर्वोक्तो महावज्रधरः । कायवाक्चित्तेति त्र्यात्मको विद्यापुरुष इति । सत्यद्वयात्मकः । अक्षोभ्यमहामुद्राकृष्टसुखाद्यात्मिका । तया संयोगः एकीभावः । स एव परमपदं कृष्णसितरक्ताकारेणेति पूर्ववत् । कायवाक्चित्तवज्रे निषीदयामासेति । महावज्रधरस्य कायवाक्चित्तवज्रे निषण्णवानित्यर्थः ।। वज्रसत्त्वात् सर्गः प्रथमः ।। यथारुतम् ।।

आदियोगानन्तरमुत्सर्गमण्डलं निर्दिशति । अथ भगवान् हृदयं निश्चार-यामासेति संवन्धः । समयोद्भववज्रं नाम समाधिः । विभक्तार्थः । मूढसत्त्व-विशोधनाय शान्तरसो मोहः स एव परमपदं तस्य कुलम् । परमसारेत्यादि गतार्थम् । **जिनजिगिति** । जयनशीला जिना माराः तान् द्वादशाकारधर्म-चक्रेण जयतीति जिनजिक् । नेयार्थः । वज्रोपमसमाधिना चतुर्माराभिभवनात् जिनजिक् । नीतार्थः ।

स एव भगवान् पुरतो निषीदयामासेति संवन्धः । वैरोचनमहामुद्रया सहैकीभूय पुरत इत्यग्रतो भगवन्तमेवालोकयन् निषण्णवान् । यथारुतम् ।

**अथेत्यादि** पूर्ववत् संबन्धः । सर्वतथागतानां रत्नं संवृतिबोधिचित्तं ततः संभवतीति रत्नसंभवः । वज्रश्रीः सा एव महामुद्रा सम्पद्यस्मिन् समाधौ तमामुखीकृत्य । नेयार्थः । सर्वतथागतानां रत्नं परमार्थबोधिचित्तं तस्मात् संभवतीति रत्नसंभवः वज्रश्रीरविनश्वरश्रीः । तदेव नाम यस्य समाधेः तं समापन्नः । नीतार्थः । सर्वाशापरिपूरकत्वाच्चिन्तामणिः तस्य कुलं परमसारेत्यादि गतार्थम् । **रत्नधृगिति** । सर्वाशापरिपूरकं रत्नं धारयतीति रत्नधृक् । नेयार्थः । भूतकोटिरत्नं धारयतीति रत्नधृक् । नीतार्थः । रत्नसंभवमहामुद्रासमयसहै-कीभावः संयोगः । स एव गगनपदम् । गगनवन्निर्लेपसमताज्ञानं गगनपदमुच्यते । धनमदगर्वविश्वसत्त्वानां दाने बुद्धासनं कृत्वा मानविशुद्धिपदे संस्थाप्य भगवतो दक्षिणपार्श्वे निषण्णाः । यथारुतम् ।

एवं रागरति सत्त्वानां रागेण रागप्रहाणार्थममिताभयोगं दर्शयन्नाह । **अथेत्यादि** । तथैव संबन्धः । सर्वतथागतानां महारागः परमानन्दः । तन्निष्पन्न-बोधिचित्तं तस्मात् संभवोऽभिताभः । नेयार्थः । सर्वतथागतानां महारागः प्रभास्वरं तस्मादुद्भवोऽमिताभः । तदेव वज्रान्तमालम्ब्य । नीतार्थः । प्रत्यवेक्षणा-ज्ञानेष्वासक्तिः वज्ररागः तस्य कुलं परमसारेत्यादिर्विभक्तार्थः । **आरोलिगिति** । आ समन्ता[त्] रोः संसारः तस्माल्लिक् गच्छतीति आरोलिक् । नेयार्थः । रो इति ज्ञानत्रयं तस्मात् परमार्थसत्यं गतवानिति । नीतार्थः ।

अथेत्यादि पूर्ववत् संबन्धः । सर्वतथागतामोघो अमोघसिद्धिः । स एव समयः कृत्यानुष्ठानलक्षणसकलजगदर्थसम्पादनेनालङ्घ्यनीयत्वात् । तदेव वज्रं यस्मिन् समाधौ स तथोक्तः । नेयार्थः । अमोघसमयः प्रभास्वरः अनिमित्तफलदानात् तदेव वज्रं तमालम्बनः समाधिस्तथोक्तः । नीतार्थः । ईर्ष्याक्लेशविशोधने-नैवाकृष्य समयभ्रंशादिदोषापनयनार्थं कुलं समयाकर्षणकुलम् । नेयार्थः । समयः सूक्ष्मधातु[ः] तेनोपायज्ञानमाकृष्य परमानन्दमुत्पाद्य परिशोधनकुलं समयाकर्षणकुलम् । नीतार्थः ।

**परमसारेत्यादि** विभक्तार्थम् । **प्रज्ञाधृगिति** । प्रविचयलक्षणा प्रज्ञा । तां धारयतीति प्रज्ञाधृक् । नेयार्थः । प्रज्ञा चन्द्राभासः तां सूक्ष्मधातुना धारयतीति प्रज्ञाधृक् । नीतार्थः । उत्तरे निषण्णः । यथारुतम् ।

**द्वेष** इत्यादि। विनेयानां मोक्षाभिलाषोत्पादनं कामः। अनास्रवमहासुखं मोक्षः। नेयार्थः। कुला ह्येते काममोक्षप्रसाधका इति एते कुलाः पञ्च-स्कन्धस्वभावाः कामोपभोगेन मोक्षप्रसाधकाः। अथवा कामप्रसाधका मोक्ष प्रसाधकाश्चेति। यथारुतम्। अत आह **व्याख्यातन्त्रे**

स्कन्धा एते हि बुद्धास्यं बोध्यर्थप्रत्ययोद्भवाः।
तेऽपि तथागताः ख्यातास्तथताद्वययोगतः॥

इति। नीतार्थः। पुनर्वैरोचनादीनामुपभोगाय देवीचतुष्टयमुत्सृजति।

**अथेत्यादि** निश्चारयामासेति संबन्धः। वज्रधरानुरागणसमया मामकी तदालम्बनसमाधिं समापन्नः। यथारुतम्। **द्वेषरतीति**। द्वेषोऽक्षोभ्यस्तस्मिन् रतिः। द्वेषरतिः। नेयार्थः। द्वेषक्लेशविशुद्धे रतिः द्वेषरतिः। नीतार्थः। स एव वज्रधरो मामकीरूपो भूत्वा नैर्ऋतकोणे उपविशेत्। यथारुतम्॥

सर्वतथा[ग]तो वैरोचनः तदनुरागणवज्रा लोचना। यथारुतम्। **मोहरतीति**। मोहो वैरोचनः तस्मिन् रतिः। नेयार्थः। मोहविशुद्धे रतिर्मोहरतिः। नीतार्थः। अग्निकोणे उपविशेत्। यथारुतम्।

**अथेत्यादि**। रागधरोऽमिताभः। तदनुरागणवज्रा पाण्डरवासिनी। तदालम्बन समाधिस्तथोक्तः। यथारुतम्। **रागरतीति**। रागोऽमिताभः तस्मिन् रतिः रागरतिः। नेयार्थः। रागविशुद्धे रतिः। नीतार्थः। अथेत्यादि वायव्यकोणे उपविशेत्। यथारुतम्।

**अथेत्यादि**। कायवाक्चित्तान्यनित्यानीति परेभ्यः प्रकाशनं कायवाक्चित्त-विसंवादनम्। अक्षरार्थः। शून्याः सर्वधर्मा इत्यालम्बनं कायवाक्चित्त-विसंवादनम्। समस्ताङ्गम्। आभासत्रयस्वभावानि कायवाक्चित्तानि श्लक्ष्णधातोस्तदाभासे प्रविश्य क्षणक्षणमनुभवं कारयित्वा पुनर्निःस्वभावा-पादनं कायवाक्चित्तविसंवादनम्। **गर्भी**। स्कन्धधात्वायतनादीनां पिण्ड-ग्राहानुभेदक्रमेण निराभासीकरणं कायवाक्चित्तविसंवादनम्। अभेद्यत्वात् तद्वज्रम्। तदालम्बनं समाधिः सर्वतथागतकायवाक्चित्तविसंवादनं वज्रो नाम। **कोलिकम्**। सर्वतथागतप्रज्ञाधरोऽमोघसिद्धिः। तदनुरागणवज्रा समयतारा तदाकारा चित्तैकाग्रतां कृतवानिति यावत्। यथारुतम्। **वज्ररतीति**। वज्रोऽ-मोघसिद्धिः तस्मिन् रतिः। वज्ररतिः। नेयार्थः। वज्रज्ञाने रतिः। नीतार्थः।

**अथेत्यादि** । उत्तरे ऐशानकोणे उपविशेत् । यथारुतम् । एताश्चतुर्देव्यः सहचर्यः । ताभिः सह संयोगं कुर्वतां सर्वथागतानामग्रसम्पन्निष्पद्येत इति । अग्रमहिषी कामैश्वर्यम् । अग्रमहिषी सम्पच्छब्देनोक्तम् । यथारुतम् ।

**अथेत्यादि** । क्रोधं निश्चारयामासेति संबन्धः । वैरोचन एवाभिषेकस्वभावो वज्रं यस्य स विरोचनवज्रः तदालम्बनसमाधिः । वैरोचनवज्रो नाम सर्वतथागतमण्डलमधिष्ठीयते निष्पाद्यते येन स तथोक्तः । यथारुतम् । **यमान्तकृदिति** । यमो नरकस्तस्य भगवान् महाक्रोधसमाधिनान्तं करोति नाशयतीति यमान्तकृत् । नेयार्थः । यमो मोहान्धकारः अविद्या तस्य परमार्थसत्येनान्तं करोति नाशयतीति यमान्तकृत् । नीतार्थः ।

**अथेत्यादि** पूर्वद्वारे निषण्णवान् । यथारुतम् ।

**अथेत्यादि** । सर्वतथागतानामभिसंबोधिः रत्नसंभवः । समुकुटे वज्रो यस्यापराजितस्य क्रोधस्य तदालम्बनः । समाधेरभिसंबोधिवज्रो नाम । नेयार्थः । सर्वतथागतानामभिसंबोधिः प्रभास्वरं तदेव वज्रं तमालम्ब्य । नीतार्थः । **प्रज्ञान्तकृदिति** । प्रज्ञया क्लेशं नाशयतीति प्रज्ञान्तकृत् । नेयार्थः । विकल्पात्मिका प्रज्ञा । तस्याः प्रभास्वरप्रवेशेनान्तं करोति प्रज्ञान्तकृत् । नीतार्थः । **अथेत्यादि** । वज्रसमयैर्दुष्टसंत्रासनं वज्रसमयसंत्रासनम् । अथवा वज्रसमयालौकिकडाकिन्यः तेषां संत्रासनं वज्रसमयसंत्रासनम् । दक्षिणद्वारे निषण्णवान् । यथारुतम् ।

**अथेत्यादि** । धर्मरत्नोऽमिताभः । स एवाकरो गोत्रं यस्य हयग्रीवस्य तन्नामकं समाधिं समापद्य । नेयार्थः । धर्मरत्नं प्रभास्वरं स एवाकर उत्पत्तिस्थानं यस्य हयग्रीवस्य तदालम्बनसमाधिस्तं समापन्नः । नीतार्थः । **पद्मान्तकृदिति** । उदकालिप्तपद्मवत् क्लेशैरवलिप्तो कृत्वा तानेव नाशयतीति पद्मान्तकृत् । नेयार्थः । पद्मं योनिः । तस्मिन् द्वयेन्द्रियसमापत्त्युपायेन परमानन्दसुखं करोति उत्पादयतीति पद्मान्तकृत् । नीतार्थः ।

**अथेत्यादि** । पश्चिमे निषण्णवान् । यथारुतम् । सर्वतथागतकायवाक्चित्तो भगवानमोघसिद्धिः स एव वज्रो यस्यार्यामृतकुण्डलिक्रोधस्य तदालम्बनसमाधिस्तथोच्यते । नेयार्थः । सर्वतथागतकायवाक्चित्तवज्राणां विशुद्धिस्थानं प्रभास्वरं तदालम्ब्य । नीतार्थः । **विघ्नान्तकृदिति** । विघ्नानामन्तं विनाशं करोतीति

विघ्नान्तकृत् । नेयार्थः । विघ्नाश्चत्वारो धातवः । ते क्षयवृद्धिभ्यां शरीरपीडनाद् विघ्नाः । तेषामुपायज्ञानोदयेन विनाशं करोतीति विघ्नान्तकृत् नीतार्थः ।

**अथे**त्यादि । उत्तरे निषण्णवान् । यथारुतम् । माण्डलेयसन्तोषणाय समयसत्त्वामण्डलम् । समयसत्त्वाः सर्वविघ्नविध्वंसकत्वात् । यथारुतम् । एवं द्वारचतुष्टये न्यसेत् । पूर्वकोणादारभ्य कलादीन् न्यसेत् । पूर्वपट्टिकामारभ्य मैत्रेयादीन् न्यसेत् । गर्भमण्डलाद् वाह्ये पूर्वकोणादारभ्य रूपवज्रादीन् न्यसेत् । सर्वेषामासनादिनियमः **साधनोपयिकायां** कृत एव । अनाचार्यकं प्रवर्तनं मा भूदिति । यथैव देवतायोगो मण्डलं चान्यत्र परिपूर्णं भगवता प्रदर्शितम्, तथैवात्रापि यथाकायमण्डलं द्वात्रिंशद्देवताविन्यासं भवति, तथोत्सर्गमण्डलमपीति । कायमण्डल एव तावत् द्वात्रिंशद्देवताविन्यासेन भवितव्यमिति । कथमेतद् गम्यते ? **भगवतैव** विवृतं **व्याख्यातन्त्रे**

सामाजिकानां निःसन्दिग्धार्थमवतार्यते ।

शृणुत्वं महासत्त्व नान्यचित्तेन संस्मरेत् ।
वज्राचार्यस्य कायेऽस्मिन् क्रमः कायजिनस्थितिः ॥
प्रथमं कायवज्रेण रूपस्कन्धेन संस्थितः ।
अनुरागणवज्रेण वेदनास्कन्धेन संस्थितः ॥
वाग्वज्रेण भगवान् संज्ञास्कन्धेन संस्थितः ।
सर्वप्रजनवज्रेण संस्कारस्कन्धेन संस्थितः ॥
चित्तवज्रेण भगवान् विज्ञानयन्त्रसंस्थितौ ॥
मांसादि पृथिवीधातुर्भगवती लोचना स्थिता ।
शोणितादिर्जलधातुर्भगवती मामकी स्थिता ॥
उष्णादितेजोधातुर्भगवती पाण्डरवासिनी स्थिता ।
प्रेरणादिमरुद्धा तुस्तारा भगवती स्थिता ॥
नेत्रद्वयेन्द्रियं तस्य क्षितिगर्भस्तथागतः ।
श्रोत्रद्वयेन्द्रियं तस्य वज्रपाणिस्तथागतः ॥
घ्राणस्थितेन्द्रियं तस्य गगनगञ्जस्तथागतः ।
जिह्वास्थितमिन्द्रियं तस्य लोकेश्वरस्तथागतः ॥

मनसि स्थितमिन्द्रियं तस्य मञ्जुघोषस्तथागतः ।
चतुर्धातुमयं पिण्डं शरीरं तु संज्ञितम् ॥
सर्वनिवरणविष्कम्भितस्तथागतस्तत्र तिष्ठति ।
सर्वसन्धिशरीरस्य समन्तभद्रस्तथागतः ॥
सर्वस्नायुशरीरस्य मैत्रेयस्तथागतः ।
दक्षिणे भुजमूले तु यमान्तकस्तथागतः ॥
वामे च भुजमूले तु अपराजितस्तथागतः ॥
मुखपद्मे संतिष्ठतौ हयग्रीवस्तथागतः ।
गुह्यप्रदेशे तिष्ठति अमृतकुण्डलिस्तथागतः ॥
दक्षिणबाहौ तिष्ठति अचलोऽसौ तथागतः ।
वामवाहौ तिष्ठति टक्किराजस्तथागतः ॥
दक्षिणजानौ च तिष्ठति नीलदण्डस्तथागतः ।
वामे जानौ च तिष्ठति महावलतथागतः ॥
स्वशीर्षमूर्ध्नि तिष्ठति चक्रवर्ती तथागतः ।
अधः पादे च तिष्ठति सुम्भराजस्तथागतः ॥
समस्ताश्चैव कायेऽस्मिन् सर्वतथागताः स्थिताः ।
कायमण्डलमित्युक्तं वज्राचार्यस्य कायिकम् ॥
एते सकलसंबुद्धा समस्ता वुद्धकायिकाः ।
प्रवेशयन्ति निर्वाणं वज्री संस्कृतदेशनम् ॥
शीघ्रं निर्वासि भगवं परिपक्वकुशलो भव ।
तस्माद् वज्रगुरोः काये जिनाः सर्वे प्रतिष्ठिताः ॥
पश्चात्कालं महासत्त्व शृणु हे अमोघदर्शक ।
सदा च सर्वसत्त्वैश्च गुरुः सेव्यः प्रयत्नतः ॥
तथामोघदर्शना महाबोधिसत्त्वा महायशाः ।
तुष्टाः प्रमुदिता हृष्टाः प्रणम्याग्रपतिताः ॥

इत्याह **वज्रमाल[ा]याम्** । अनेन न्यायेन लेख्यमण्डलेऽपि द्वात्रिंशद्देवताविन्यासः कर्तव्य इति ।

निदानमधिकृत्यापि योऽर्थः संदर्शितो भवेत् ।
उक्तस्तत्रैव तन्त्रार्थः शेषः प्रासङ्गिको भवेत् ॥ इति ॥

सर्वतथागतकायवाक्चित्तरहस्ये गुह्यसमाजे सर्वतथागतमण्डलाधिष्ठान-पटल इति। कायवाक्चित्तरहस्यमालोक्याधिगम्य कृतेऽस्मिन् गुह्यसमाजे समाधिमण्डलाधिष्ठानं यस्मिन् स तथोक्तः। सर्वतथागतपटलः। पटो यथा दंशमशकाद्युपद्रवं निवारयति, तथायं तन्त्रार्थः क्लेशकर्मजन्माद्युपद्रवनिवारणात् पट इव पटः। तं लाति गृह्णातीति तद्धारको ग्रन्थसमूहः पटलः॥

॥ प्रदीपोद्योतनटीकायां प्रथमपटले षट्कोटिव्याख्या ॥

---

## ॥ द्वितीयः पटलः ॥

एवं प्रथमपटलेन सर्वं सम्पाद्य निष्पन्नक्रमद्योतनाय द्वितीयं बोधिचित्तपटलमाह । **अथेत्यादि** । भगवन्तं प्रणिपत्यैवमाहुरिति संवन्धः । कायवाक्चित्ताधिपतिर्महावज्रधरः । तस्य पूजां कृत्वा प्रणम्य च भगवन्तमध्येषयन्ति । भाषस्व बोधिचित्तमनुत्तरमिति संवन्धः । सर्वावरणविमुक्तत्वात् । सारं कायवाक्चित्तत्रयाणामभेदरूपत्वादुत्कृष्टम्, कारणे कार्योपचारात् । क्रियादिनयाश्रितेष्वप्रकाश्यत्वात् गुह्यम् । अतएवानुत्तरम् ।

अथ भगवान् बोधिसत्त्वानेवमाहेति संवन्धः । चेतसैवेत्यादिना । यदि भगवानस्माकं परिशुद्धदेवतामूर्तिनिष्पत्तये महाबोधिचित्तोपदेशं दद्यात्, तदा महासत्त्वार्थः स्यादिति ।एवं चेतसैव चेतःपरिवितर्कमाज्ञायेत्याह । यथारुतम् ।

उत्पादयन्तु भवन्त इत्यादि त्रिवज्राभेद्यस्वरूपेण बोधिचित्तमुत्पादयन्तु । तत्कथमित्यत्राह चित्तं कायाकारेणेति कायवज्राकारेण । कायं चित्ताकारेणेति चित्तवज्राकारेण । चित्तं वाक्प्रव्याहारेणेति । वाचः प्रव्याहारोऽभिलपन् । तेन वाग्वज्रेणेत्यर्थः ।

**अथेत्यादि** कायवाक्चित्तानि आकाशाकारेण शून्यतास्वभावेन । संयोज्य एकीकृत्येति । नेयार्थः । उत्पादयन्तु मनोमयदेहं निष्पादयन्तु । कथमित्याह चित्तं कायाकारेणेति । चित्तत्रयं सूक्ष्मधातुना सह संभोगिकदेहाकारेण यत्कायनिष्पादनं भवितुमेव तदिति कायं चित्ताकारेण । न हि चित्तादन्यत् किञ्चिदस्ति । चित्तं वाक्यव्याहारेणेति । योवाक्प्रव्याहारस्तेन स्वरूपेण चित्तमेवोत्पादयन्त्विति । **कायेत्यादि** । एवं निष्पन्नकायवाक्चित्तानि आकाशाकारेणेति । आकाशस्वभावेन प्रभास्वरेण संयोज्यैकीकृत्य महावज्रधरमात्मानं निष्पादयेदिति । उक्तं च **श्रीवज्रमालामहायोगतन्त्रे**

त्रैधातुकसमं नास्ति सारभूतं स्वजीवितम् ।
पश्यति स्वपुरं भास्वत्प्रसंख्यायुतधातुकम् ॥

त्रैधातुके परं नास्ति सारभूतं स्वजीवितम् ।
जीवितं पश्यति स्वप्नं अथवा यस्त्रिधातुकम् ।। इति ।।

योगान्तरम् ।

त्रैधातुकाकार तत्त्वं एकत्वं संप्रयच्छति ।
अधिष्ठानपदं तत्कार्यसिद्धिमवाप्नुयात् ।।

अहो हीत्यादि । समन्ततो भद्रः महावज्रधरस्तस्य बोधिचित्तप्रवर्तनम् । अहो आश्चर्ये, ह्रिर्यस्मात् । येनानुत्पादप्रयोगेणेति । अनुत्पादः परमार्थसत्यम् । तस्मिन् मनोमयकायस्य प्रवेशः अनुत्पादप्रयोगः । तेन उत्पाद इति प्रभास्वरः परिशुद्धदेवतामूर्तिग्रहणलक्षणम् । व्युत्थानमयमुत्पादो येन प्रगीयते कथ्यत इति नासन्ध्यम् । षट्तथागतानां यथास्वं बोधिचित्तगाथाभिरिममेव समाधिं द्योतयति ।

सर्वतथागतानामभिसंवोधिः सत्यद्वयाद्वैधीकारलक्षणः । तस्य नयः । तत्साक्षात्करणोपायः स एव वज्रवदभेद्यत्वाद् वज्रं यस्य समाधेः । स तथोक्तः। नासन्ध्यम् ।

स्थिरवलसर्वपदार्थानामभावे सति भावनाया ग्रभावः भाव्याभावात् । भावना नैव भावनेति। यापि सतो भावना सा न भावना, विनापि भावनाया विद्यमानत्वात् इति। इत्थं भावाभावयुक्तो यो भावः स न स्यात् । तस्माद् भाव्यो भावको भावना नोपलभ्यते । अक्षरार्थः । उर्व्यादिभेदेन सर्वधर्मान् निराकृत्य शून्याः संस्कृतासंस्कृता धर्मा इति या भावना तस्या अभावः शून्यताभिनिवेशदृष्टित्वात् । निमित्तनिराकरणायाह भावना नैव भावनेति । यापि हेतुफलाकाराभिनिवेशभावना सापि नैव युक्ता हेतुफलाद्वयत्वात् । प्रणिधानं निराकर्तुमाह । इति भाव इत्यादि । इत्येवं वाह्याकारं यत्प्रणि-धानफलं तदपि न विद्यते प्रणिधानाद्युपलम्भाभावात् । तेन वाह्यवस्त्वाकार-भावना नोपलभ्यते । न विद्यते चित्तमयत्वात् । समस्ताङ्गम् । अभावेति । ये स्वप्नादयः तेषामभावे यद्भाव्यभूतं चित्तमात्रं तदभावाविशुद्धं सर्वासत्त्वात् । संवृतिसत्यं निराकर्तुमाह । भावना नैव भावनेति । या संवृतिसत्यात्मिका मायोपमदेवतारूपभावना सापि न युक्ता । प्रभास्वरेणापि विशुद्धत्वात् ।

इत्येवं संवृतिसत्यभावो न भावः स्यात्। तस्य सत्यद्वयाभिन्नत्वात्। तेन भावना सत्यद्वयाद्वयाकारभावना नोपलभ्यते। कृच्छ्रादुपलभ्यत इति यावत्। गर्भी।

अभावे परमार्थसत्ये भावनाया अभावः आदिशुद्धत्वात्। या संवृति-सत्यात्मिका भावना सापि न भाव्यते। सत्यत्वादित्यनेन प्रकारेण सत्यद्वयात्मको भावः। भाव्यो न स्यात्। सत्यद्वयाद्वैधीकारदर्शनमात्रेण मोक्षत्वात्। तेन भावको भावना भाव्यमित्ये[व] योऽभिनिवेशः युगनद्ध-क्रमाधिगतानां नोपलभ्यते न विद्यते इत्युक्तवान् महावज्रधरः। कोलिकम्।

अथ भगवान् वैरोचनवज्र उदाजहारेति संवन्धः। सर्वतथागतानां अभिसमन्ताकारेण समयः प्रभास्वरं तदेव वज्रं तदालम्बनः समाधिः। सर्वभावेत्यादि। भाजनभूतैः सर्वभावैर्विगतं पुनः स्कन्धधात्वायतनात्मकैः ग्राह्यग्राहकैश्च वर्जितम् धर्मनैरात्म्यं प्रभास्वरम्। तेन समताद्वयीभावः। तया धर्मनैरात्म्यसमतया आद्यनुत्पन्नं स्वचित्तं त्रिवज्राभेद्यविग्रहं शून्यता-स्वभावं चक्षुर्मात्रगोचरत्वादित्युक्तवान् वैरोचनस्तथागतः। नासन्ध्यम्।

सर्वतथागतानामक्षयं भूतकोटिः तदेव वज्रं तदालम्बनः समाधिः। सर्वतथागतानामक्षयवज्रो नाम अनुत्पन्ना इमे भावा इति। अमी वाह्यात्मिकाः पदार्थाः अनुत्पन्नाः प्रकृतिप्रभास्वरत्वात्। तस्माद् धर्मास्तावन्न सन्ति। न च धर्मतेति। तेषां धर्मतापि न विद्यते धर्माभावात्। अतएव इदं बोधिनयं बोध्युपायः दृढः सार आकाशवत्। नैरात्म्यलक्षणः प्रभास्वर इत्युक्तवान् अक्षोभ्यस्तथागतः। नासन्ध्यम्।

अथेत्यादि तथैव संवन्धः। सर्वतथागतनैरात्म्यं परमार्थसत्यं तदेव वज्रं तदालम्बनः समाधिः। सर्वतथागतनैरात्म्यवज्रो नाम समाधिः। अभावा इति निर्निमित्तत्वात्, सर्वधर्मा इति सास्रवानास्रवाः। धर्मलक्षणवर्जिता इति धर्मा एव तावत् न सिद्धाः कुतस्तेषां लक्षणम्? वन्ध्यासुतस्य च श्यामत्वगौरत्वादिवत्। कथं तर्हि देवतानिष्पत्तिरिति चेत्? धर्मनैरात्म्य-संभूता इति। धर्मनैरात्म्यं परमार्थसत्यं तस्मात् स्वाधिष्ठानक्रमेण संभूताः धर्म-नैरात्म्यसंभूताः। पूर्वायेध [?] सामर्थ्यादित्युक्तवान्। रत्नसंभवः। नासन्ध्यम्।

अथेत्यादि ज्ञानार्चिरेव प्रदीपो ज्ञानार्चिःप्रदीपः। किम्भूत[:] प्रभास्वरलोकः। तदेव वज्रं तदालम्बनः समाधिः ज्ञानार्चिःप्रदीपवज्रो नाम। अनुत्पन्नेष्व-

जातेषु धर्मेष्विति संस्कृतासंस्कृतेषु । न भाव इति भाव्यत्वं नास्ति । न च भावनेति । भावनापि न विद्यते । भाव्याभावात् । कथं देवतायोगः स्यादित्याह । आकाशपदयोगेनेति । आकाशं परमार्थसत्यं पदं संवृतिसत्यं तयोर्योगे एकीभावे । एतेनाकाशपदयोगेन । इति भावः प्रगीयते इत्यनेन न्यायेन भावो महावज्रधर-मूर्त्तिः । प्रगीयते कथ्यते इत्युक्तवानमिताभस्तथागतः । नासन्ध्यम् ।

अथेत्यादि पूर्ववत् सम्वन्धः । सर्वतथागताभिभवनवज्रः समाधिः । विभक्तार्थः । प्रकृतिप्रभास्वरधर्मा इति । प्रकृतिश्च प्रभास्वरं च प्रकृति-प्रभास्वरम् । प्रकृतिः संवृतिसत्यम् । प्रभास्वरं परमार्थसत्यम् । सत्यद्वय-स्वभावा वाह्याध्यात्मिकपदार्थाः । अतएवादिशुद्धा नभःसमाः । परिशुद्धत्वान्न बोधिः । फलरूपा नाभिसमयः । तत्प्रापको हेतुः । हेतुफलयोरभेदाभावादिद-मिति । हेतुफलयोरभेदपरिज्ञानमेव दृढो बोधिमार्ग इत्युक्तवानमोघसिद्धिः । नासन्ध्यम् ।

अथ खल्वित्यादि । सर्वतथागतानां कायवाक्चित्तगुह्यं मनोमयदेहः । तस्य धर्मता परमार्थसत्येन विशुद्धिः । तस्या अक्षरं तद्वरद्योतको वाक्यवन्धः । तं श्रुत्वा आश्चर्यप्राप्ताः । संवृतिसत्येनाद्भुतप्राप्ताः परमार्थसत्येन । अहो बुद्धेति संवृतिसत्यद्वारेण स्तवः । अहो धर्मेति परमार्थसत्यद्वारेण । अहो धर्मस्य देशनेति सत्यद्वयाभिन्नाकारो द्योतिकाया धर्मदेशनायाः कारणत्वेन स्तौति । शुद्धतत्त्वार्थः प्रभास्वरः । तेन शुद्धार्थः परिशुद्धदेहः । एवंगुणविशिष्ट बोधिचित्त महावज्रधर तुभ्यं नमः ।

धर्मनैरात्म्यसंभूतेति परमार्थसत्यात् सञ्जात इत्यर्थः । बुद्धबोधिनिष्पन्न-क्रमः । तेन विनेयान् निष्पादयतीत बुद्धबोधिप्रपूरकः । सर्वकल्पनातीतत्वात् निर्विकल्पः । अतएवानालम्वनत्वात् निरालम्व तुभ्यं नमः ।

समन्तेत्यादि । संसारनिर्वाणयोर्भद्रत्वात् समन्तभद्रः । सर्वसम्पत्स्वभाव-त्वात् सर्वार्थः । देवताचक्रस्फरणात् बोधिचित्तप्रवर्तकः । बोधिः परमार्थसत्यम् । तच्चर्यते प्राप्यते येन बोधिचर्या संवृतिसत्यम् । महावज्र सत्यद्वयात्मक तुभ्यं नमः ।

चित्तमित्यादि । चित्तस्वरूपं कीदृग्विधम् ? ताथागतं तथतां गतस्त-थागतः तथागत एव ताथागतः । अतएव शुद्धं परमार्थसत्यम् । परिशुद्ध-

मनोमयदेह इत्यर्थः । कायवाक्चित्तवज्रेण इति वज्राद्याकारेण विनेयानां दृश्यमानत्वात् कायवाक्चित्तवज्री बुद्धबोधिप्रापकत्वादप्रतिष्ठित निर्वाणधातौ स्थापनात् बुद्धबोधिप्रणेतारः तुभ्यं नमः । यथारुतव्याख्या ।

बोधिचित्तप्रदीपकः पटलः बोधिचित्तपटलः ॥

॥ प्रदीपोद्योतनटीकायां द्वितीयपटलषट्कोटिव्याख्या ॥

—०—

## ॥ तृतीयः पटलः ॥

द्विविधयोगिनां विविधसूक्ष्मयोगभावना कर्तव्येति तृतीयपटलमुपक्षिपन्नाह। **अथेत्यादि** उदाजहारेति संवन्धः। कायवाक्चित्तवज्रस्तथागतो महावज्रधरः। सर्वतथागताक्षोभ्यादयः तेषां सत्त्वार्थनिमित्तं दशदिग्व्याप्तये स्फरणानि तान्येव मेघाः धर्माम्बुप्रवर्षणात्। स एवं व्यूहो वैचित्र्यसत्त्वाशयभेदेन विचित्र-नानारूपदर्शनात्। एवं विचित्राभेद्यं समाधिमालम्ब्य इदमिति बुद्धिस्थं वज्रव्यूहमिति वज्रास्तथागताः तेषां व्यूहः समूहो यस्मिन् स वज्रव्यूहः तन्नामकः समाध्याधारपटलः समाधिपटलः तमुदाजहार ॥

एवं पटलमवतार्य देवतानिष्पत्त्यङ्गभूतो मन्त्रः आदौ निर्दिश्यते। ओं शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति।

आकाशधातुमध्यस्थमिति धर्मोदयस्थः। भावयेदित्यादि वैरोचनादि-देवताचक्रम्। रश्मिमेघमहाव्यूहमिति रश्मयः तत्तत्कुलप्रतिवद्धदेवताः तासां मेघः समूहः स एव व्यूहः यथास्थानसन्निविष्टत्वात्। बुद्धज्वालासमप्रभमिति स्वाधिपतिसमानवर्णम्।

पञ्चरश्मिसमाकीर्णमिति पञ्चवर्णभूभागयुक्तम्। समन्तात्परिमण्डल-मिति सर्वतोभद्रम्। पञ्चकामगुणाकीर्णम् रूपवज्रादिसहितम्। पञ्चोपहार-मण्डितम् देवादिसन्निधापितपञ्चोपहारसहितम्।

भावयित्वेत्यादि। संक्षेपेणैव देवताचक्रं ध्यात्वा विम्वमात्मानं मध्ये चक्रमध्ये विभावयेदधिपतित्वेन स्थापयेदित्यर्थः। अथ वैरोचनादीनां महामुद्रां महावज्रधरबिम्बमिव मध्ये भावयेदिति दर्शयितुमाह। वैरोचन इत्यादि कायवाक्चित्तलक्षितां वज्रधरस्य निर्माणभूतं वैरोचनमहामुद्रां कायवज्रत्वेऽपि वैरोचनस्य कायवाक्चित्तयोर्गुणभावेन विद्यमानत्वात् कायवाक्चित्तलक्षिताम्। संहाराद्वययोग इति संह्रियतेऽस्मिन् देवताचक्रमिति संहारो महावज्रधरः। तेनाद्वययोगतोऽक्षोभ्यमहामुद्रां भावयेत्।

एवं रत्नकेत्वादिमहामुद्रां मण्डलमध्य विभावयेदिति ।

यस्य वज्रधराग्रस्य मध्ये विम्वं समालिखेत् ।
स भवेन्मण्डलपदं तस्य

इति वचनात् ।

एषां वर्णादिप्रभेदं दर्शयन्नाह । इन्द्रनीलेत्यादि । कायवाक्चित्तवज्रो महावज्रधरः अक्षोभ्यानुप्रवेशेन द्वेषवज्रो भूत्वेन्द्रनीलवर्णः संजातः । अतएव विकटोत्कटभीषणः । ईषद्दंष्ट्राकरालः क्रोधमहारागमिश्रीभावात् ।

स्फटिकेन्दुप्रभाकारो वैरोचनः तं जटाकलापमण्डितं प्रभामण्डलसहितं सर्वलक्षणालङ्कृतदेहं प्रधानहस्तेन चक्रधरं ध्यायात् ।

जाम्वूनदप्रभाकारं कनकवर्णरत्नसंभवम् स्फुरत्तथागतव्यूहं ध्यायात् । नवशूलमित्यादि । तस्य द्वेषवज्रस्य पाणौ विभावयेत् ।

मकरतेत्यादिना अमोघसिद्धिस्वरूपमाह । हस्ते रत्नमित्यादिना रत्नसंभवस्य चिह्नं कथयति ।

पद्मरागेत्यादिना अमिताभचिह्नमाह ।

पञ्चरश्मीत्यादि सितादिकिरणोपेतं विश्वं सकलं जगदर्थसाधनरूपत्वात् । अमोघवज्रिणं खड्गहस्तं ध्यायात् ॥

एषामुत्पादनायाङ्गभूतमादियोगं दर्शयितुमाह । अथेत्यादि । धर्मधातुरेव स्वभावो यस्य तं समाधिं समापद्य कायवाक्चित्तान्यधिष्ठीयन्ते निष्पाद्यन्ते येन स कायवाक्चित्ताधिष्ठानः तन्मन्त्रमुक्तवान् महावज्रधरः । ओं धर्मधातुस्वभावात्मकोऽहमिति । अनेनात्मानं चन्द्रमण्डलाकारमधिष्ठाय तदुपरि त्र्यक्षरादिना देवताविग्रहं निष्पाद्य वक्ष्यमाणक्रमेण सूक्ष्मयोगं विभावयेदिति । नेयार्थः । उत्पत्तिक्रमसमाधिः । अथेत्यादि । सर्वतथागताः पञ्चरश्मयः तेषां स्फरणमूर्ध्वद्वारेण प्रवृत्तिः मेघाच्चन्द्रं एकैकस्मिन् मण्डले चतुर्मण्डलप्रवृत्ते व्यूहः सितादिवर्णेनाभिन्नत्वात् । तं समाधिमालम्व्य वज्रं त्र्यक्षरं तस्य व्यूहो वृन्दं आलिकालीनांम्नपुंसकादिस्वरूपाणां त्र्यक्षरे निविष्टत्वात् । समाधाय तं अर्हर्निशं प्रवेशस्थितिव्युत्थानेन जाप्यत इति समाधिः । ईदृग्विधः समाधिः यस्मिन् स तथोक्तः । तं पटलमाह । ओं शून्यतेत्यादिमन्त्रेण पुनरुच्यते ।

ओमित्याद्येकसंयुक्तं शून्यतेति द्वितीयकम् ।
तृतीयज्ञानमित्येवं चतुर्थं वज्रसंज्ञकम् ।।
पञ्चमं तु स्वभावाख्यं षष्ठोऽहमिति चोच्यते ।
एवं ताथागतं षट्कं कथितमुत्तमे जने ।।
ओं शून्यतेति युग्मादि ज्ञानवज्रं द्वितीयकम् ।
तत्स्वभावात्मकोऽहं स्यात् त्रितत्त्वं चात्र कल्पितम् ।।

त्रितत्त्वमेकं भवेत् सम्यक् । व्यक्तं व्यक्तसंज्ञकमित्यार्षम् ।

आकाशधातुमध्यस्थं बुद्धमण्डलं त्रिसंयोगदेहं भावयेत् ध्यायात् । किंभूतम् ? रश्मिमेघमहाव्यूहमिति । आभासत्रयसमूहमालोकपुञ्जं बुद्धज्वाला-समप्रभमिति इन्द्रायुधवत् सितादिपञ्चप्रभालङ्कृतम् । पञ्चरश्मिसमाकीर्णमिति । सूक्ष्मधातुपरिघटितम् । समन्तात्परिमण्डलमिति । सर्वभावस्वभावम् । पञ्चकामगुणाकीर्णमिति उद्वाहादिपञ्चरश्मयः तैरुपेतम् । पञ्चोपहारमण्डित-मिति उपहरन्ति विषयान् इत्युपहाराः पञ्चेन्द्रियाणि तैर्भूषितं सकलाक्षकत्वात् । ईदृग्विधं बुद्धमण्डलं प्रभास्वरं प्रवेशयेत् । भावयित्वेति । एवंविधमात्मानं प्रभास्वरगतं ध्यात्वा समासेनेति झटित्याकारेण विम्वं महावज्रधरस्वरूपं मध्य इति संसारनिर्वाणयोर्मध्ये सदसत्पक्षरहितमात्मानं विभावयेत् विजानी-यादित्यर्थः ।

अनेनैव क्रमेण वैरोचनादिकं यथाशयभेदेन स्वात्मानं निष्पाद्य स्वार्थं कुर्यादिति अत आह ।

वैरोचनमहामुद्रां कायवाक्चित्तलक्षिताम्

इत्यादि । इममेव महावज्रधरयोगं दृढीकर्तुमाह । अथ भगवानित्यादि । धर्म-धातुप्रभास्वरः तं समाधिमालम्व्य कायवाक्चित्तान्यधिष्ठीयन्ते निष्पाद्यन्ते येन स कायवाक्चित्ताधिष्ठानं स्वं मन्त्रमुक्तवान् महावज्रधरः ।। ओं धर्मधातु-स्वभावात्मकोऽहम् ।। अस्यार्थो व्याख्यातन्त्रेणोच्यते

ओमिति प्रथमं ज्ञेयं द्वितीयो धर्मसंज्ञितः ।
तृतीयो धात्विति प्रोक्तः स्वभावाख्यश्चतुर्थकः ।।
आत्मकः पञ्चमो ज्ञेयः स्यादहं षष्ठयोगतः ।
उच्चार्येदं ततो मन्त्रं भावयेद् भावनात्मकः ।। इति । नीतार्थः ।

इदानीं स्वचित्तदृढीकरणार्थं त्रिविधसूक्ष्मयोगभावनामाह। पञ्चवर्ण-मित्यादि। पञ्चकुलप्रभवं महारत्नं वज्रादिचिह्नं रत्नमिव महार्घत्वात् तत् सर्षपफलप्रमाणं नासिकाग्रे भावयेत् स्वदेवतायोगेन। सदा अहर्निशम्॥

स्थिरमित्यादि। यदा दर्शननिमित्तं प्रकाशितुं चोपजायते तदा वज्रादिकं भावनाया निश्चलं विदित्वा भावनावशित्वोत्पादनाय स्फारयेत्। अस्थिरं नैव स्फारयेदिति। भाव्यमानं न स्फारयेत्। स्फारयेदित्यादिना वज्रादौ स्फरणेन स्थिरीकृते महामुद्रारूपमपि स्फारयेदित्याह। स्फारयेत्प्रवरैरित्यादि। प्रवरैर्मेघैः बुद्धसंदोहैर्बुद्धज्वालासमप्रभैः सितादिवर्णोपेतैः॥

चक्रवज्रमहामेघैरिति। चक्रवज्ररत्नमेघोपलक्षितैः। पद्मकोशवरायुधैरिति। पद्मखड्गधरैरित्यर्थः। बोधिसत्वमहामेघैरित्युपलक्षणत्वात्। पञ्चकुलसंबन्धि-नीभिर्देवताभिरपि स्फरणात्मकः साधकः गगनकुहरं स्फारयेत्। छादयेदिति समस्ताङ्गम्। महारत्नं संवृतिर्बोधिचित्तं सर्षपफलमात्रं नासिकाग्रे स्वकुलिश-मुखे पञ्चवर्णं पञ्चतथागतात्मकं कृत्वा सदा भावयेत्। स्थिरं तु स्फारयेद्रत्न-मिति। यथोक्तविधिना वज्रपद्मसंस्कारपूर्वकं स्वचित्तरत्नं स्थिरीकृत्य योगतः समापत्तितः स्फारयेत् निश्चारयेत्। स्फारयेत्। प्रवरैर्मेघैरित्यादिना बोधिचित्तनिर्यातपुत्रपौत्राद्युत्सर्गमण्डले कथयति। गर्भी।

परपदं सर्वतथागतगतात्मकम्। महारत्नमनाहताख्यम्, बुद्धरत्नोत्पादनात् सर्षपस्थलमात्रकम्। सर्षपफलप्रमाणं विन्दुरूपत्वात्। नासिकाग्र इति। हृत्पद्मकर्णिकायां प्रयत्नेन तात्पर्येण प्रवेशस्थितिव्युत्थानसंहारयोगेन सदाहर्निशं भावयेत्। स्थिरं शाश्वतम्। किं तत्? अनाहतम्। तस्मात् रत्नपञ्चवर्ण-रश्मिवृन्दं स्फारयेत् प्रवेशस्थितिव्युत्थानैः प्रवर्तयेत्। अस्थिरमित्यादिनानाहत-तत्त्वाधिगम एवेमं योगं कुर्यादिति दर्शयति। इदानीं स्फारणविधान प्रदर्शयितुमाह। बुद्धज्वालेत्यादि। बुद्धज्वालां पञ्चरश्मयः। तत्समप्रभैः मण्डलचतुष्टयैर्दक्षिणादिभेदेन स्फारयेत् तथागतमेघैर्गगनकुहरं पूरयेदिति। कोलिकम्।

वैरोचनादीनामुत्पत्तिक्रमं दर्शयन्नाह

आकाशधातुमध्यस्थं बुद्धमण्डलमालिखेत्।

इत्यादि। तथतालम्बनपूर्वकं चन्द्रमण्डलं ध्यात्वा तदुपरि चक्रं विभाव्य

तत्परावृत्त्या यथावद् वैरोचनं भावयेत् । एवं पद्मपरावृत्त्या पद्ममण्डलसंकाशं पद्मरागप्रभममिताभं पद्मकुले योगी भावयेत् । रत्नतत्परः रत्नकुलयोगी रत्नसंभवं रत्नमण्डलसंकाशं पीतवर्णं ध्यायात् ।

योगमण्डलं विश्ववज्रं तत्संभूतममोघसिद्धिं ध्यायात् । आकाशसन्निधावितिं । आकाशेन सन्निधिः सादृश्यं तस्मिन्नाकाशसादृश्ये स्थितम् । गगनश्याममित्यर्थः । एत इत्यादि । कायवाक्चित्तसाधनैरुपलक्षितं यत्कायमण्डलं किं तत् ? अक्षोभ्यः सर्ववज्रसंभूतः । एते वै प्रवरा बुद्धाः । सर्वज्ञाकारलाभिन इति योगः । सर्वज्ञत्वं सत्त्वैर्लम्भयितुं ग्राहयितुं शीलं येषां ते ।

वज्रव्यूह इति । वज्रास्तथागताः तेषां व्यूहः संघातो यत्र वज्रव्यूहपटल इति । नेयार्थः । आकाशधातुप्रभास्वरं तद्द्वचवस्थितं चन्द्रमण्डलमनाहतं आलिखेत् विजानीयात् । स्वच्छमण्डलमध्यस्थमनाहतसंभूतं चक्रमण्डलं वारुणमण्डलमक्षोभ्यस्वभावं शुक्लवर्णं मन्दप्रचारत्वात् स्तब्धं भावयेत् प्रवर्तमानं विजानीयात् । पद्ममण्डलसंकाशं रक्तवर्णमग्निमण्डलं पद्मभावनैरमिताभस्वभावैर्दक्षिणेन प्रवर्तमानं विजानीयात् । रत्नमण्डलसंकाशं पीतवर्णं माहेन्द्रमण्डलं रत्नतत्परः रत्नसंभवजापी त्वद्भुतः प्रवर्तमानं विजानीयात् । योगमण्डलं वायव्यमण्डलं कृष्णवर्णममोघसिद्धिस्वभावं वामप्रचारं विजानीयात् । एते तथागतस्वभावाः चत्वारो रश्मिप्रचाराः कथिताः । तैः कायवाक्चित्तसाधनैः कायादिनिष्पादकैः वज्रसंभूतं प्रभास्वरमुत्थितं सत्यद्वयात्मकदेवताचक्रं जायते । कस्य सर्वज्ञाकारलाभिनः सर्वज्ञपदं लब्धुकामस्य वज्रात्मको व्यूहः परिनिष्पन्नदेवतामूर्तिः । तद्वाचकः पटलस्तथोच्यते । अयमेव सूक्ष्मयोगो व्याख्यातन्त्रे विस्पष्टं दर्शितः । तदिहावतार्यते ।

अनादिनिधनं योगं सुसूक्ष्ममिति कल्पयेत् ।
अव्यक्तव्यक्तसंयोगं निःस्वभावस्वभावजम् ॥

प्रकृतिसिद्धिमाद्यैकमेकानेकविवर्जितम् ।
प्रतीत्योत्पादधर्माख्ये सर्वभावैकसंभवम् ॥

आत्मानमीदृशं कृत्वा संलिखेद्धर्ममण्डलम् ।
रक्तकृष्णं तथा पीतं सितं चैव समासतः ॥

तुर्यतुर्यैकसंयोगात् संलिखेत् पाण्डरादिकम् ।
तासां मध्ये स्वदैवत्यं तुर्ययोगपरमं परम् ।।

ऊर्ध्वं तिर्यक्समाधस्तात् पाण्डरादि यथायथम् ।
अग्निवायव्यमाहेन्द्रवारुणे प्रतिमण्डले ।।

इत्याह भगवानिति । नीतार्थः ।

।। प्रदीपोद्योतनटीकायां तृतीयपटले षट्कोटिव्याख्या ।।

---

## ॥ चतुर्थः पटलः ॥

देवतालम्वनपूर्वकं सूक्ष्मयोगभावनासाधितविशेषाणां शिष्याणां रजोमण्डलाभिषेकाय गुरोरध्येषणविधिमाह। अथेत्यादि अध्येपितवन्त इति यावत्। यथारुतम्। सर्वत[ा]थागतमिति अक्षोभ्यद्वारेण स्तुत्वा आराधयति। शान्तमिति। वैरोचनस्वभावेन। सर्वताथागतालयमिति। रत्नकेतुस्वभावेन। सर्वधर्म इत्यमिताभस्वभावेन। अग्रनैरात्म्यमित्यमोघसिद्धिस्वभावेन॥

पुनः कुलत्रयस्वभावेन संस्तौति सर्वलक्षणसंपूर्णमित्यादि। सर्वलक्षणसंपूर्णं सर्वालक्षणवर्जितं मण्डलं भाषेति संवन्धः। यथोक्तं मण्डलं लक्षणोपेतं न्यूनातिरिक्तदोषरहितं समन्तभद्रकायाग्रं प्रवरं मण्डलं प्रकाशयेत्यर्थः।

शान्तधर्माग्रसंभूतं परमार्थसत्यनिर्जातज्ञानमाभासत्रयं तच्चर्या रागादयः। ताः प्रकृतीः अभिसंबोधिभावना या विशोधयतीति ज्ञानचर्याविशोधकः, प्राप्तसर्वैश्वर्यत्वात्। समन्तभद्रः वागीश्वर्यप्राप्तत्वात् वाचाग्रः।

सर्वसत्त्वमहाचित्तस्त्वं सर्वसत्त्वचित्तवज्रत्वात्। शुद्धः रागादिमलापगमात्। विचार्यमाणे रागादीनामनुपलम्भात्। प्रकृतिनिर्मलः। अतएव समन्तभद्रः स्वचित्तप्रतिषेधात्। चित्ताग्रः सर्वसत्त्वनिर्वाणपुरप्रापणात्। भाष वज्रं मण्डलविधिं प्रकाशय। नासन्ध्यम्।

वज्रधरवचनावतारायाह **संगीतिकारः**। अथेत्यादि। वज्रमद्वयज्ञानं तद्धारणाद् वज्रधरः। विनेयानुगुणशासनात् शास्ता। त्रिलोकः भूर्भुवःस्वःस्वभावत्वात् त्रिधातुकः, कामधात्वादिस्वभावेन स्थितत्वात्। त्रिलोकवरवज्राः प्रत्येकबुद्धादयः तेषामग्रः प्रभुः, त्रिलोकाग्रा ब्रह्मादयस्ताननुशास्ति। एवंभूतो महावज्रधरः॥

रम्यं मनोज्ञं सर्वताथागतागतालयं तन्निकेतभूतम्। सर्वतथागतागतत्वात् सर्वताथागतं चित्तमण्डलमिति कायवाङ्मण्डलाभ्यां व्यावृत्तिः। मण्डः मारः तं लाति गृह्णातीति मण्डलं तस्याकारो यस्मिन् तन्मण्डलाकृतिमिति। एवंभूतं चित्तमण्डलं भाषते। यथारुतम्।

महावज्रधरवचनेन मण्डलं दर्शयन्नाह । अथात इत्यादि । अथेति वाक्यो-पादाने अतःशब्दो हेत्वर्थे । शिष्यवचनमङ्गीकृत्य । यस्मादयं श्रद्धादिगुणसम्पन्नः अतोऽस्य मण्डलं संप्रवक्ष्यामीत्यभिप्रायः । चित्तप्रधानं मण्डलं चित्तमण्डलं वज्रकुलप्राधान्यादुत्तमम् । अत एवेदं प्रथममुक्तम् । चित्तवज्रोऽक्षोभ्यः । तद्वत् मारादिभिरकम्प्यत्वा[त्] चित्तवज्रप्रतीकाशं कायवाक्चित्तानां मण्डः सारं गुह्यं तलतीति कायवाक्चित्तमण्डलं तत्सम्यक्प्रवक्ष्यामीति योगः ।

नवेनेत्यादिना तत्सूत्रेण विधिं दर्शयति । नवेन नान्योपयुक्तेन सुनियुक्तेन सम्यक् वलितेन सुप्रमाणेन मण्डलद्विगुणेन चारुणा पञ्चरङ्गिकेन । एवंविधेन सूत्रेण सूत्रयेत् विभजेत् । प्राज्ञः अदुष्टकर्माचार्यः । मण्डलसूचनात् सूत्रम् । कथं ? कायवाक्चित्तभावनैः कायवाक्चित्तसमाधानैः ।

मण्डलप्रमाणं दर्शयति । द्वादशहस्तमिति । चतुरस्रं चतुष्कोणत्वात् । चतुर्द्वारमिति । प्रागादिचतुर्द्वारयुक्तं वाह्यमण्डलमर्थात् ।

तस्येत्यादि । चतुरस्रादिगुणोपेतस्य तस्य वाह्यमण्डलस्याभ्यन्तरतश्चक्रं गर्भमण्डलं परिमण्डलं वृत्ताकारमालिखेत् । मुद्रान्यासमित्यादिविधिः भूसंशो-धनादिको वि[धानं] विधिः । तत्र दृष्टं विधिदृष्टं तेन कर्मणा ।

आधारमण्डलं निष्पाद्य ततस्तदनन्तरमाचार्यो वज्रादिमुद्रान्यासं कुर्यात् । धर्ममुद्रा चिह्नमुद्रा महामुद्रेति त्रिविधा मुद्रा हूँकारादीन् धर्ममुद्रा । वज्रादीन् चिह्नमुद्रा । अक्षोभ्यादिदेवताचक्रं महामुद्रा । सर्वसत्त्वसन्तानाद्यपेक्षया आसां त्रिप्रकाराणामपि मुद्राणां न्यासं कुर्यात् ॥

तत्रोपलक्षणार्थं चिह्नमुद्रां दर्शयितुमाह तस्य मध्य इत्यादि । भयस्यापि भयप्रदमिति । भयस्यापि भयजनकं वज्रं द्वेषतत्त्वत्वात् ।

वज्रास्तथागताः तेषां ज्वालाः पञ्चरश्मयः तैर्विभूषितं चक्रं विस्फुलिङ्ग-गहनाकुलं रश्मिच्छटाकीर्णम् ।

रत्नमयत्वं पद्मस्य प्रत्यवेक्षणज्ञानात्मकत्वेन तदमिताभस्य पद्मराग-सदृशदीप्तिं पश्चिमदिग्भागे लिखेत् । उत्तरेणेत्यादि । रश्म[1]

---

१. Folio 29a seems to have escaped the camera, while 29b has been photographed twice.

······ येदित्यत आह । समाधिष्य च इत्यादि । तां पूर्वोक्तां योषितं कुशलो मन्त्री । गुणमेखलामिति । मेखलेव मेखला । गुणैः कृता मेखला माला यस्याः सा गुणमेखला तां साक्षात् मामकीमिव समाधिष्य प्राकृतभावमपनीय पञ्चकुलकलापिनीं कृत्वा रमयेत् । ततः सौम्यं शुक्रं सृजेत् । वज्रमार्गा वहिष्कुर्यात् । कथं बुद्धपदं बुद्धप्रभवम् । आकाशधात्वलङ्कृतं गगनाभोगालङ्कार-भूतं सृजेत् । बोधिचित्तपरमाणुघटितगगनकुहरव्यापितथागतव्यूहं भावयेदित्युक्तं भवति ।

न केवलं बोधिचित्तमात्रेणैव पूजाविधानं अपि तु कायनिष्यन्दैरपीति दर्शयन्नाह । विण्मूत्रेत्यादि । पञ्चामृतं देवतानां निवेदयेत् । चरुभावेन मण्डल-चक्रस्य प्रतिपादयेत् । तेनैवात्मानं प्रीणयेदिति । एवं कृते को गुण इत्याह । एवमित्यादि । बुद्धा रूपस्कन्धादयः । बोधिसत्त्वाश्चक्षुराद्यायतनानि । एते बुद्ध-बोधिसत्त्वास्तुष्यन्ति तुष्टिं गच्छन्ति । महायशाः पटुप्रचाराः लोकनयनानन्द-करा भवन्ति । नेयार्थः ॥

आर्षव्याख्यानमुच्यते ।

अथातः कथयिष्यामि मण्डलं चित्तमुत्तमम् ।
वज्रज्ञानप्रतीकाशं कायवाक्चित्तमण्डलम् ॥
नवात्मकमिदं श्रेष्ठं सुनियुक्तं तथोदितम् ।
द्विविधागमसङ्केतं सुप्रमाणं तदुच्यते ॥
संवृतिः परमार्थं यदद्वयं शोभनं मतम् ।
प्रज्ञासूत्रमिदं तस्मात् तदुपायानुवर्णितम् ॥
प्रज्ञोपायैकसूत्रेण धर्मात्संभोगमुत्तमम् ।
सूत्रितं मण्डलं चैतं प्रतीत्या द्वादशाङ्गतः ॥
सत्यार्यं चतुरस्रं स्यात् ब्रह्मविहारकोणकम् ।
द्वारसंग्रहवस्त्वाख्यं प्रत्येकं तुर्यसंज्ञकम् ॥
धर्मतत्त्वार्थसंकेतं चक्राभ्यन्तरमण्डलम् ।
अभेद्यज्ञानचिह्नं तद् वज्रेन्द्रनीलमुद्रकम् ॥
पञ्चाकारप्रभेदाख्यं शूलं संसारनाशकम् ।
प्राक्स्थितादर्शमात्रं तु चक्रं ज्वालाविभूषितम् ॥
समन्तसमताज्वालं रत्नं याम्येकसंज्ञितम् ।
प्रत्यवेक्षणपद्माख्यं पद्मरागा विपश्चिमम् ॥

उत्तरोत्तरचित्तं यज्जगद्विकल्पदालनम् ।
कृत्यानुष्ठानखड्गं स्याद् रश्मिज्वालासमप्रभम् ।।
आग्नेय्यां नेन्द्रं (?) मैत्रीं तु नीलमेघसमप्रभम् ।
नैर्ऋत्यो करुणाख्या स्यान्मामकीकुलवज्रकम् ।।
वायव्यां पद्मसंज्ञा तु मुदिता सुस्थितानना ।
ऐशान्युत्पलमाभाति सोपेक्षा नीलसंज्ञिता ।।
दानपूर्वं तथा द्वारे मुद्गरं कान्तिसुप्रभम् ।
तथैव प्रियवाद्याख्यं दण्डं वज्रार्चिसुप्रभम् ।।
अर्थचर्या तु पद्माख्यं पश्चिमे हयकन्धरे ।
वज्रं समानचर्यार्थं वज्रकुण्डलि वज्रिनः ।।
तदित्थं कथितं सम्यक् मुद्राविन्यासलक्षणम् ।
यथा संस्थानतः पूजा भवेत् त्रिविधभावनैः ।।
महत्त्वपूर्वकं ह्येतन्मुद्रामण्डलमुच्यते ।
क्षणादिकालभेदेन संज्ञा स्यात् षोडशाब्दिका ।।
अनुत्पादोषिताशान्तयोषिता इति निश्चिता ।
शान्तधर्मानपेताख्या कान्ति [?] सुप्रभोदिताम् ।।
प्रतीत्यवासना गन्धं पुष्पं ज्ञानविकासनम् ।
निःस्वभावकुले ज्ञेयं सर्वज्ञज्ञानमव्ययम् ।।
कामयेदीदृशीं प्राज्ञो योषितं धर्मधातुकम् ।
न चाध्यात्मं न वाह्योऽन्तं नोभयेऽन्यत्र संस्थिताः ।।
अस्थानस्थितियोगा [स्यात्] स्यादतो मामकी मता ।
तत्स्वभावैकयोगस्तु अधिष्ठानं तदुच्यते ।।
आकाशैकत्वसंवाससौम्यं बुद्धपदं भवेत् ।
अतः संहरणाद् विद्याद् विषयाः परिकल्पिताः ।।
सूत्रं ज्ञानेन्द्रियं शस्तं शुक्रं विशुद्धिधर्मता ।
रक्तं सर्वज्ञताज्ञानं ये धर्माः परिकल्पिताः ।।
त एव देवताः ख्याता निःस्वभावो निवेदनम् ।
एवं तुष्यन्ति ते बुद्धा जिनौरसा विशेषतः ।।
लौकिकी कल्पना येषां तेषामेव यथोदितम् ।। इति ।।

एवं लेख्यमण्डलादिव्यपदेशेन परिशुद्धदेवतारूपमेव प्रतीपादयतीति । नीतार्थः ॥

सर्वतथागतेत्यादि । चित्तवज्राधिपतिमण्डलश्चित्तमण्डलमिति । मण्डं सारं संवृतिसत्यम् । तं लाति गृह्णातीति मण्डलम् । नेयार्थः । मण्डं सारं परमार्थसत्यम् । तं लाति गृह्णातीति मण्डलम् । यथोक्तं **भगवता** व्याख्यातन्त्रे ।

सर्वाङ्गं भावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राविन्दुसमातीतं एतन्मण्डलमुत्तमम् ॥ इति । नीतार्थः ।

॥ प्रदीपोद्योतनटीकायां चतुर्थपटले षट्कोटिव्याख्या ॥

----०----

## ॥ पञ्चमः पटलः ॥

अधिगतक्रमद्वयः प्राप्ताभिषेकश्चापि चर्यां विना न सिध्यतीति दर्शयन्नाह। अथेत्यादि। सर्वतथागतानां कायवाक्चित्तात्मको राजा त्रैलोक्याधिपतिः हरिहरादिलौकिकदेवतानां श्रावकादिलोकोत्तराणां च ऋद्ध्यादिभिरभिभव-नादग्रः। भुर्भुःस्वरर्थशासकत्वाद् भुवनेश्वरः। स्वपरयूथ्यानां चर्या सर्वचर्या। अर्थ्यत इत्यर्थः। अग्रधर्मश्चासावर्थश्चाग्रधर्मार्थः। महावज्रधरः सर्वचर्याभिः प्राप्तो ह्यग्रधर्मार्थः। स तथोक्तः सर्वैरपि मुमुक्षुभिः। सर्वज्ञत्वस्य प्राधान्यात्। प्रपञ्चता निष्प्रपञ्चता अत्यन्तनिष्प्रपञ्चतेति त्रिविधा चर्या। चरत्यनयेति चर्या। तस्या लक्षणं स्वरुपं भाषते। यथारुतम्।

निर्विकल्पेत्यादि। निर्विकल्पः परमार्थसत्यं गाम्भीर्यलक्षणम्। अर्थं संवृतिसत्यमौदार्यलक्षणम्। एतद् द्वयमद्वयाकारेण सम्यक् भावयन्ति ये निर्विकल्पार्थसंभूतास्ते योगिनः। रागाद्याकुला अपि प्रवरामुत्कृष्टां सिद्धिं महामुद्रासिद्धिं साधयन्ति निष्पादयन्ति। अग्रयानं वज्रयानं सर्वयानाधःकरणात्। अनुत्तरम् अत्युत्कृष्टं तमाश्रित्येति वाक्यशेषः। नासन्ध्यम्।

स्वभावपरिज्ञानमेव बुद्धत्वकारणम्, न जात्यादिकमिति दर्शयन्नाह। चण्डालेत्यादि। जात्या जुगुप्सितत्वं दर्शयति। वेणुकार इति कर्मणा नाम आदिशब्दादन्येषामपि कर्मणाम्, मारणार्थाः कूटयन्त्रशस्त्रवागुरादयः। तैरर्थं प्रयोजनं चिन्तयन्तीति मारणार्थानुचिन्तकाः। सिध्यन्त्यग्रयानेऽस्मिन् महायाने ह्यनुत्तरे। अग्रा रत्नपुद्गलाः। ते यान्त्यनेनेत्यग्रयानम्। अनुत्तरमहायानं वज्रयानम्। तस्मिन् सिध्यन्ति।

आनन्तर्येत्यादि। मातृपितृभिक्षुवधबुद्धप्रतिमाभेदसद्धर्मप्रतिक्षेपकाख्यानि पञ्च कर्माणि मरणानन्तरं नरकयातनादानन्तर्याणि। अत्रोपचारादानन्तर्यशब्दः तत्कारिषु वर्तते। प्रभृतिशब्देनोपानन्तर्यपरिग्रहः।

दूषणं मातु अर्हन्त्या नियतिस्थस्य मारणम्।
बोधिसत्त्वस्य शैक्षस्य सद्य आपद्वारिहारिका ।:

आनन्तर्यसभागानि पञ्चमं स्तूपभेदनम् ।
उपानन्तर्यान्येतानि महापापकृता इति ।।

चतसृभिर्मूलापत्तिभिः च्छिन्नतालवद् बुद्धशासनाद् भ्रष्टा नरकपरायणाः, तेऽप्यत्र गुरुप्रसादेन निष्पन्नक्रमं प्राप्य सिध्यन्ति । बुद्धत्वं प्राप्नुवन्ति । किं पुनश्चण्डालादय इति तद्दोषान् लघयति ।

एवं पात्रापात्रनिरपेक्षार्थकारणात् यानमाहात्म्यं प्रकटितम् । एवं सकल-पापिष्ठजनविशोधकं वज्रयानं गुरुद्रोही कदाचित् साधयतीति कस्यचिदाशङ्का स्यात् । अतस्तस्मिन् निरासायाह । आचार्यनिन्दकपरेत्यादि । पूर्वमाचार्यं पर्युपास्य श्रुतचिन्तानुक्रमेण तत्त्वमधिगम्येदानीं किमनेनेति यो गुरुमवमन्यते स आचार्यनिन्दकः । तेन सहामिषादिसंभोगैः संमोदनं प्रीणनमुदरादिपूरणं वा कुर्वन्ति, येऽन्ये आचार्यनिन्दकाः परास्तावन्न सिध्यन्ति । किं पुनराचार्य-निन्दकः ? नैवेति कदाचिदपि नैव सिध्यतीत्यवधारयति । सर्वपापकारिणं साधयतीति असाध्यसाधनात् । समाज एव साधनं तस्मिन् साधने न सिध्यन्ति । किं पुनरन्यत्रेति । यथोक्तं **श्रीमायाजालतन्त्रे**

अ[कृ]त्वाचार्यनिन्दां वै स्वप्नेऽपि दर्शनं भवेत् ।
ये वाचार्यनिन्दकास्ते ग्रस्ता विघ्नविनायकैः ।।
क्रूरकर्मा दुरात्मानो वर्जनीयाः सदा भुवि ।। इति । यथारुतम् ।।

तन्त्रराजं विशेष्यानाचार्यकमिदं मा भूदिति लोकविरुद्धापलापेन चर्या-विशेषं दर्शयन्नाह । प्राणातिपातिन इत्यादि । अस्यार्थो **व्याख्यातन्त्रादवतार्यते**

स्कन्धादिनिस्वभावत्वं ये कुर्वन्ति शमथोदितम् ।
प्राणातिपातिनस्ते स्युरग्रयानव्यवस्थिताः ।।
अध्यात्म्यं च तथा वाह्यं प्रत्ययोद्भवदेशकाः ।
मृषावादरतास्ते स्युरस्थानस्थितियोगिनः ।।
सम्यक्संबुद्धज्ञानं यद् द्रव्यं तदभिधीयते ।
तदाहरणशीला ये परद्रव्यरता मताः ।।
तथतैकस्वभावा ये तथतानित्ययोगिनः ।
ते ते कामरताः सत्त्वाः श्रेष्ठाः स्युरग्रसाधने ।।
त्रस्यते (?) शून्यतामोहान्मूत्रमिन्द्रियमुच्यते ।

विषयाविति विख्याता भोक्तारः शमनास्तयोः ।
महायानाग्रधर्मेऽस्मिन् भव्यास्ते खलु साधने ॥

सन्ध्याभाषेयम् ॥

मातृभगिनीमित्यादि । मातेति मातृवदनुकूला । एवं भगिनीदुहित्र्यः । आसामन्यतमां स्वकुलाङ्गनामादाय साधनोक्तक्रमेण पञ्चकुलकलापिनीं कृत्वा यां साधकः कामयेत् स विपुलामुत्कृष्टां सिद्धिं गच्छेत् । महायानाख्यः अग्रधर्मः येषां ते महायानाग्रधर्माणः । तेषां मध्ये विपुलां सिद्धिं गच्छेत् । अननुकूलमुद्रासमायोगात् अवश्यं चित्तविक्षेपः संजायते । आनुकूल्यं पुनर्जन्मान्तरेऽपि सौहार्दाद् भवति । मन्त्रतन्त्रादिषु शिक्षिता साधनानुकूला मुद्रा यदि नासाद्येत तदा कथमित्याह । बुद्धस्येत्यादि । बुद्धस्य मातरं प्रज्ञापारमितां स्वहृदि स्थितां निश्चार्य तया सह समापत्तिं कुर्यात् ।

हृदयस्था महादेवी योगिनो योगवाहिनी ।
जननी सर्वबुद्धानां वज्रधात्वेश्वरी स्मृता ॥

इति वचनात् । कामयन्निति । मातृभगिनीदुहितृवद्धितैषिणीभिः समयज्ञाभिः । ज्ञानमुद्रया च परमानन्दसुखमनुभवन् न च लिप्यत इति रागादिक्लेशैर्नैव स्पृश्यते । न केवलं रागादिदोषैर्न लिप्यते, अपि तु सर्वसम्पत्तिमासाद्यत इत्याह । सिध्यत इत्यादि । तस्य साधकस्य धीः सुशिक्षिता मुद्रा यस्य तस्य धीमतः निर्विकल्पस्य स्वभावज्ञस्य । बुद्धत्वं महावज्रधरत्वम् सिध्यते स्वयमेव निष्पद्यते । नेयार्थः ॥

पुनरार्षव्याख्यानमुच्यते ।

प्रज्ञापारमितां प्रज्ञां धर्मकायैकमातृकाम् ।
कामयेन्त्रिस्वभावाख्यां तथताद्वययोगतः ॥
संभोगतुल्यतां जातां तामेव भगिनीं मताम् ।
कामयेन्मन्त्रमूर्त्या तु स्वाधिदैवतयोगवान् ॥
साधको भावयेत् तां तु पुत्रीं निर्माणरूपिणीम् ।
कामयन्नीदृशीं योगी भगिनीमातृपुत्रिकाम् ।
स सिद्धिं विपुलां गच्छेन्महायानाग्रधर्मसु ॥ नीतार्थः ॥

अथेत्यादिना आश्चर्यप्राप्ताः चण्डालादीनां बुद्धत्वसिद्धिश्रवणेन । अद्भुतप्राप्ताः आनन्तर्यादिपापकारिणां महासुखपदप्राप्तिश्रवणेन । एवमाश्चर्या-

द्भुतोपेताः सर्वनिवरणविष्कम्भिप्रभृतयः पुण्डरीकादिमृद्विन्द्रियाः प्राणातिपातिन इत्यादि वज्रपदानां सन्ध्याभाषितानां यथारुतमर्थमभिनिविशमानाः किमियं भगवानित्यादि चोदयन्ति। किं भाषत इति योगः। भगवान् संभारद्वयोपेतः सर्वतथागत आर्यभूतः। अनेन पदद्वये दुर्वचनस्यास्थानता दर्शिता। सर्वतथागता निष्पन्ना अनिष्पन्नाः। तेषां परिषत् समूहः तन्मध्ये। तत्रापि दुर्भाषितं वक्तुं नैव युज्यते। दुर्भाषितस्य वचनं दुर्भाषितवचनम्। प्राणातिपातिन इत्यादि अनार्यकर्मप्रवर्तनं लक्षणम्। उदाहृयत इत्युदाहारः दुर्भाषितवचनं च तदुदाहारश्च दुर्भाषितोदाहारः।

तं किमर्थं कुरुत इति। अथेत्यादि। बोधिसत्त्वानां वचनसमनन्तरं सर्वतथागताः अक्षोभ्यादयः तानेवमाहुः। अलमित्यादि। अलं पर्याप्तौ। युष्मदभिप्रायो ज्ञातः। किं बहुनेत्यभिप्रायः। सन्ध्यायोक्तं भगवद्वचनम् यथारुतं गृहीत्वा दुर्भाषितमिति मन्यमाना एवं वदिष्यथ। कस्मात्? प्राणातिपातिन इत्यादि वज्रपदोक्ताया धर्मताया बुद्धानाम् अत्यन्तबोद्धृणां रत्नपुद्गलानां सारज्ञानिनां सारोऽप्रतिष्ठितनिर्वाणं तस्मिन् ज्ञानमवबोधो येषां ते तथोक्ताः। सारधर्मं परमार्थसत्यम्। अर्थः संवृतिसत्यम्। ताभ्यामभिन्नाकारेण संभूताः संप्राप्ताः सारधर्मार्थसंभूताः। एवं विशिष्टरूपा धर्मता। रत्नपुद्गलानामेव देया नान्येषाम्। अतएव सन्ध्याभाषया देशितेति तथागतानामभिप्रायः एष बोधिचरीपदमिति एष इयं बोधिचरी बोधिचर्यापदं वज्रधरत्वम्। अनया ध्रुवं वज्रधरत्वमवश्यमवाप्यत इति चर्यापदमित्युक्तम्। यथारुतम्॥

अथ खल्वनभिलाप्येत्यादि विभक्तार्थंम्। पूर्वं प्राणातिपातादीनामितिकर्तव्यतया विधानेन भीता भयमापन्नाः कटुकविपाकत्वात्। अकरणेन च भगवदाज्ञालङ्घनेन च भयात् संत्रस्ताः किंकर्तव्यविमूढतया संभ्रान्तः सन्तः। पश्चात् प्राणातिपातिन इत्यादि वज्रपदं तथागतसकाशात् निश्चयार्थं श्रुत्वा हर्षपरवशतया मूर्छिता अभूवन्। अनधिगतपूर्वधर्मताधिगमेन, तदेकाग्रमनस्कत्वात् निरुद्धा शेषेन्द्रियवृत्तयः संजाता इत्यभिप्रायः। नेयार्थः॥

पुनरार्षव्याख्यानमुच्यते॥

अस्थानकमिदं गुह्यं शान्तैकं सुखमुत्तमम्।
सन्ध्याय कथितं चेदं सम्यक्संबोधिप्रापकम्॥

आकाशानन्ततायोगाद् रूपादीनामनन्तता ।
ते वै तथागताः प्रोक्ता बोधिसत्त्वास्तथैव च ॥
तत्त्वसंग्रहमेवेदं मण्डलं यत् स्वकायतः ।
कल्पयन्तीह सत्काया बोधिसत्त्वा हि मूर्च्छिताम् ॥
न जानन्ति तदित्थं ते सुखेनोन्मादचोदिताः ।
बोधिसत्त्वान्महासत्त्वान् वक्ष्यन्ति मूर्च्छिता इति ॥ नीतार्थः ॥

अथेत्यादि एतान्महाबोधिसत्त्वानिति यावत् सुगमम् । यथारुतम् ।

आकाशसमता तत्तुल्यता । न द्वयमद्वयम् । आकाशसमताद्वयम् । तदेव वज्रं तन्नामकं समाधिं समापन्नः । समनन्तरसमापन्नस्य समाधिरसमापन्नमात्रस्य भगवत इत्यादि विभक्तार्थः । एवंभूतस्य महावज्रधरस्य प्रभया रश्मिसंहत्या स्पृष्टमात्रया स्पर्शमात्रया स्वेषु स्वेष्वासनेषु स्थिता अभूवन्निति । पुनः स्मृतिं प्रतिलब्धवन्त इति । नेयार्थः ।

आकाशं शून्यत्रयं समता प्रभास्वरं तयोरद्वयं युगनद्धता । अभेद्यत्वाद् वज्रम् । तन्नामकं समाधिं समापन्न इति । अस्थानकसमाधिस्थितेषु बोधिसत्त्वरूपावस्थितस्वात्मसु प्रापितवान् समनन्तरसमापन्नस्येति एवं कृताधिष्ठानमात्रस्य महावज्रधरसंबन्धिन्या प्रभया आलोकपुञ्जेन स्पृष्टमात्रयेति प्रभाविशेषणं स्पृश्यत इति स्पृष्टो वायुः तस्य मात्रा यस्याः तया प्रभया सूक्ष्मधात्वनुप्रविष्टज्ञानरश्मिप्रसरैः प्रभास्वरात् व्युत्थितवन्त इत्यर्थः । स्वेषु स्वेष्वासनेष्विति । यथास्वं लोकधातुषु स्थिता इति । सत्त्वार्थक्रियानिष्पादनसमर्था अभूवन् । नीतार्थः ॥

अथेत्यादि । भगवतो गम्भीरधर्मदेशनाकौशल्येनाश्चर्यप्राप्ताः । अभूतपूर्वं भूतमित्यद्भुतः । अत्यद्भुतेनौद्बिल्यं अत्यद्भुतौद्बिल्यं संभ्रमः । देशनाधिगतसमाधिविशेषेण निष्पन्नसत्त्वराशिदर्शनात् । अत्यद्भुतौद्बिल्यप्राप्ताः । एवं धर्माणां एवंप्रकारं धर्मघोषमिति धर्मसंप्रयुक्तं घोषमकार्षुः कृतवन्तः । धर्मदेशनाप्रसन्नास्तथागताः धर्मस्तवनद्वारेण तद्देशकमेव अहो इत्यादिभिः गाथाभिः स्तुतवन्तः ॥

अहो विस्मये । धर्म इति देशनालक्षणो धर्मः । द्वितीयेन धर्मशब्देन तत्प्रतिपाद्योऽर्थो विवक्षितः । धर्मार्थसंभव इति । धर्मोऽभिधानलक्षणः अर्थोऽभि-

धेयलक्षणः तत्संभवो धर्मार्थसंभवः। कोऽसौ ? धर्मशुद्धचार्थनैरात्म्यमिति। धर्म[:] श्रुतमयः शुद्धार्थः चिन्तामयः। ताभ्यामामुखीकृतं नैरात्म्यम्। किं तत् ? भावनामयवज्रराज इति। वज्रास्तथागताः तेषां राजा अधिपतिर्महावज्रधरः। एवंविधाय तुभ्यं नमो नमः। भगवतः सत्यद्वयात्मकत्वात् आम्रेडितवचनम्।

कायवाक्चित्तैः संशुद्धः कायादीनामन्योऽन्यमपृथक्त्वात् आकाशसमता प्रभास्वरं तदालयं यस्य स तथोक्तः उत्पादनिरोधापगमात्। निर्विकारविशुद्धाभासत्वात् निराभासः। वज्रकाय इति इन्द्रायुधवत्। पञ्चरश्मिपरिघटिताविनश्वरसर्वाकारवरोपेतदेहो वज्रकाय तुभ्यं नमो नम इति पूर्ववदाम्रेडितम्।

सर्वबुद्धगुणैश्चितत्वात् चित्तं तथागतानामादिभूतत्वात् श्रेष्ठः प्रधानः। त्र्यध्वपथे वर्तितुं शीलं येषां ते त्र्यध्वपथवर्तिनः। अतीतादिकालवर्तिनः पदार्थाः त्वम् सर्वभावस्वभावत्वात्। महाकाशप्रभास्वरस्त्वमेव। त्वमेव धातुभूतः। त्रैधातुकत्वं आकाशपदं ऋद्धचैश्वर्यप्राप्तत्वात्। तुभ्यं नमो नम इति सत्यद्वयात्मकत्वादाम्रेडितम्।

आकाशकायसंभूत इति। आकाशवत् कायो यस्य तदाकाशकायज्ञानमादर्शज्ञानं तस्मात् संभूतो वैरोचनः, तन्मयत्वात्। आकाशपथं समताज्ञानं तस्माद् वर्तते निष्पाद्यते तत्संभवतया यः स आकाशपथवर्तको रत्नसंभवः। आकाशवच्चित्तं यस्य स आकाशचित्तोऽक्षोभ्यः सुविशुद्धधर्मधातुस्वभावत्वात्। धर्माः पद्मलीनास्तेषामग्रः प्रत्यवेक्षणाज्ञानात्मकोऽमिताभः। सकलजगदर्थाश्चर्याः तेषां पदं प्रतिष्ठां कृत्वानुष्ठानज्ञानस्वभावोऽमोघसिद्धिः। अनया गाथया पञ्चकुलात्मकत्वेन भगवन्तं महावज्रधरं स्तौति॥

स्वपरार्थसाधिका चर्या समन्तचर्या सैवाग्रं विशिष्टं समन्तचर्याग्रं तदर्थप्रतिपादकः पटलः समन्तचर्याग्रो नाम॥ नासन्ध्यम्॥

॥ प्रदीपोद्योतनटीकायां पञ्चमपटले षट्कोटिव्याख्या ॥

—o—

## ॥ षष्ठः पटलः ॥

स्वाधिष्ठानक्रमाहङ्कारपूर्विका चर्या कर्तव्येति कायाद्यधिष्ठानक्रमः प्रदर्श्यंते। अथेत्यादि। सर्वतथागतकायवाक्चित्तोऽक्षोभ्यः। तस्य गुह्यं तदधिष्ठायको मन्त्रः स यस्मिन् तन्नामकं समाधिं चित्तैकाग्रतां समापद्य आमुखीकृत्य इदं वक्ष्यमाणं चित्तमधिष्ठीयते। येन सचित्ताधिष्ठानः मनस्त्रायते इति मन्त्रः तमुदाजहार कथितवान्।

ओं सर्वतथागतचित्तवज्रस्वभावात्मकोऽहम्। इति ॥

अथेत्यादि। विरजवज्र आदर्शज्ञानात्मको वैरोचनः। तस्य पदं तदधिष्ठायको मन्त्रः। स यस्मिन्। तन्नामकं समाधिमालम्ब्य कायाधिष्ठानमन्त्रमुदाजहार।

ओं सर्वतथागतकायवज्रस्वभावात्मकोऽहम्। इति ॥

अथेत्यादि। अमितमप्रमाणमायुः यस्मात् लभ्यते सोऽमितायुः समताद्वयप्रत्यवेक्षणाज्ञानात्मकोऽमिताभः। तस्य वज्रस्तदधिष्ठायकोऽभेद्यस्वभावो मन्त्रः। स यस्मिन् तन्नामकं समाधिमामुखीकृत्य वागधिष्ठानमन्त्रमुदाजहार।

ओं सर्वतथागतवाग्वज्रस्वभावात्मकोऽहम्। इति ॥

एवं कायाद्यधिष्ठानमन्त्रमुद्दिश्य पुनर्निर्दिशन्नाह। त्रिवज्रमित्यादि। त्रयः कायवाक्चित्तवज्राः यस्मिन् तत् त्रिवज्रम्। किं तत्? पदं शरीरम्, देवताचक्रस्याधारत्वात्। ताथागतं अक्षोभ्यादिस्वभावम्। गुह्यं श्रावकादिभिरपरिज्ञातत्वात्। पदविभावनमिति। पदं लोचनादिव्यूहत्रितयम्, स्वपरार्थसम्पदाधारत्वात्। तस्य विभावनम्। कायवज्राद्यधिष्ठानार्थम् स्फुरणं यस्मिंस्तदेवम्। मन्त्रा अक्षोभ्यादयः। ते लक्ष्यन्ते यैस्तानि मन्त्रलक्षणानि त्र्यक्षराणि। तैः शिरः कण्ठहृद्देशेषु विन्यस्य तैर्लक्षितम्। तदेव एभिरनन्तरोक्तैः कायाद्यधिष्ठानमन्त्रैः प्रवरैरुत्कृष्टै निष्पादयेदधितिष्ठेदिति। नेयार्थः।

निष्पन्नक्रमयोगिनां कायवाक्चित्ताधिष्ठानं व्याख्यातन्त्रादवतार्यते।

अथाक्षोभ्यो महावीरः कायवाक्चित्तगुह्यकम्।<br>
समाधिं तु समापद्य चित्ताधिष्ठानसंज्ञकम् ॥

उदाजहार मन्त्रं स ओमित्यादि प्रकीर्तितम् ।
सर्वतथागतेति द्विगुणाख्यापरिकल्पितम् ॥
चित्तवज्रेति द्विद्विसंयुक्तं स्वभावात्मकपञ्चमम् ।
अहं षष्ठाभिधाने स्यात् षट्कायत्रिकसंज्ञिकम् ॥
अथ वैरोचनः श्रीमान् विरजवज्रसंज्ञिकम् ।
समाधिं तु समापद्य कायाधिष्ठानकं वदेत् ॥
ओमिति ब्रह्मणाख्यातं सर्वताथागताद्विकम् ।
कायरागगतो ह्येष वज्रवेदः प्रकीर्त्तितः ॥
स्वभावात्मककामः स्यात् तदहं कार्त्तिक उच्यते ।
सन्ध्याय कलितं सम्यक् प्रज्ञाभेदेन भेदयेत् ॥
अथामिताभसंज्ञी तु समताद्वयवज्रकम् ।
समाधिं च समापद्य वागधिष्ठानकं वदेत् ॥
ओमित्यादि समाख्यातं सर्वताथागताद्विकम् ।
वागिति त्रिगुणं ज्ञेयं युगं वज्रसंज्ञकं भवेत् ॥
स्वभावात्मककामाख्यमहमिति स तु स्मृतः ।
त्रयश्चैते समाख्याताः प्रत्येकं षट्त्रिकोदिताः ॥
क्रमव्यतिक्रमं चोक्तं स्याच्चित्तकायवाक्तथा ।
त्रिवज्रसंज्ञिनो जाता अधिपत्यैकधर्मतः ॥

इति त्रिवज्रं ताथागतं गुह्यमिति । त्रिवज्रं ज्ञानत्रयम् । कीदृक् ? ताथागतं तथागतादायातम् गुह्यं उत्पत्तिक्रमयोगिनामगोचरत्वात् । पदं पदविभावनमिति । पदं परमार्थसत्यम् । विज्ञानत्रयप्रतिष्ठाभूतत्वात् पदं संवृतिसत्यम् । तद् विभाव्यते उत्पद्यते यस्मात् तत्पदविभावनम् । परमार्थसत्यस्यैव तद्विशेषणम् । एभिरनन्तरोक्तैः प्रवरैश्चतुःशून्यैः । मन्त्रास्तथागताः । तेषां लक्षणानि पञ्चरश्मयः । तैः पञ्चलक्षणैर्लक्षितम् विषयीभूतं वज्रदेहं निष्पादयेत् घटयेदिति । नीतार्थः ।

एवमात्मानः कायाद्यधिष्ठानं कृत्वा स्वकुलाङ्गना पञ्चकुलकलापिनीं कृत्वा उभयचक्रानुरागणमन्त्रावतारणायाह । अथ भगवानित्यादिः विभक्तार्थः ।

ओं सर्वतथागतानुरागणवज्रस्वभावात्मकोऽहम् । इति ॥

अनेन लिङ्गयेत् । समापत्त्यनन्तरं सर्वतथागतपूजामन्त्रावतारणायाह । अथ भगवानित्यादि । एतदपि गतार्थम् ॥

ओं सर्वतथागतपूजावज्रस्वभावात्मकोऽहम् । इति ॥

अनन्तरोक्तो यो विधिस्तेनै[व] सदामन्त्रिणा वर्तितव्यमिति । तस्मिन्नेव दाढर्यमुत्पादयितुमाह । पञ्चकामगुणैर्बुद्धान् पूजयेद् विधिना सदा इति । निष्पन्नक्रमयोगिनां पुनरन्यं पूजाविधिं निर्दिशन्नाह । पञ्चोपहारमित्यादि । उपह्रियन्ते लीयन्ते इत्युपहाराः । पञ्चोपहारा यस्मिन् स पञ्चोपहारः । षष्ठ-स्तथागतः । तस्य पूजा । पञ्चतथागतस्वभावेनादर्शादिपञ्चज्ञानैर्हेतुभूतैः प्रभा-स्वराधिगमः । ताभिः पूजाभिः । लघु क्षिप्रम् । इहैव जन्मनि बुद्धत्वं त्रिकाया-त्मकं सौगतपदमाप्नुयात् ।

इति इत्थं द्विप्रकारां पूजामाह । भगवान् सर्वतथागतकायवाक्चित्ता-धिपतिर्महावज्रधरः । अमुमेव पूजाविधिं दर्शयन्नाह **व्याख्यातन्त्रे** ।

रूपं शब्दं गन्धं रसं स्प्रष्टव्यं धर्मधातुकम् ।
कृत्वा तन्निस्वभावं स्याद् बुद्धपूजा तदुत्तमा ॥
चक्षुरादिज्ञानसम्भूतैः पञ्चाभिज्ञोपशोभितैः ।
एभिः पञ्चोपहाराख्यैर्लघु बुद्धत्वमाप्नुयात् ॥ इति । सन्ध्याभाषा ॥

एवं वाह्याध्यात्मिकपूजां निर्दिश्य निष्पन्नक्रमेण विना शीघ्रं बोधिर्न लभ्यत इति दर्शयितुमाह । अथेत्यादि । महावज्रधर इदं वक्ष्यमाणकं सर्व-तथागतमन्त्रं सर्वतथागतवाक्कायमनसी च (?) उपलक्षणान्मन्त्रस्य । तेषां सर्वतथागतकायवाक्चित्तानां रहस्यं विशुद्धिपदमुदाजहार ।

मन्त्रनिध्यप्ति इत्यादि । मन्त्रा आलिकालिजमिताः (?) सर्पादि-स्वभावाः तेषां स्त्रीपुंनपुंसकत्वेन त्र्यक्षरावरोधान्मन्त्राः त्र्यक्षराणि । तेषां प्रवेशस्थितिव्युत्थानस्वभावेन परिज्ञानं मन्त्रनिध्यप्तिः । तत्र पूर्वकं कायेन वज्रजापस्य साधनभूतेन निर्माणशरीरेण वाचा वज्रजापेनोपलक्षितः । मनसि हृदिस्थितो वज्रसत्त्वः चोदितः । यथाभूतपरिज्ञानेन विषयीकृतः । भावयेदिति । योगिसन्तानस्य वक्ष्यमाणकाश्चतस्रोऽवस्था निष्पादयेत् । कास्ता इत्याह । प्रवरामित्याह । प्रवरामुत्कृष्टां चित्तविवेकलक्षणां वज्र-जापादधिकत्वात् सिद्धिमिति । स्वाधिष्ठानलक्षणा महामुद्रा मनः सन्तोषयतीति मनः सन्तोषणं महामुद्राविशुद्धिकरत्वात् । प्रियामिष्टां भवसम एकलक्षणां महावज्रधरमूर्त्तिं निष्पादयेत् । अनेन वज्रजापस्यानुशंसा वर्णिता भवति ।

चत्वार्युद्देशपदानि निर्दिशन्नाह । चित्तनिध्यप्तीत्यादि । चित्तस्य निध्यप्तिर्द्वितीयक्रमेण यथाभूतपरिज्ञानं तत्कृतम् । चित्तस्य नैरात्म्यं यत् तत् चित्तनैरात्म्यम् । वाचा काय इत्यादि । वाक्काययोरपि नैरात्म्यम् । विभावनमिति । चित्तप्रतिवेधं निष्पादयेत् कुर्यादित्यर्थः । अनेन कायवाक्चित्तलक्षणं प्रज्ञोपायोपलब्धत्रयं दर्शितं भवति । ततः किमित्याह । त्रिसंयोगमित्यादि । त्रयाणां ज्ञानानां संयोगः एकीभावो यस्मिन् तं त्रिसंयोगं मनोमयदेवतारूपम् । आकाशसमता परमार्थसत्यम् । तदालय उत्पत्तिस्थानं यस्य वज्रधरस्य तं निष्पादयेत् ।

कायवाक्चित्तनिध्यप्तेः स्वभावो नोपलभ्यत इति । कायवाक्चित्तानां निध्यप्त्या निरूपणेन यः प्राप्तः स्वभावः संवृतिसत्यं स नोपलभ्यते, सर्वेषां परमार्थसत्यगमनात् । अनेनाभिसंबोधिक्रमः प्रकटितः । इत्थं ज्ञानमयेऽपि काये प्रतिष्ठामलभमानस्य कदाचित् कल्पितयोगेन देवतामूर्तौ स्थितिर्लभ्यत इत्याशङ्का स्यात् । तन्निराकर्तुमाह । मन्त्रमूर्तिप्रयोगेणेत्यादि । मन्त्राः प्रणवादयः । तैः कृता मूर्तिः । मन्त्रमूर्तिः । तस्याः प्रयोगो वज्रचतुष्कं तेन न बोधिर्न बुद्धत्वम् । यस्मान्मन्त्राद्यक्षराणि तावत्सामग्रीजनितान्युत्पन्नप्रध्वंसित्वात् । खसमानि कुतस्तैर्जनिता मूर्तिः । न च भावनेति । भाव्यमानदेवतारूपाभावात् तद्भावनायाप्यभावः । एवं धर्मसंभोगकायादीनामपि हेयत्वात् ।

समाजात्मप्रतिष्ठानलक्षणं महावज्रधरपदं दर्शयन्नाह । विचार्येत्यादि । इदमित्यनन्तरोक्तं कायवाक्चित्तलक्षणं मन्त्रनिध्यप्त्यादिक्रमेण विचार्य परिज्ञाय कायवाक्चित्तानि यैर्लक्ष्यन्ते तत्कायवाक्चित्तलक्षणं शून्यत्रयं समासेन संवृतसत्यस्य परमार्थसत्येनैकीकरणेन बोधिसंयोगं समाधिं मन्त्रकल्पितं भावयेदिति । बोधिः परमार्थसत्यं तेन संयोगो यस्य तं बोधिसंयोगं समाधिवज्रोपमसमाधिम् । मन्त्राः पञ्चरश्मयः । तैः कल्पितं घटितं भावयेत् अभ्यसेत् । अनेन युगनद्धवाहिक्रमः प्रदर्शितो भवति । सन्ध्याभाषा ॥

इदानीं तृतीयपटलोक्तमेव सूक्ष्मयोगं पुनरपि वायुविज्ञानसहितं निर्दिष्टमाह । अथेत्यादि । अथशब्दो निष्पन्नक्रमप्रदर्शनानन्तरम् । वज्रधर इति । वज्रं धारयतीति वज्रधरः । अक्षरार्थः । आदर्शादिज्ञानपञ्चकं तन्मयत्वेन धारणाद् वज्रधरः । समस्ताङ्गम् । मनोमयदेहधारणाद् वज्रधरः ॥ गर्भी ॥

वज्रमद्वयज्ञानं तस्य तन्मयत्वेन धारणाद् वज्रधरः ।। कोलिकम्। उभयसंभारोपेतत्वात् श्रीमान्। सर्वतथागतलोचनादयस्ताभिरर्चितः सर्वतथागतार्चितः। सर्वबुद्धा वैरोचनादयस्तेषां मध्ये अग्रः सर्वज्ञश्चित्तवज्रः वक्ष्यमाणकं भावनोत्तमं भाषते।

आकाशधातुमध्यस्थं प्रभास्वरस्कं चन्द्रमण्डलमालोकपुञ्जं भावयेदिति। पूर्वं संभोगकायं निष्पादयेत्। बुद्धविम्बं प्रभावित्वेति पश्चात्। पञ्चस्कन्धाद्यनुप्रवेशेन सर्वतथागतपरमाणुघटितं निर्माणकायमात्मानं निष्पाद्य वक्ष्यमाणक्रमेण सूक्ष्मयोगं समारभेत् ।।

नासाग्रे सर्षपं चिन्तेत् सर्षपे सचराचरम्।
भावयेज्ज्ञानप्रदं रम्यं रहस्यं ज्ञानकल्पितम् ।।

इत्यनेन वज्रपदेन सूत्रेण प्राकृतसत्त्वानामुत्पत्तिं कल्पितदेवतालम्बनं वायुतत्त्वं मन्त्रतत्त्वं ज्ञानतत्त्वं परिशुद्धदेवतातत्त्वं च निर्दिशति। आदौ सत्त्वोत्पत्तिकारणं निर्दिश्यते। ऊर्ध्वस्थिताः प्राणायामाद्वयेन्द्रियसमागमे आध्यात्मिकप्रज्ञोपायसमापत्त्या हर्षप्रेरिते सकलाङ्गं महारागानलेन द्रवीभूय बोधिचित्तविन्दुरूपेण पद्मनासाग्रे पतति। एतद्भवोत्पत्तिक्रमभावकानां तथागतैः सर्षपशब्देन संकेतितम्। इममाह **समाजोत्तरे**

पञ्चज्ञानमयं श्वासं पञ्चभूतस्वरूपकम्।
निश्चार्य पञ्चनाशाग्रे पिण्डरूपेण कल्पयेत् ।।
पञ्चवर्णं महारत्नं प्राणायाम इति स्मृतः ।। इति।

सर्षपे सचराचरमिति। सर्षपे शुक्रविन्दुमध्ये सचराचरलोकं चिन्तयेत् उत्पद्यमानं विजानीयात्।

अमृतं शुक्रमित्युक्तं तत्प्रसूतं जगत्त्रयम्।

इति वचनात्। अस्मिन्नेव सर्षपे कल्पितयोगाभ्यासं सचराचरं वज्रसत्त्वं चिन्तयेत्। अस्यैव विशेषणं भावयेत् ज्ञानप्रदं रम्यं रहस्यं ज्ञानकल्पितमिति। नेयार्थः।

निष्पन्नक्रमस्य चाह। नासाग्रे सर्षपं चिन्तेदित्यादि। हृदये गुह्ये कण्ठे नाभौ सर्वशरीरेषु स्थिताः पञ्चज्ञानस्वभावाः पञ्चरश्मयः प्राणायामो भूत्वा नासाग्रे ऊर्ध्वनासिकायां घ्राणविवराच्चतुर्मण्डलावर्तेन परिपाट्या निश्चरन्ति। यथोक्तं **वज्रमालायाम्**।

नासाग्रे सर्षपं नाम प्राणायामस्य कल्पनात् ।
प्राणायामे स्थिताः पञ्चरश्मयो बुद्धभावतः ॥
ऊर्ध्वं प्राणाद् विनिष्क्रान्ता वामदक्षिणद्वन्द्वतः ।
स्तब्धश्चेति चतुर्धा स्याद् वेला त्वाध्यात्मिकी स्मृता ॥
स्वमन्त्राधारयोगेन दिवा रात्रौ च सर्वतः ।
विहरेदर्द्धयामिका वेला परिपाट्या यथाक्रमम् ॥

नासाग्रे सर्षपं चिन्तेदित्यस्य वज्रपदस्यार्थः । अनेन वायुतत्त्वं मन्त्रतत्त्वं कथितं भवति । सर्षपे सचराचरमिति । सर्षपे सूक्ष्मधातौ । आधाराधेयभूतं सचराचरं विज्ञानत्रयं बोधात्मकं चिन्तेत् विजानीयादिदं ज्ञानतत्त्वं प्रभावयेत् । ज्ञानपदं रम्यं रहस्यं ज्ञानकल्पितमिति । इममर्थं महायानसूत्रेऽपि सन्ध्याभाषया निर्दिष्टम् ।

एक हि वाल यथेव हु बुद्धा
यन्तिक वालिक गङ्ग नदीय इति ।
एक रजाशिर जोयमबुद्धा
न बुद्धसुतान निषण्णहु मध्य ॥ इति ।

देवतातत्त्वमुच्यते । नीतार्थः ॥

इदानीं मन्त्रवायुसमायोगाच्चतुर्मण्डलोदये कुलभेदेनाभिन्नाङ्गजापक्रमं प्रदर्शयितुमाह । आकाशधातुमध्यस्थ इत्यादि । आकाशधातुरत्र[ा]नाहतं तन्मध्यस्थं तत्प्रभवं सूर्यमण्डलं अग्निमण्डलं रक्तरश्मिस्वभावं दक्षिणाद् विनिष्क्रान्तं रश्मिकलापं भावयेद् विजानीयात् । बुद्धविम्बं पदं ध्यात्वेति । बुद्धो वैरोचनः । विम्वममिताभः । तयोः पदं प्रणवाकारौ तत्प्रवेशस्थिति-ध्यानोपलक्षितयोः ओंकाराकारयोरुपरिष्टात्तदं हूंकारं व्युत्थानात्मकं न्यसेत् । परिकल्पयेत् । अयममिताभजापः । चन्द्रमण्डलं वारुणं मण्डलं स्तब्ध-स्वभावं लोचनाया आकारः तेन संयोगो यस्य तदवदातमस्फुटप्रचारं लक्षयेत् । वज्रपद्मेऽथ भावयेदिति । अथ ओंकारपरावृत्त्यनन्तरं पद्मं आःकारे तस्मिन् परावृत्ते वज्रहूँकारं व्युत्थानं प्रवर्तयेत् । अयं वज्रजापः ।

रत्नमण्डलं रत्नसंभवस्य माहेन्द्रमण्डलं द्वन्द्वप्रचारं पीतवर्णं आदियोगं प्रयत्नेन तस्योपरि विभावयेदिति । तस्य मण्डलस्योपरिष्टात् आदियोगं

त्र्यक्षरं स्फरणसंहरणानिलयात्मकं प्रयत्नेन एकाग्रतया भावयेत्। लक्षयेत् अयं रत्नजापः।

आकाशधातुमध्यस्थं भावयेद्रश्मिमण्डलम्।

इति। हैनाहताद्रश्मिमण्डलं वायव्यमण्डलं कृष्णवर्णं वामाद्विनिष्क्रान्तं तस्योपरि बुद्धपदं हुंकारं सौम्यं ह्रस्वं प्रवेशस्थित्यनन्तरं सृजेत् स्फरेद्। अयममोघसिद्धि-जापः। परिवारं विशेषत इति। एषां चतुर्णां मण्डलानामेकैकस्य मण्डलस्य प्रवृत्त्या वितरणं मण्डलत्रितयं परिवारभूतं तदन्तर्भावेन सृजेदिति।

अस्य वज्रजापस्याहोरात्रं जापसंख्या **व्याख्यातन्त्रादवतार्यते**।

पाण्डरादिजापः प्रोक्तः पञ्चविंशत्शतद्वयम्।
चतुर्गुणितं सम्यक्चतुर्योगं शतं नव॥
नवशतं तु यद् दृष्टं चतुर्विंशत्परिक्रमैः॥
प्रत्युत्पादाद् भवेत्तस्य द्वचयुतं शतषोडशम्॥ इति।

उभययोगिनामपरं सूक्ष्मयोगान्तरमाह। नीलोत्पलेत्यादि। नीलोत्पलवर्णं वज्रं यवफलप्रमाणं स्वकुलिशच्छिद्रे भावयेत्। चणकास्थिप्रमाणपद्मं केशर-पंक्त्यालंकृतं धर्मोदयान्तर्गतं बोधिपरायणं बोधिप्रापकं भावयेत्। तत्र योषिन्ना-सिकाग्रे चक्ररत्नवज्राणां भावनं चणकास्थिप्रमाणेनैव कुलभेदेन भावयेत्।

ततः किमित्याह। सिध्यत इत्यादि। बोधिपदं बोधिरद्वयज्ञानं तस्य पदं कारणम्। किं तत्? परमार्थसत्यम्। क्लेशविशोधनाद् रम्यं मनोहरम्। सर्वसिद्धयः शान्तिकादयः। गुणाः कामैश्वर्यादयोऽष्टौ। एषां सर्वसिद्धि-गुणानामालयं स्थानभूतं बोधिपदं सिध्यते। तस्य योगिनः प्रत्यक्षो भवति।

कथं परमार्थसत्यं प्रत्यक्षीकरोतीत्याह। सृजेदित्यादि। बुद्धान् स्कन्धादीन् बोधिप्रतिष्ठितान्। निर्माणकायावस्थितान्। समासेनेति ज्ञानत्रयं संयोगेन स्थितं कृत्वा तत्र परमार्थसत्ये सृजेत् निक्षिपेत्। एवं परमार्थसत्यप्रवेशानन्तरं व्युत्थानं प्रदर्शयितुमाह। निश्चारयेदित्यादि। कायवाक्चित्तलक्षितं त्रिकायात्मकं धर्मप्रभास्वरं तत् पदं कारणं यस्य। तद् धर्मपदं महावज्रधरमात्मानं निष्पादयेदिति। सन्ध्याभाषा।

इदानीं पञ्चकामगुणद्वारेण निष्पन्नक्रमं द्योतयन्नाह। अथ वज्रधर

इत्यादि । अथ सूक्ष्मयोगानन्तरं सर्वसत्त्वार्थः अद्वयज्ञानं तस्य देशकः सर्वसत्त्वार्थ-देशकः ।

सर्वचर्याप्रपञ्चनिष्प्रपञ्चात्यन्तनिष्प्रपञ्चचर्यास्तासामग्रचर्या भुसुकु चर्या तया संशुद्धं वज्रधर पदप्रापणादुत्तमं गुह्यं वक्ष्यमाणकं भाषते । षण्मासमित्यादि । रूपशब्दरसान्वित इति त्ववज्राभेद्यस्वभावात्मानं ज्ञात्वा च षण्मासं सततं भावयेत् ।

विण्मूत्र इति । विण्मूत्राहारकृत्यर्थं शरीरस्थित्यर्थं सिद्धिफलार्थी कुर्यात् । ततः किम् ? अनुत्तरं तत्त्वं सिध्यते । तदेव दर्शयति । बोधिचित्तमनाविल-मिति ।।

मांसमित्यादि । आहारकृत्यर्थं उपहारार्थं क्रोधदेवतानां निवेद्यार्थं यदि मासं कल्पयेत् तदा महामासं प्रकल्पयेत् । रहस्यं मारणादि कर्म तस्मिन् भवं तद्विषयं रहस्यम् । किं तत् ? कायवाक्चित्तं सिध्यते अ[ा]नुकूल्ये समापद्यते । न केवलं मारणादिषु इति दर्शयति । सर्वसिद्धिष्विति । गुलि-कादिसिद्धिष्वातेनस्या (?) योगिनः कायवाक्चित्तसौस्थित्यं जायते ।

एवं वज्रकुलिनः क्रोधानामुपहारमुक्त्वा तथागतादिकुलक्रोधानामुपदर्शयन्नाह । हस्तिमांसेत्यादि । उत्तममिति । गोमांसं भक्षयेदिति । एतन्मांसचतुष्टय-माहारकृत्यर्थं निवेद्यार्थं तथागतकुलादिक्रोधगणैर्भक्षयेत् । एतेषामभावे किं कुर्यादित्याह । अन्यद् यत्किञ्चिदपि मांसं दद्यात् । अन्नं तु ओदनं पुनः न च नैव भक्षयेत् खादयेत् ।

क्रोधानां रौद्रकर्माणि । अन्नस्यानिवेद्यत्वात् फलं दर्शयति । बुद्धानाम-क्षोभ्यादीनां स्वकुलीनपूजाकरणात् प्रियो भवति । धीमतां स्वमुद्रासहितानां तत्कुलप्रतिवद्धबुद्धबोधिसत्त्वानामपि पुनरप्यनुशंसामेव दर्शयति । अनेनेत्यादि ।।

अनेन वलिप्रदानयोगेन लघु क्षिप्रं बुद्धत्वं बोध्यत्वं प्राप्नुयात् न केवलं ज्ञानी भवति किंतु कामधात्वीश्वरो लोके स भवेत पदकर्मकृत् इति । काम-धातुः सर्वाः स्त्रियः तासु विश्वरमणेश्वरो भवति । षट्त्रिंशन्मेरूणां यावन्तः परमाणवः योषितस्तस्य तावत्यो भविष्यन्ति । गुणालयेत्यत्रैवोक्तत्वात् । लोके कर्मभूमौ पदमवैवर्तिकं पदं तस्य कर्म । स तु पावनमोचनलक्षणं तत् करोतीति पदकर्मकृदिति । सर्वदुःखदौमनस्याभिभवनं तेजः तद् यस्यास्ति

स तेजस्वी अष्टाभिर्लोकधर्मैरलङ्घ्यत्वाद् बलवान् परिकल्पितयोगिनामधि-कतरत्वात् । श्रेष्ठः वज्रसत्त्वो यौवनसमन्वितत्वात् । कान्तिमान् सदा-प्रमुदितत्वात् । प्रियदर्शनः धर्मतायोगं महायोगी इमं लोकं मित्रादिप्रकारभिन्नं जनं दर्शने । दर्शनमवबोधः । तत् त्रिविधं चक्षुषा श्रवणेन मनसा वा । तस्मिन् दर्शनमात्रे संजाते वशमानयेदिति । आनयतीति प्राप्ते विपर्ययः । नैव चोदितः बाह्ययन्त्रमुद्रादिभिश्चोदितः प्रेरितः । नैव निमित्तं समाधि-स्थितस्य निर्निमित्त फलमिति **वैरोचनाभिसंबोधितन्त्रे** वचनात् । सर्वसौख्य-मनाभोगेनैव संपद्यते ।

इदमनन्तरोक्तं तत्सर्वबुद्धानामिति । सर्वे कल्पितयोगिनः तेभ्यो विशिष्टा बुद्धा बोद्धारः निष्पन्नक्रमयोगसमाधिस्थाः । तेषां रहस्यं गुह्यं बोधिचित्त-मुत्तममिति । उत्तमा बोधिः तत्प्रापणादुपचारात् । इदमनन्तरोक्तमेव मन्त्र-गुह्यं तथागतरहस्यं प्राकृतकायवाक्चित्तं लङ्घ्यते येन तत् कायवाक्चित्तलङ्घनं तत्त्वम् ॥

एतदुक्तं भवति । प्राकृतदेहमपनीय येन वज्रमयदेहमाप्यते तादृग्विधं तत्त्वमिदमेवेति तथा चोक्तं,

एवं समाधियुक्तेन निर्विकल्पेन मन्त्रिणः ।
कालावधिं परित्यज्य प्राप्यतेऽनुत्तरं पदम् ॥ इति । नेयार्थः ॥

एषामेव वज्रपदानां **व्याख्यातन्त्रानुसारेण** विभङ्गोऽवतार्यते ।

अथ तथागते सोऽपि भाषते गुह्यमुत्तमम् ।
सर्वचर्याग्रसंशोद्धा सर्वसत्त्वार्थभाषकः ॥
क्षणं लवं मुहूर्तं च पक्षमासाब्दकालकम् ।
त्रिसंख्यैककालाख्यं क्षणमेकं विधीयते ॥
षण्मासाख्यं तदेव स्यात् संभोगं निस्वभावतः ।
क्षणैकमुद्भवेच्छस्तं त्र्यध्वातीतं च भावतः ॥
रूपशब्दरसैर्युक्तं षण्मासं भावयेत् कृती ।
कृत्वा वै स महापूजां गुह्यं तत्त्वं विभावयेत् ॥
विषयेन्द्रियनिःसत्त्वं विण्मूत्राहारकृत्यकम् ।
कुर्वन्ति तन्मयां सिद्धिं महारं निर्विकल्पकम् ॥

तत्त्वानुत्तरमेवेदं बोधिचित्तैकसंभवम् ।
सिध्यते निर्विकल्पार्थमनाविलमसंस्कृतम् ॥
मामिति मामकी प्रोक्ता समभिसंबोधिसंज्ञकम् ।
तत्त्वध्यानप्रीतिकाहारं मांसं चेति तदुच्यते ॥
आकाशानन्तयोगाश्वमहामांसं तु तद्भवेत् ।
त्रिवज्रं सिध्यते क्षिप्रं रहस्यं परमं पदम् ॥
महासमयहस्त्यश्वं तथा श्वानादिमांसकम् ।
स्कन्धादिकुलभेदेन यदुक्तं समसंख्यतः ॥
उद्योगाद्वयमाहारं ध्यानप्रीत्यैकसंज्ञिनाम् ।
कवेलिकः स्वरूपं स्यात् लोकोत्तरं च लौकिकम् ॥
लोकोत्तरतमा ये च निर्विकल्पविशारदाः ।
तथतैकस्वभावास्ते संसारेतरवर्जिताः ॥
प्रिया भवन्ति बुद्धानां योगेनानेन सुव्रताः ।
धीमतां बोधिसत्त्वानां बोधिं शीघ्रमवाप्नुयात् ॥
कामधात्वीश्वरा लोके भवन्ति पदयोगिनः ।
तेजस्विनो वलाढ्याश्च कान्तिमान् प्रियदर्शनाः ॥
वशं कुर्वन्ति ते लोकं दर्शनेनैव चोदकाः ।
रहस्यं तदिदं श्रेष्ठं बुद्धानां बोधिमुत्तमम् ॥
गुह्यमन्त्रमिदं तत्त्वं त्रिवज्रालङ्घनं परम् ।
सर्वताथागतं श्रेष्ठं समयं समयोत्तमम् ॥ इति नीतार्थः ॥

कायवाक्चित्तनित्येन (?) तत्त्वेनाविनश्वरस्वभावेनाधिष्ठीयन्ति निष्पाद्यन्ते तद्वाचको ग्रन्थसमूहः पटलः कायवाक्चित्ताधिष्ठानो नाम ॥

॥ प्रदीपोद्योतनटीकायां षष्ठपटले षट्कोटिव्याख्या ॥

---

## ।। सप्तमः पटलः ।।

एवं सामान्येनोत्तमयोगिनां चर्यां संप्रदर्श्य तामेव पुनरपि प्रपञ्चयितुमाह। अथेत्यादि। महासमयो महावज्रधरः तस्य तत्त्वं षडङ्गं मन्त्रचर्यासामान्य-साधनं ताभ्यां प्राप्ता संबोधिः वज्रधरत्वम्। महासमयतत्त्वमन्त्रचर्यासंबोधिः। तदर्थः पटलः तत्प्रतिपादको ग्रन्थसमूहः। तमुदाजहार भगवानिति योगः।

सर्वकामेत्यादि। सर्वकामा रूपादयो विषयाः। तेषामुपभोगोऽनुभावः। तैः सेव्यमानैः। कथमित्यत आह। यथेच्छत इति। इच्छा च्छन्दः। या या इच्छायथेच्छन्तः। इच्छाग्रहणप्रकारः। चक्षुरादीनि चक्षूरूपादीनि हीनमध्यप्रणीतान्येकाकारेण विषयी कुर्वन्ति। योगिनामपि इन्द्रियेच्छानुरूपेण च भोक्तव्यम्। सेव्य-मानैर्यथेच्छत इत्यत्र प्रपञ्चचर्यां चरेदिति वाक्यशेषः। ततः किमित्याह। अनेनेत्यादि। अनेनानन्तरोक्तेन योगेनेति विषयेन्द्रियसमायोगेन। खलु निश्चयेन। बुद्धत्वं वज्रधरत्वं लघु क्षिप्रमिहैव प्राप्नोति।

एवं प्रपञ्चचर्यां निर्दिश्य निष्प्रपञ्चचर्यामधिकृत्याह। सर्वेत्यादि। यथेच्छत इति आत्मेच्छानुरूपतः। यथासुखमनुभूयमानैः पञ्चकामगुणैः स्वात्मानं परांश्च पूजयेत् तर्पयेत्। कथं स्वाधिदैवतयोगेन मायोपमसमाधिना।

अतएवाह। दुष्करैरित्यादि। कायक्लमयोगेन विहारादिनिवर्तनानि दुष्कराणि। वृक्षमूलादिद्वादशव्रतगुणैः। नियमाः गिरिपातनाग्निप्रवेशादीनि तीव्राणि काष्ठानि। एतैः सेव्यमानः पीडचमानो न सिध्यति। बोधिं न लभते। तर्हि कथमित्याह। सर्वकामोपभोगैस्तु सेवयन्नाशु सिध्यतीति। सर्वैः काम्यन्ते प्रार्थ्यन्त इति सर्वकामाः तेषामुपभोगैः सेवयन् महावज्रधरमाराधयन्नाशु इहैव जन्मनि महामुद्रासिद्धिलाभी भवति। यथारुतं निष्प्रपञ्चचर्या।

एवं कायपीडाद्वारेण महामुद्रासिद्धेः प्राप्तिं परिहृत्य मनःपीडामपि साधकस्य निषेद्धुमाह। भिक्षाशिनेत्यादि। भिक्षाशनशीलेन न जप्तव्यं न प्रलपितव्यम्। भिक्षाशनमुपलक्षणार्थम्। तस्माद् भिक्षाटनवत् अन्याभिरपि पर्येषणादिदैन्यवृत्तिभिः समन्वितेन न जप्तव्यमिति। न भैक्षरतो भवेदिति। भैक्षमित्यामिषोपलक्षणम्। भैक्षरत आहारप्रसक्तो न भवेत्। यावन्मात्रेण

शरीरस्थितिर्भवति तावता सन्तुष्टेनात्यन्तनिष्प्रपञ्चचर्या चरितव्या। एवंभूतचर्यास्थितः किं कुर्यादित्याह। जपेदित्यादि। मन्त्रं त्र्यक्षरं अभिन्नाङ्गं अभिन्नदेवतायोगः सर्वकामोपभोगकृत् मन्त्री जपेदिति।

एवं कृते को गुण इत्याह। कायवाक्चित्तेत्यादि। कायवाक्चित्तानां सौस्थित्यं समाहितता। तत् प्राप्यते बोधिं महावज्रधरत्वं समश्नुते सम्यक् अश्नुते प्राप्नोति। अन्यथेत्यादिना दुष्करचर्यायां दोषं सौख्यचर्यायामनुशंसामुद्द्योतयति। विषमां परिहारेण मरणं कालक्रियां कृत्वा ततश्च्युतः सन् नरकेऽवीच्यादौ पच्यते। नेयार्थः। आर्षव्याख्यानमुच्यते।

भिन्नाकारक्षेत्रं भिक्षा तदुच्चारणमशनम्।
एभिर्भिक्षाशिना नेष्टां योजयन्ति हितव्रताः॥
आश्वासं प्रश्वासं योगी चतुर्योगैकतत्परः।
जपेन्मन्त्रमभिन्नाङ्गं प्रज्ञोपायपदे स्थितः॥
अयुतद्वयं सहस्रं च षट्शतानि तथैव च।
अहोरात्रेण योगीन्द्रो जपसंख्यां करोति च॥ नीतार्थः॥

अतीता अपि ज्ञानिनोऽनयैव चर्यया महावज्रधरत्वं प्राप्ता इति निर्देष्टुमाह। बुद्धाश्चेत्यादि। बुद्धा रत्नपुद्गलाः बोधिसत्त्वाः पुण्डरीकाः। मन्त्रचर्याः क्रियाचर्योभयं तत्रोक्ताः चर्यास्ताः समग्रा योगचर्या तां चरितुं शीलं येषां ते तथा। धर्माः संवृतिसत्यं अक्षरं परमार्थसत्यं धर्मयुक्तमक्षरं तद् युगनद्धात्मकं महावज्रधरत्वं सर्वैश्वर्यपदत्वात्। श्रेष्ठमुत्कृष्टं प्राप्ताः साक्षात्कृतवन्तः। सर्वकामोपसेवनैरिति पुनर्दुष्करादिकमेव निषेधयति। असमाधानकरत्वात्। नासन्ध्यम्।

तेषां सेव्यभूतविषयाणां त्रैविध्यं दर्शयितुं पीठिकामारचयति। सर्वेत्यादि। काम्यन्ते सर्वसत्त्वैः प्रार्थ्यन्त इति कामाः। बुद्धत्वं प्रदानगुणयोगाद् गुणाः। कामाश्चैते गुणाश्च कामगुणाः। तान् पञ्चपञ्चेन्द्रियविषयभूतान् रागिणः रागीति प्राप्ते विषयेष्वासक्तः। अद्वयक्रमो ········ सर्वेर्यापथेषु सेवेत् अभ्यसेत्। एवं कृते किमित्याह। तोषयेदित्यादि। बोधिसत्त्वांश्चक्षुरादिस्वभावान् क्षितिगर्भादींस्तोषयेत्। तुशब्दोऽवधारणे। क्षितिगर्भादयस्तुष्टाः किं कुर्वन्ति इत्याह। रागयेदित्यादि। बोधिः पृथिव्यादिस्वभावा लोचनादयः।

ताभिर्युक्ताः प्रभास्वरेण निर्दग्धक्लेशाः तेजस्विनः वोधिसौरिणः वैरोचनादयः तान् लोचनादियुक्तवैरोचनादितथागतान् रूपस्कन्धादिस्वभावान् रागयेत्। सन्तोषयेयुः प्रीणयेयुः आर्षत्वात्। कर्मणि षष्ठी।

त्रैविध्यं दर्शयति। रूपमित्यादि। हीनमध्यप्रणीता त्रिविधं त्रिप्रकारम्। रूपं चक्षुर्विषयं विज्ञाय ज्ञात्वा तत्र प्रणीतेन देवतानां स्वकुलीनानां नानारूपेण पूजनात्मकः प्रपञ्चचर्यास्थितो मन्त्री देवताचक्रं पूजयेत् संतर्पयेत्। स एव भगवानिति। त्रिविधं रूपमिति यदुक्तं तत्रान्यत् विश्वः सर्वात्मकः स भगवान् वैरोचन एव॥

तथैव त्रिविधं शव्दं श्रोत्रविषयं ज्ञात्वा तत्र प्रणीतं देवतानां स्वकुलीनानां निवेदयेत् प्रतिपादयेत्। स एवेति। यः त्रिप्रकारः शब्दः स भगवान् रत्नकेतुर्नान्यः।

तथा त्रिविधं गन्धं ज्ञात्वा विशिष्टबुद्धादीनाममिताभकुलीनानां निवेदयेत् उपढौकयेत्। स एवेति। गन्धो नाम कश्चित् स एव धर्मधरोऽमिताभः।

रसमित्यादि। त्रिविधं रसं ज्ञात्वा तत्र प्रणीतं देवतानां कर्मकुलीनानां निवेदयेत्। यस्त्रिविधो रसः स भगवानमोघसिद्धिरेव।

स्पर्शमित्यादि। तथैव त्रिप्रकारं स्पर्शं ज्ञात्वा प्रणीतेन स्वकुलं वज्रकुलं निवेदयेत् तर्पयेत्। स एवेति यस्त्रिविधः स्पर्शः स एवाक्षोभ्यः।

रूपेत्यादिनानन्तरोक्तमेवार्थं पिण्डीकृत्य कथयति। एवं रूपादीनां वैरोचनादिस्वरूपत्वात्। तेषु सदाहर्निशं चित्तं मनस्कारं नियोजयेदुत्पादयेत्।

इदं तदित्यादि। योऽनन्तरोक्तश्चित्तोत्पादः सर्वबुद्धानां अध्ववर्तिनां गुह्यं रहस्यभूतं वुद्धत्वफलवाहकत्वात् सारसमुच्चयम्।

एवं रूपादीन्युपायस्वभावेन व्यवस्थाप्य पुनस्तेषामेव लोचनादिप्रज्ञास्वभावपरिणतिं दर्शयितुमाह। रूपेत्यादि।

अथवेति पक्षान्तरद्योतको निपातः। रूपादिभिर्विषयैर्देवतां प्रज्ञां भावयेत्। सदा। पुनस्तेषामेव रूपवज्रादीनां कुलभेदेन परिणतिं दर्शयितुमाह। अथवेति। कुलानां भेदः कुलभेदः। स विभाव्यते ज्ञायते यैस्तैः। कुलभेदभावनारूपवज्रादयः पञ्चकुलीनाः तैः कुलभेदविभावनैः भावयेत् महावज्रधरमालम्बयेत्।

सर्वयोगो हि भगवान् वज्रसत्त्व इत्यादि सम्बरे वचनात् समस्ताङ्गम्।

प्रपञ्चचर्यारूपमित्यादि मनआयाम ··· नापाव्याकृतभेदेन त्रिविधम् आभासत्रयो-द्भुतरागविरागोपेक्षाप्रकृतिभिः । विषयभावे चक्षुषा विज्ञायानुभूय पूजनात्मकः पूजनाग्रहणस्योपलक्षणत्वात् । अयमेव पूज्यपूजकस्वभावः सन् पूजयेदात्मानमेव । तस्माद्विश्वः स्थिरचलात्मकः सर्वकुलात्मकः बुद्धो वैरोचनालय इति । वैरो-चनो यस्मिन् लीयते स वैरोचनालयः वैरोचननिष्पादको भगवान् । संभारद्वयो बुद्धो महावज्रधरो यः स एवं योगी । तथैव त्रिप्रकारं शब्दमनुभूय देवतानां प्रज्ञोपायोपलब्धानां निवेदयेत् । रत्नाकरः प्रभवत्यस्मादिति रत्नाकरः प्रभुः विश्वात्मको महावज्रधरो यः विज्ञानत्रयात्मको योगी स एव । तथा त्रिप्रकारं गन्धं प्राप्य विषयीकृत्य बुद्धादीनामालोकादीनां निवेदयेत् । रागधर्मधरोऽमिताभः महावज्रधरः स एव रस इत्यादि । अमोघवज्रो अमोघसिद्धिः तमुत्पादक-स्वभावेन धारयतीत्यमोघवज्रधृक् । महावज्रधरः स एवास्पर्शमित्यादि। स्वकुलमात्मानं निवेदयेत् । अक्षोभ्याकारमक्षोभ्याभासं लम्भयितुं प्रसवितुं शीलं यस्य स अक्षोभ्याकारलाभी वज्री महावज्रधरो यः स एवेति । लाभीति प्राप्ते लाभिन इत्यार्षम् । रूपेत्यादिनानन्तरोक्तमर्थमवद्योतयति । रूपादिषु सदेति । अतीतानागतक्षणयोरभेदवत् वर्तमानक्षणे चित्तं विज्ञानत्रयं नियोज-येदिति । रूपादिश्चित्तमेवेदमिति जानीयादित्यभिसन्धिः । इदमेवानन्तरोक्तं यत् परिज्ञानं सर्वबुद्धानां रत्नपुद्गलानां देयभूतं चन्दनादीनामप्रकाश्यत्वात् । गुह्यं सारसमुच्चयमिति सम्यक् उद्धृत्य चीयते राशीक्रियते इति समुच्चयम् । सारास्त्र्यध्ववर्तिनस्तथागताः । तेषां समुच्चयमनन्तरोक्तनयः । रूपेत्यादि । मन्त्री अभिन्नाङ्गजापी त्रिप्रकारै रूपादिभिः देवतां विज्ञानत्रयं भावयेत् । जानीयात् । ज्ञानत्रयस्यैव प्रकृतिभेदं दर्शयितुमाह । अथवेत्यादि । तत्र तेषु रूपादिषु कुलानि रागविरागमध्यरागप्रभृतयः । तेषां भेदा विशेषाः तेषां विभावनैरनुभावनैः भावयेत् जानीयात् । एतदुक्तं भवति । रूपादि विषयान् वाह्याभिनिवेशपरिहारेण मृद्वादिमात्रस्थितरागादिषष्ट्युत्तरशतप्रकृतिस्वभावानु-भवनेन जानीयादिति ।। गर्भी ।।

निष्प्रपञ्चचर्यारूपमित्यादि प्रणीतादित्रिविधरूपं विज्ञायेति । आभासत्रयत्वेन परिज्ञाय पूजनात्मकः स्वभावज्ञः पूजयेत् प्रभास्वरस्वभावेन परिणामयेत् । इयमेवानुत्तरा पूजा । प्रभास्वर इत्युक्तो यः स एव महावज्रधरः ।

तस्योत्पत्तिकारणत्वात् । एवं शब्दादीनामपि प्रभास्वरस्वभावो विज्ञेयः । यथोक्तं **व्याख्यातन्त्रे** ।

अध्यात्मं च तथा वाह्यमुभयानुपलब्धितः ।
रूपादि त्रिविधं तद् स्यात् देवतानां निवेदयेत् ।।इति ।

इयमत्यन्तनिष्प्रपञ्चचर्या । कोलिकम् ।

इदानीं षडनुस्मृतिराह । बुद्धानुस्मृतीत्यादि। भावयन् कायवाक्चित्तमिति। भावयत इति । प्राप्ते कायं भावयतः शतकुलप्रभेदेन कायविवेकं कुर्वतो बुद्धानुस्मृतिर्भवति । एवं वज्रजापपर्यन्तेन वाचं विवेचयतो धर्मानुस्मृतिः । प्रकृत्याभासक्रमेण चित्तं विवेचयतो वज्रानुस्मृतिः कुलानुस्मृतिरिति । कुलं कायवाक्चित्तं तस्यानुस्मृतिः । ज्ञानत्रयस्वभावेन पृथक्परिज्ञानं संयोगः । पश्चादेकीकरणम् तस्मात् त्रिसंयोगात् क्रोध उपायं ज्ञानं तस्यानुस्मृतिर्भावना नैरन्तर्योत्पादः । तया क्रोधानुस्मृतिभावनया देवतामहामुद्रारूपं तस्यानुस्मृतिः जलचन्द्राद्याकारेण परिज्ञानं तया संयोगः परमार्थसत्येन एकीकरणं तस्मात् संयोगात् भावयन् सत्यद्वयाकारमालम्बयन् । बोधिं महासुखैकलक्षणं वज्रधरत्वं प्राप्नुयात् । अयमेवार्थं द्योतयन्नाह **व्याख्यातन्त्रे**

सर्वबुद्धोषिते रम्ये भगे शान्तैकसंज्ञिते ।
स्वं तत्त्वाद्वयसंभूतं वज्रं तत्रैव योजयेत् ।।
बुद्धानुस्मृतिसंयोगं भगे लिङ्गं प्रकीर्तितम् ।
प्रक्षेपाद्वययोगः स्याद् बुद्धविम्वं विभावनम् ।।
ततो विस्फारयेद् धीमान् रोमकूपाग्रसंस्थितम् ।
बुद्धमेघैः स्फरेत् तत्र मण्डलैस्तु विशेषतः ।। इति । सन्ध्याभाषा ।।

एवं षडनुस्मृतिद्वारेण परिशुद्धं देवतारूपं निष्पाद्य सर्वयोगिसाधारणं समापत्तिक्रमं दर्शयितुमाह । षोडशाब्दिकामित्यादि। नवयौवनाद्यलङ्कृतां योषितं प्राप्य यथालब्धरूपामविकलाङ्गतया सुप्रभां सुलावण्यां प्रच्छन्ने मनोनुकूले रूपादिविषयलक्षणां स्वात्मपूजां प्रारभेत् । कैः अधिष्ठानपदै-स्त्रिभिरिति अधितिष्ठति विषयान् इत्यधिष्ठानं रागादिप्रकृतित्रयं तस्य पदानि मनोज्ञादिविषयाः । एवमधिष्ठानपदैस्त्रिभिः त्रिप्रकारैर्विषयैः स्वात्मानं पूजयेत् ।

एवं महावज्रधरस्य स्पर्शवज्रया समापत्तिमुक्त्वा वैरोचनादीनादर्शयन्नाह। ताथागतीमित्यादि । तथागतस्येयं ताथागती । तत्कुलीनान्यमुद्राणां प्रधानत्वात् महाभार्या । तां पूर्वोक्तां वैरोचनयोगी विभावयेत् ध्यायात् ।

वाशब्दोऽनुक्तसमुच्चयार्थः । तेन रत्नयोगी तामेव मामकीं भावयेदित्यध्याहार्यम् । एवं भावयित्वा किं कुर्यादित्यादि । द्वयेन्द्रियेति स्त्रीपुरुषेन्द्रियं तस्य समापत्तिः । अन्योन्यानुरागणपूर्वकमालिङ्गनादिस्वकर्मानुष्ठानम् । तया बुद्धो महावज्रधरः तस्य सिद्धिः । परमानन्दैकलक्षणां तामाप्नुयात् ।

अत्र मन्त्रपरायणानां विधानान्तरं दर्शयन्नाह। हूमित्यादि। स्वकुलिशं हूंनिर्मितं ओङ्काराधिष्ठितमणिभागं ध्यात्वा आःकारेण मुद्रापद्ममभिसंस्कृत्य रत्नसंभवाहङ्कारवान् त्रों हूंकारगीतनिरतः स्वमुद्रामाराध्य फट्कारेण बोधिचित्तं पातयेदित्यस्य वज्रपदस्यार्थः। विकल्पयेदित्यनेन सर्वमेतत्त्रिकायरूपं विकल्पमात्रं न तत्त्वत इति दर्शयति । पञ्चरश्मीत्यादि । समापत्तिकाले सितादिपञ्चरश्मिभिः समाकीर्णं परिपूर्णकुहरं वज्रपद्मं भावयेत् ।

तामिति । पूर्वोक्तां लोचनां चन्द्रांशुमित्यादिना विशिनष्टि । चन्द्रज्योत्स्नामिव शुक्लां सज्वालां देदीप्यमानां मनोहरां साधकहृदयग्राहिणीं योषितं भावयेद् ध्यायात् । उपलक्षणं चैतत् । नासन्ध्यम् ।

पूर्वोक्तां षडनुस्मृतिं निर्देष्टुकामः बुद्धानुस्मृतीत्यादिना पीठिकां रचयति। बोधिकाङ्क्षीति प्राप्ते बोधिकाङ्क्षिण इत्यार्षम् ।

तत्र कथमित्यादिना देशकः स्वयमेव चोदयित्वा स्वयमेव प्रश्नं विसर्जयति। बुद्धो वैरोचनः । तस्यानुस्मृतिरनुस्मरणम् । सैव पुनः पुनरुत्पद्यमानत्वाद् भावना । भगः परमार्थसत्यं तस्मिन् लीयत इति लिङ्गम् । किं तत् ? संवृतिसत्यम् प्रतिष्ठाप्य प्रभास्वरे प्रवेशस्य बुद्धविम्बं महावज्रधरं भावयेत्। परमार्थसत्याद् व्युत्थापयेदित्यर्थः। रोमकूपाग्रविवरैरिति रोमकूपात् रोमाग्राद् रोमविवरं रोमद्वयान्तरालं तस्माद् बुद्धमेघाद् वैरोचनमेघात् स्फारयेत् निश्चारयेत् । बुधः स्वभावज्ञः । एवं स्फारयित्वा दशदिग्व्यवस्थितगङ्गानदीवालुकोपमलोकधातुपर्यापन्नामोहचरित्वसत्त्वं धातून् विशोध्य पुनरागत्य स्वशरीरे प्रविष्टान् ध्यायात् ॥

धर्मोऽमिताभः । वज्रधर्मोऽत्र महावज्रधरः अविनश्वरस्वभावत्वात् ।

धर्ममेघोऽमिताभसमूहस्तान् पूर्वोक्तक्रमेण स्फारयित्वा संहरेत् । वज्रोऽक्षोभ्यः वज्रसत्त्वो महावज्रधरः। वज्रमेघा अक्षोभ्यमेघाः कुः पृथिवी तान् तद्व्यवस्थितान् सत्त्वान् रत्नदानेन लाति स्वीकरोति इति कुलो रत्नकेतुः बुद्धो महावज्रधरः । कुलमेघो रत्नकेतुसंमोहः ।

समयद्रुग्भ्यः क्रुध्यतीति क्रोधोऽमोघसिद्धिः । तस्यानुस्मृतिः । क्रोधेशमिति । क्रोधोऽक्षोभ्यः तस्यैषो महावज्रधरः । क्रोधमेघाः अमोघसिद्धिसमूहाः समयो महावज्रधरः। ज्ञानमयदेहः। तस्यानु पश्चात् स्मर्यते चिन्त्यते इत्यनुस्मृतिर्निर्माणकायः । तत्पुष्ट्यर्थभावना समयानुस्मृतिभावना । सा कतमा ? स्ववज्रं जिह्वावज्रं पद्मं तालुपद्मं तेन संयुक्तं कृत्वा कथं द्वयेन्द्रियप्रयोगत इति वज्रपद्मयोरिव प्रयोगः घर्षणं तस्मात् स्वरेतो मस्तुलुङ्गस्थितममृतं तस्य विन्दवश्चोदनानिष्यन्दिताः कलाः तैर्बुद्धादीन् रूपस्कन्धादीन् वज्रसत्त्वांश्च चित्तचैतसिकान् पूजयेत् तर्पयेत् । अनेनामृतपानेन कायवाक्चित्तसौस्थित्यं प्रजायते ।

तस्यैवोत्तमसाधवस्थस्य नाह्याङ्गनासंयोगेनामृतसृष्टिप्रयोजनं दर्शयन्नाह। मण्डलमुत्सर्गमण्डल इन्दति इष्टे ते स्वकायमितीन्द्रियमिति । स्त्रीपुमिन्द्रियं तस्य समापत्तिक्रिया तया विचक्षणः आलिङ्गनादिप्रयोगकुशलः स्वरेतं स्वशुक्रं निःसारयेदिति । द्वासप्ततिनाडीसहस्रं संचोद्य हृदि प्राप्तं वज्रमार्गान् पातयेन्महायोगी । ततः किमित्याह । मण्डलं पुत्रपौत्रादिमण्डलं संजायते । कीदृङमण्डलम् ? मण्डनं भूषणम् । किं तत् ? बुद्धत्वं तस्याकारं हेतुभूतं तादृग्विधमुत्सर्गमण्डलं निष्पादयेदित्यभिप्रायः ।। सन्ध्याभाषा ।।

योगानुयोगाभियोगं कृत्वा यत् करणीयं तद् दर्शयन्नाह । तत्रेत्यादि । कायो वैरोचनः । तस्यानुस्मृतिः । सैव भावना सर्वबुद्धानां त्र्यध्ववर्तिदशदिग्व्यवस्थितवैरोचनानां संग्रन्धि पञ्चस्कन्धप्रपूरितं निर्मितं यत् कायमस्ति मम घटमानस्यापि तं स्वभावं कायं बुद्धकायस्वभावेन हेतुना भवेदिति प्रार्थना ।

वाचोऽमिताभः तत्स्वभावत्वात् । तस्यानुस्मरणं कथं वज्रधर्मस्य यदिति या इति प्राप्ते । वाचा वाचः कीदृशः निश्चयोक्तिर्निरुक्तिः। सा सम्यक् यासां ता निरुक्तिसम्पदः । निरुक्तिग्रहणमुपलक्षणम् । तेन धर्मार्थप्रतिभानानां ग्रहणं ममापि तादृशी वाचा तादृशो वाचः धर्मधरोपमस्य भवेत् भवेयुः।

चित्तोऽक्षोभ्यः । तस्यानुस्मरणं सैव भावना । समन्तभद्रस्य समन्त-

भद्राणां गुह्यकेन्द्रस्य धीमत इति गुह्यमद्वयज्ञानं तत् कायन्ति कथयन्तीति गुह्यकः । कै शब्दे धातुः । इन्दतीति इन्द्रः । गुह्यकानामिन्द्रः तत्त्वदेशकानां प्रधानभूत इत्यर्थः । धीमत इति धीः स्पर्शवज्रा सा यस्य धीमान् इदृग्विधस्याक्षोभ्यस्य यश्चित्तं ममापि चित्तं तादृशं भवेत् वज्रधरोपमस्य ममेति प्रार्थना । यथारुतम् ।

इदानीमुत्तमसाधनस्य स्वभावपरिज्ञानमात्रेणैवाधिष्ठानत्रयमाह । तत्र कथं सत्त्वानुस्मृतिभावनेत्यादि । सत्त्वाः अण्डजजरायुजसंस्वेदज औपपादुकाः । तेषामनुस्मृतिभावना । कथं सर्वसत्त्वानामनन्तरोक्तानां कायवाक्चित्तलक्षितमिति । अयं काय इयं वाक् इदं चित्तमिति कल्पनास्पदीभूतं यदेकं चित्तं यादृशं ममापि तादृशम् । कस्मादित्याह । आकाशसमसौरिणां तत्त्वविदाम् ॥

यस्मात् तच्चित्तमाकाशतुल्यसमरसगन्धोपपादनेन सर्वगतैश्वर्यकथनेन चित्ताधिष्ठानं स्यात् तत्र । कथमित्याह । वाक्कायाधिष्ठानमुपक्षिपति । मन्त्र्यन्ते भाव्यन्ते इति मन्त्रा वाचनानि । तेषां मूर्तिः समूहैः । वाक्संघातः काय इत्युच्यमानं यच्चित्तं कायस्वभावेन परिणतं तत् कायवाक्चित्तं सर्वेषां सर्वसत्त्वानां मन्त्रमूर्तिः । कायवाक्चित्तेन तयोरनुस्मृतिः । सैव भावना । सा कतमा ? मन्त्रवज्रस्येति । मन्त्रो वचनं तदेवाभेद्यत्वाद् वज्रम् । तस्य यत्कायं यच्छरीरम् । अण्डजादिसत्त्वानां यः शब्दसंदोहः विभाव्यते संकल्प्यत इति विभावनं वाचा वचनेन कायविभावनम् । वाक्प्रज्ञप्त्या यत् काय इति सङ्केतितं वाचा कायविभावनं तादृशं कायमिति । यदनन्तरोक्तं सर्वसत्वानां मन्त्रकायं तेषामेव महावज्रकायं च यादृशं ममापि कायं तादृशं नित्यमध्वत्रये प्रत्युत्पन्नः सदा चैव स्वभावो दुरतिक्रम इति निर्देशात् । मन्त्रधरोपम इति । मन्त्रास्तथागताः । तान् धारयतीति मन्त्रधरो महावज्रधरः मन्त्रधरोपमस्य ममेति षष्ठीविषये प्रथमा । सन्ध्याभाषा ॥

इदानीं सर्वयोगिसाधारणपरमार्थमण्डलक्रमेण भूतकोटिप्रवेशं दर्शयन्नाह । तत्रेत्यादि । समयः अलङ्घ्योक्तः प्रभास्वरः अनुस्मृतिरिति संपादितबुद्धकायस्य अनु पश्चात् परमार्थसत्यगमनं तस्य स्मृतिः । तदधिगमः सैव भावना । समयात् क्षरेद् रेतमिति । समयात् प्रज्ञोपायसंयोगात् रेतं शुक्रं क्षरेदिति निश्चरति । ततः कललादिक्रमेणाभिवर्धते तदेव बीजाङ्कुरवत् वालतरुणमध्यावस्थाः प्राप्य वैरोचनादिकायमाण्डलेयाः परिपूर्णाः अविकलास्तिष्ठन्ति ।

पञ्च कामगुणाननुभवन्ति। ततः किं कुर्यादित्याह विधिनापि चेत् फलाकाङ्क्षया इति । रूपस्कन्धगतेत्यादि **वज्रमालो**क्तपरमार्थमण्डलप्रवेशविधिना पञ्चाशतः प्रभृति शनैः स्कन्धादीन् पिवेत् । परमार्थसत्यं प्रवेशयेत् । किमर्थम् ? फल-काङ्क्षया । फलं प्रभास्वरपरिशुद्धवज्रसत्त्वरूपं तत्राकाङ्क्षा प्रार्थना तया । मारयेत् ताथागतं व्यूहमिति । यथा परमार्थमण्डलक्रमेण गता विलीनास्तथा पुनरागता इति तथागताः । वैरोचनादिसङ्केतिता रूपस्कन्धादयः । तेषां व्यूहं मारयेदिति । प्राणायामस्थितं तद्विच्छित्त्या परमार्थसत्यं प्रवेशयेत् । ततः किं भवतीत्याह । सुतरां सिद्धिमाप्नुयादिति । सुतरां विशिष्टतरां महामुद्रासिद्धिमश्नुयात् । एतदुक्तं भवति । निष्पन्नक्रमाधिगतोऽपि यद्यनुत्तप्त-वीर्यः, तदा जगत्सन्तन्त्येव (?) कालं कृत्वा उत्क्रम्यमायोपमसमाधिं साक्षा-त्करोतीति । अस्यैव वज्रपदस्यार्थं द्योतयन्नाह **सन्ध्याव्याकरणव्याख्यातन्त्रे**

समयानुस्मृतिभिस्तस्मा ब्रह्मादृतं क्षरेद् भृश(म्) ।
निस्वभावैकसंयोगात् पिवेद् विधिना बुधः ॥
मारणं निःस्वभावाख्यं व्यूहं ताथागतं महत् ।
अनेन मारयेद् धीमान् सुतरां सिद्धिमावहेत् ॥ इति ।

**वज्रोष्णीषतन्त्रे**ऽप्याह

मृत्युनामविकल्पेन प्रज्ञापारमितानया ।
प्रज्ञापारमिता जातिः प्रज्ञापारमिता स्मृतिः ॥
प्रज्ञापारमिता बोधिः प्रज्ञापारमितालया ।
प्रज्ञापारमिता मुक्तिः सर्वाशापरिपूरकः ॥

इति । सन्ध्याभाषा ।

तत्र कथमित्यादिना अमुमेवार्थं द्रढयति । प्रज्ञा आलोकः । अत्रादि-शब्दलोपो द्रष्टव्यः। तस्मात् प्रज्ञोपायोपलब्धयः प्रज्ञेत्यभिमताः। तेषां पारमन्तम् इता गता प्रज्ञापारमिता । किं तत् परमार्थसत्यं सैव समयः । सर्वसत्त्वैर-लङ्घ्यत्वात् । तस्यानुभेदः पिण्डग्राहक्रमेणानुस्मृतिः । सैव नैरन्तर्येणाभ्यस्य-मानत्वाद् भावना । प्रकृतिप्रभास्वरा सर्वं इति । सर्वं आलोकाद्याभासाः त्रयः । रागादिषु व्यूत्तरशप्रकृतिभिः साकं प्रभास्वराः निर्मलाः सर्वशून्या-धीनत्वात् । मायोपमदेहाग्रहणादनुत्पन्नाः निराभासत्वात् । निरास्रवाः बोधिः

फलम् अभिसमयः । तत्प्रकारको हेतुः । एतत्कल्पनाद्वयं तत्र नास्ति । धारणाद् धातुराधारः । संभवतीति संभव आधेयम् । आधाराधेयद्वयमपि तत्र प्रभास्वरप्रवेशो नोपलभ्यते । नासन्ध्यम् ।

इदानीं युगनद्धक्रमेण व्युत्थानस्य पीठिकां रचयितुमाह । तत्र कथमित्यादि। अनुत्पादो धारणाङ्गम् । तस्मादनु पश्चात् स्मृतिव्युत्थानं स्मृत्याख्यं तस्य भावना । सत्यद्वयात्मकमहावज्रधरसमाधिः । सा कथमित्याह । प्रकृतीत्यादि । अथ-शब्दो भिन्नक्रमः । अथ धारणाङ्गानन्तरं प्रकृतिप्रभास्वरमिति योज्यम् । प्रकृतिः संवृतिसत्यम् । प्रभास्वरः परमार्थसत्यम् । प्रकृतियुक्तं प्रभास्वरम् । किं तत् ? अद्वयज्ञानात्मकं महावज्रधरवपुः । तत् कीदृक् ? आकाशमित्यादि । आकाशशब्देन तत्स्थं शक्रचापं विवक्षितं तत्तुल्यत्वात् आकाशम् । हेतुफला-द्वयत्वात् निर्निमित्तम् । क्षरति नश्यतीति क्षरम् । ततोऽन्यदक्षरं तद्विनिर्गतं निरक्षरं उत्पादनिरोधरहितमिति यावत् । न द्वयं नाद्वयमिति सत्यद्वयैकरसत्वात् न द्वयं युगनद्धात्मकत्वात् नाद्वयम् । सर्वदुःखोपशमनलक्षणत्वात् शान्तम् । स्प्रष्टव्याविषयत्वात् खसदृशम् । निरास्रवत्वादनिर्मलमिति । सन्ध्याभाषा ।

एवं धर्मसंभोगकायमद्वैधीकारलक्षणं निश्चित्येदानीं निर्माणकायस्य पीठिका[मारचयति] । तत्र कथमित्यादि । द्वेषोऽक्षोभ्यश्चित्तवज्रः । तस्य कुलं स्वात्मनिर्यातदेवताचक्रम् । स्त्रीविम्वमभिनिर्माय भगवतो वैरोचनस्य काये अभिनिष्क्रान्ता अभूवन्नित्यत्रैवोक्तत्वात् । तेन कृत्वा सोत्तरादिपूजा कुलपूजा । अनुस्मृती रागाद्यनुभवः सैव भावना। सा कथम् ? द्वादशा-ब्दिकामित्यादि । द्वादशवर्षप्रमाणां योषितं कन्यां स्थिरचेतसं स्थिरप्रकृतिं प्राप्य लब्ध्वा कुलं पद्मिन्यादिकुलचतुष्टयं तेन योगः । तत्कृतप्रभेदेन कर्मणा स्व इति स्वात्मा। शुक्रेणेति । शुगिति शोकं तं क्रकच इव भिनत्तीति शुक्रं परमानन्दः । तेन परमानन्देन शुक्रेण तयात्मानं पूजयेदित्यन्तेनैव कामैश्वर्यं प्रकटयति । अनुस्मृतिफलं दर्शयितुमाह । अनेनेत्यादि । अनन्तरोक्तषोडशानु-स्मृतिपरिज्ञानेन ताथागतं वैरोचनादिस्वभावं स[ा]द्वैश्वर्यकायम् अवाप्यते। अनेन वज्रसत्त्वायुर्यौवनारोग्यसन्मुखपरिग्रहः । चित्तं वज्रधरस्य चेति । अक्षोभ्यस्य संवन्धिश्चित्तैश्वर्यं प्रतिलभते । निष्पन्नक्रमस्थो मनसा यद्यत् प्रार्थयति तत्तदयत्नेनैव संपद्यत इत्यर्थः । धर्मधरोऽमिताभः । तस्य वाचा तत्संवन्धि रागैश्वर्यमवाप्यते । कथं प्रतिश्रुत्कोपमारुतस्वभावज्ञो यत् प्रव्याहरति

तत्सर्वं संपद्यते इति वागैश्वर्यं तस्य चरमभविकस्य युगनद्धात्मकस्य । इहैव जन्मनीति कर्मवशेन जन्मोत्पत्तिं निषेधयति । दृष्टे धर्मे च निर्वाणमित्यादि-वचनात् ।

अस्यैव समाधेः फलविशेषं दर्शयितुमाह । कायवाक्चित्तेत्यादि । काय-वाक्चित्तसंसिद्धि[:] महामुद्रासंसिद्धि[: तया] हीनाः मन्त्रपरायणाः । तज्जा[:] तत्संबन्धिन्यश्चान्या लौकिकसिद्धयः तस्य युगनद्धसमाधिस्थस्य सिध्यन्ति । जपेन अभिन्नाङ्गजपेन दृष्टसत्येन त्रिवज्राभेद्यभावनैरिति । त्रिवज्रं त्रैधातुकम्। तेनाभिन्नम् । भावनैरभिन्नाकारभावनया हेतुभूतया सिध्यन्ति। यदि भिन्नाकार-भावना स्यात् तदा लौकिकसिद्धयोऽपि न सिध्यन्ति किं पुनर्लोकोत्तरा इति। सामर्थ्यादुक्तं भवति । सर्वयोगो हि भगवान् वज्रसत्त्वस्तथागतस्योपभोगं सर्वं वै त्रैधातुकमशेषत इति वचनात् ।

मन्त्रचर्यापटल इति । मन्त्रयन्ति जपन्तीति मन्त्राः साधकास्तेषां चर्या निष्प्रपञ्चाभ्यासस्वभावा । सैवाग्रः श्रेष्ठ उद्योतकः शब्दसमूहः पटलो मन्त्र-चर्याग्रो नाम । यथारुतम् ।

।।प्रदीपोद्द्योतनटीकायां सप्तमपटले षट्कोटिव्याख्या ।।

---०---

## ॥ अष्टमः पटलः ॥

एवं चर्यास्थितेन योगिना संभारपरिपूरणार्थमनुत्तरपूजा कर्तव्येति प्रदर्शनायाष्टमं पटलमुपक्षिपन्नाह । अथ भगवानित्यादि । अथेति चर्याश्रवणानन्तरम् । रत्नकेतुर्भगवन्तमध्येषयामासेति संवन्धः । रत्नं बोधिचित्तं तदेव केतुर्ध्वजं यस्य स रत्नकेतुः बोधिचित्ताभिषेकप्रार्थकत्वात् । भगे व्यवस्थितत्वात् भगवान् । सर्वेत्यादि । सर्वकुलात्मकं परमेश्वरमिति । परमालोचनादयः तासामीश्वरं प्रभुं महावज्रधरं स्तुवन्त्यनेनेति स्तोत्रं वक्ष्यमाणकम् । तेन स्तोत्रराजेनाध्येषयामासाराधितवानित्यर्थः ।

तद्दर्शयति वज्रराजेत्यादि । वज्रवदभेद्यस्वरूपेण राजत इति वज्रराजः महायान इति महान्तः वहवः सत्त्वा येन बुद्धत्वं यान्ति स महायानः । त्वं आकाशचर्याविशोधक । आकाशं परमार्थसत्यम् । तद्विशुद्धा चर्या आकाशचर्या । तया योगिसन्तानं विशोधयतीति आकाशचर्याविशोधकः । सर्वविकल्पप्रपञ्चापगता चर्या समन्तभद्रचर्या । तयाग्रः श्रेष्ठः । जयन्तीति जिनाः प्रत्येकबुद्धादयः तेषामुत्तमः त्वं पूजां देश प्रकाशय । यथारुतम् ।

रागद्वेषमहामोहशोधकं वज्रयानं रागद्वेषमहामोहवज्रयानम् । तत्प्रकर्षेण देशकः वज्रयानप्रदेशकः । आकाशधातुतुल्यत्वादग्रः । पूजां घोष भाषस्व । जिना[श्चक्र]वर्तिनः तथागताः । तेषामालयः जनकत्वात् ।

सकलवासनाविरहितमसंसारप्रवर्तनं ज्ञानं मोक्षः । तत्प्रापको हेतुर्मार्गः । तस्य प्रणेतारः देशकः प्रणेत इति प्राप्ते प्रणेतार इत्यार्षम् । यान्त्यनेनेति यानम् । श्रावकादियानत्रयम् । तदेव पन्थाः तत्स्वभावेन प्रवर्तनात् । त्रियानपथवर्तको भगवान् । बुद्धसौभाग्यशुद्धात्म इति । बुद्धा वैरोचनादयः तेषु सौभाग्यं अधिपतित्वं तेन शुद्धात्म भाष पूजां नरोत्तम ॥

बोधिचित्त विशालाक्षेति । बोधिस्वभावं चित्तं यस्य स बोधिचित्तः । विशालान्यक्षीनि यस्य स विशालाक्षः । धर्मचक्रं द्वादशाकारं तस्य त्रैलोक्येषु प्रवर्तनात् धर्मचक्रप्रवर्तकः त्रिवज्राभेद्यलक्षितत्वात् । कायवाक्चित्तसंशुद्धः वज्रयान तुभ्यं नमः ॥ नेयार्थः ॥

रागद्वेषमहामोहेति । ज्ञानत्रयद्वारेण भगवन्तमामन्त्र्य स्तौति । राग उपायप्रकृतिः । द्वेषः प्रज्ञाप्रकृतिः । महामोहोऽविद्याप्रकृतिः । वज्रयानप्रदेशक इति । वज्रं प्रभास्वरं तदेवानन्तरोक्तं प्रकृत्याभासं विशोधयतीति यानम् । तस्य प्रदर्शकत्वाद् । वज्रयानं प्रदर्शको भगवान् प्रधानेन्द्रियमात्रग्राह्यत्वात् । आकाशधातुतुल्यः । सर्वेषामादिभूतत्वादग्रः । घोष पूजां जिनालय इति । पूजामद्वयज्ञानात्मिकां घोष प्रकाशय । जिना वैरोचनादयः आलीयन्ते यस्मिन् । स जिनालयः ।

मोक्षमार्गप्रणेतार इति । वज्रकायत्वेनाप्रमेयदेवीसमापत्त्या आसंसारं परमानन्दलक्षणेन देवमनुष्यादतिक्रान्तास्ते गुणैश्वर्यसुखस्यानुभवना सकल-सत्त्वमोचना लेस(?)क्षयकरणेन मोक्षः, तत्प्राप्त्युपायदेशकत्वात् मोक्षमार्ग-प्रणेता भगवान् प्रज्ञोपायोपलब्धिस्त्रयं त्रियाणं स एव पन्थाः मार्गः परमार्थ-सत्यपत्तनस्य । तत्प्रवर्त्तकः त्रियानपथवर्तकः । सर्वसौख्यात्मसाधनाद् बुद्ध सौभाग्य सत्यद्वयात्मकत्वात् । शुद्धात्मा । एवं गुणविशिष्ट भाष पूजां नरोत्तम ॥

बोधिः परमार्थसत्यम् । चित्तं संवृतिसत्यम्। बोधिसंयुक्तं चित्तं बोधिचित्तं स एव महावज्रधरः। विशालानि विस्तीर्णानि पञ्चाक्षीणि यस्य स विशालाक्षः तानि कतमानि ? मांसदिव्यप्रज्ञाधर्मबुद्धाख्यानि । धर्मचक्रप्रवर्तक इति । धर्माः संस्कृता असंस्कृताः सत्यद्वयात्मकाः । तेषां चक्रं समूहः तं सत्त्वलोके प्रवर्तयतीति धर्मचक्रप्रवतर्तकः, भूतकोटिविशुद्धकायवाक्चित्तात्मकत्वात् । कायवाक्चित्तसंशुद्धो भगवान् । अभ्रंशयानात्मकत्वाद् वज्रयानं तुभ्यं नमोऽस्तु नीतार्थः ।

सर्वाकाशो महाक्षर इति । सर्वाकाशं सर्वशून्यं तद्विशुद्ध्या भगवानपि सर्वाकाशः । महांश्चासावक्षरश्चेति महाक्षरः । सर्वेषामभिषेकभूतत्वात् सर्वा-भिषेकः, गगनगञ्जसमाधिना सर्वसत्त्वमनोरथपरिपूरणात् सर्वार्थः । त्रैलो-क्याधिपत्यात् सर्वेशः । वज्रं परमार्थसत्यं सर्वाशापरिपूरणात् । रत्नमिव [रत्नं] संवृतिसत्यं तत्स्वभावेन तद्धारयतीति वज्ररत्नधृक् । नासन्ध्यम् ।

पूजां ताथागतीं श्रेष्ठामिति । ताथागतास्त्र्यध्ववर्तिनो जिनाः । तत्सं-वन्धिनीं पूजां ताथागतीं पूजां श्रेष्ठामुत्पत्तिमारुढानामसाधारणत्वाद् विशिष्ट-तमाम् । कस्मादित्याह । त्रिवज्राभेद्यात् स्वरूपेण संस्थिता पूजा ताम् ।

त्रैधातुकस्य स्वकायवाक्चित्तैः समाजीकरणात् कायवाक्चित्तसौभाग्याम्। जिनाः संभवन्त्यस्या इति जिनसंभवा तां पूजां भाषते स्म लोकः। सन्ध्या-भाषा।

तामेव दर्शयन्नाह। प्राप्येत्यादि। कमनीयरूपत्वात् कन्या। विशाले सत्यद्वयात्मके अक्षिणी यस्या महामुद्रायाः तां विशालाक्षीम्। तस्या एव विशेषणं रूपयौवनमण्डितेति। पञ्चविंशतिकां गृह्येति। पञ्चविंशतिदेवतात्मिकां महामुद्रां स्वाधिष्ठानलक्षणां तां प्राप्य गुरुमुखा[त्] लब्ध्वा तामेवानुत्तरपूजां प्रकल्पयेत् कुर्यात्। तिर्यग्भ्योऽपि गृह्य प्रकल्पयेदिति पुनर्योज्यम्। तिर्यक्-शब्दस्य पार्श्वचारित्वात्। तेनाधिपतेरन्यन्माण्डलेयदेवतारूपं महावज्रधरवत् गृह्यते महावज्रधरविकुर्वितत्वात्। सन्ध्याभाषा।

लोकोत्तरतमयोगिनां पूजां निर्दिश्येदानीमुत्पत्तिक्रमयोगिनां पूजां दर्शयितु-माह। शुचावित्यादि। वाशब्दो भिन्नक्रमः पक्षान्तरप्रदर्शनार्थो द्रष्टव्यः। सर्वभूमिशोधनक्रमेण परिशुद्धे विविक्ते जनसंपातरहिते पृथिवीप्रदेशे भूभागे। जिनात्मजो मन्त्री। शान्ताः सज्जनाः तेषां गृहे शिवालये देवताकुले ईदृग्विधे प्रदेशे। विट् गोविष्ठा मूत्रं गोमूत्रं तोयं केवलमुदकं आदिशब्देन गन्धकल्का-दि गृह्यते। एभिर्विडादिभिः पूर्वोक्ते प्रदेशे विलेपनं मण्डलं कुर्वीत कुर्यात्। वाशब्दोऽनुक्तसमुच्चयार्थः। तेन पुष्पादिपरिग्रहः। शश्वत् प्रत्यहं किमर्थम् ? जिनपूजहेतोः स्वदेवताराधनार्थम्।

एवं पूजोपकरणं संपाद्य साधनोक्तक्रमेण कृतयोगानुयोगस्यात्मनः स्वमुद्रा-याश्च पञ्चकुलीकरणं दर्शयन्नाह। स्तनान्तरमित्यादि। स्तनान्तरमिति प्राप्ते हृदयस्थाने। यावदिति। यावदत्र हूंकारजमक्षोभ्यकुलं न्यसेत्। शिखान्तमिति शिखाशब्देन केशा उपलक्ष्यन्ते यावत् केशान्तम्। केशभूमौ ओंकारजं वैरोचनं न्यसेत्। मध्य इति हृत्शिखान्तयोर्मध्ये किं तत् कण्ठप्रदेशे मुखमण्डलं तत्र आःकारं संभवममिताभं न्यसेत्। चरणान्तरमिति यावत्। पदस्योरुमूलस्य चान्तरं चरणान्तरम्। तस्मिंश्चरणान्तरे। वाशब्दश्चरणद्वये इति समुच्चयार्थः। तत्र हाकारजममोघसिद्धिं न्यसेत्। विधिज्ञः उत्पत्तिक्रमज्ञः। नाभिकटीगुह्य इत्यत्र सप्तमीलोपः। एषु प्रदेशेषु स्वकारजं रत्नसंभवकुलं न्यसेत्। जिनाः वैरोचनादयः। जिनात्मजास्तत्कुलीनाः जिनाः स्वजिनात्मजाश्चेति जिनात्मजाः

तेषां वैरोचनादीनां तत्कुलीनानां च साधनोक्तविधिना पञ्चकुलात्मकानां न्यासं यथायथं कुर्यात् इति यावत् ।

एवं कृतं समापत्तेः भवोत्पत्तिक्रमं दर्शयितुमाह । आकाशधातु इत्यादि । आकाशधातुः स्वमुद्राधर्मोदयः । तन्मध्यस्थं ज्ञानसागरं बोधिचित्तमात्मानं चन्द्रमध्यस्थमनन्तरोक्तसंवृतिबोधिचित्तमध्यस्थं भावयेत् ध्यायात् ।

तदनन्तरं तथागतां स्फरित्वा बुधः शान्तवज्रधृक् । हृदये आत्मनि संहारं च प्रकुर्वीत । यदीति । स्फरणसंहरणं यदीच्छा स्यात्, तदा कुर्यादिति भावः । शान्तं चित्तसमाधानं तदेव वज्रं तद्धारणात् शान्तवज्रधृक् । एवमात्मानं निष्पाद्य पुनः स्तूपं च पञ्चभूरत्नमयादिकं कुर्यात् । चतूरत्नं धातुस्वभावं लोचनादिचतुष्टयं तन्मयत्वात् । चतूरत्नमयं रश्मिमाला सितादिरश्मिमाला ताभिर्भूषितं शोभितम् ॥

ज्ञानोदधीति । त्र्यध्वेभ्य इत्यस्य विशेष्यरूपं ज्ञानोदधयस्तथागताः त्र्यध्वास्त्रैकाल्यवर्तिनः त्र्यध्ववर्ति तथागतानामालयं क्षेत्रभूतं चिन्तयेत् । स्वकाये चैत्यं भावयेत् । पूर्ववत् स्वरोमकूपविवरेभ्यः पूजामेघां यथाभिलषितार्थसंपादनेन सत्त्वधातून् पूजयन्त्यनुगृह्णन्तीति पूजाः तथागताः तेषां मेघाः सन्दोहास्तान् स्फरेत् निश्चारयेत् । बुद्धो बुद्धानुत्पत्तिक्रमनिपुणः । यथारुतम् ॥

इदानीमुभययोगिसाधारणं पूजाङ्गं दर्शयन्नाह । पद्ममित्यादि । श्वेतादिपञ्चवर्णत्वात् पञ्चविधं कुलभेदेन ज्ञात्वा विचक्षणः विभागज्ञः । उत्पलं च तथैव पञ्चवर्णम् । जातिपुष्पं त्रिविधां त्रिवर्णां कृत्वा देवतानां निवेदयेत् ।

तथैव कर्णिकारपुष्पं मल्लिकां यूथिकां करवीरकुसुमं च ध्यात्वा ध्यानबलेन निष्पाद्य मन्त्री सर्वथा तथागतान् योजयेदिति । नेयार्थः । आर्षव्याख्यानमाह ।

> ये दशवायवः प्रोक्तास्ते पद्मोत्पलसंज्ञकाः ।
> त्रिवज्रतत्त्वमाख्यातं जात्येकता त्रिधा मता ॥
> कर्णिकारं तथा मल्लिका यूथिका करवीरकम् ।
> लोचनादि यथासंख्यं माहेन्द्रादीं तु योजयेत् ॥
> निःस्वभावपदन्यासाद् देवतारूपयोगतः ।
> सा भवेन्महती पूजा सर्वबुद्धैकतोषणे ॥

तदेतत्पुष्पसन्ध्येयं न प्रतिपत्स्यन्तीतरे जनाः ।
अनवबोधतस्तेषां सिद्धिः स्याद् दूरतः स्थिता ॥
अभव्या वयमित्येवमुक्त्वात्मानं क्षिपन्ति ते ।
तथा ह्यात्मप्रतिक्षेपात् सर्वबुद्धान् क्षिपन्ति हि ॥
क्षिप्त्वा तु सर्वबुद्धान् वै निर्वाणेतरगामिनः ॥ इति नीतार्थः ॥

इदानीमुभययोगिसाधारणं गुह्याभिषेकमण्डलं दर्शयितुमाह । योजनेत्यादि । प्रतिपार्श्वं पञ्चविंशति योजनत्वात् योजनशतविस्तारं चक्रशब्देनोपचाराच्च-क्रम् । वैरोचन एवाभिमतः । तस्य मण्डलं चक्रमण्डलं भावयेत् निष्पादयेत् । मनसा लिखनेन वा । चतुरस्रमित्यादि वक्ष्यमाणकमत्रापि योजनीयम् । कुलानामक्षोभ्यादिकुलानां पूर्वादिदिक्षु न्यासं कुर्यात् । सदा विचक्षणः सर्वकाला-प्रमत्तः । यथा चक्रमण्डलशब्देन वैरोचनमण्डलमुपात्तं तथा पद्ममभिताभ-मण्डलम् । चन्द्रमण्डलमक्षोभ्यमण्डलम् । खड्गमण्डलममोघसिद्धिमण्डलम् । उत्पलमुपलरत्नं तकारच्छन्दोनुरोधार्थः दशदिशीति । यथा उत्पलं रत्न-संभवमण्डलं बुधः विज्ञो भावयेत् शतयोजनात् प्रभृति यावत् । कोटियोजन-प्रमाणं महेच्छानां रुचिवशान्मण्डलं चतुर्वर्णोपेतत्वात् चतुरत्नमयं स्वच्छं स्फटिकवत् । अनेन श्वेतवर्णपरिग्रहः । चैत्यमिव चैत्यं मण्डलं प्रकृतिनिर्मलमिति । मण्डलतत्त्वात्मकत्वात् । कुलानां पञ्चकुलानामालयमाधारभूतं प्राज्ञो गुह्या-भिषेकज्ञो योगी पूजाहेतुना गुह्याभिषेकार्थं भावयेदिति यावत् ।

एवं गुरुव्यापारानन्तरं गुह्याभिषेककामेन शिष्येण यदनुष्ठेयं तद्दर्शयन्नाह । पञ्चकामगुणैरित्यादि । पञ्चकामगुणरूपादि पञ्चविषयाः तेषामिति मण्डला-धेयभूतदेवतानां पूजोदधिं विविधपूजासमुद्रं समारभेत् कर्तुमुपक्रमेत् ।

तान्येव पञ्चकामगुणान् प्रपञ्चयितुमाह । रत्नेत्यादि । रत्नं पद्मरागादि वस्त्रं पत्त्रोर्णादिकं चक्षुरिन्द्रियविषयमुक्त्वा आदिशब्देन श्रोत्रादीन्द्रियानां विषयं विदधाति । नित्यं यावदभिषेकपरिसमाप्ति प्रत्यहं पूजयेदाराधयेत् । किमर्थम् ? सर्वकलिमलप्रक्षालनेन ज्ञानोदयकारणाद् बोधिरभिषेकः तस्मिन् कांक्षया च्छन्देन पूजयेत् ॥

पञ्चोपहाराः पुष्पादयः । तैः पूजा पञ्चोपहारपूजा । तासामग्र्यैर्विशिष्ट-तरैर्देवतां च गुरुं [च] तोषयेत् । सदेति । देवतागुरुसाधारणीं पूजामुक्त्वा

गुरोर्विशेषपूजां कन्यामित्यादिना दर्शयति। कन्यामभ्रष्टयौवनां रत्नमासं-सारस्थायि परमानास्रवमहासुखं तस्योत्पत्तिक्षेत्रत्वाद् रत्नकरीं श्रेष्ठां पद्मिनीं सर्वस्त्रीगुणोपेतत्वात्। अनेकप्रकाररत्नवस्त्रगन्धविलेपनाद्यलङ्कृताम् ईदृग्विधां कन्यां कमनीयरूपां सर्वबुद्धानामिति गुरोः सर्वबुद्धमयत्वात्। गुरुरेकोऽपि सर्वबुद्धशब्देन विवक्षितः। तस्मै दद्यात् प्रतिपादयेत्। कस्मा-दित्याह सिध्यतेऽतीवसाधने इति। साध्यते निष्पाद्यते इति साधनं सामान्य-फलम्। अतीवसाधनं विशिष्टसाधनम्। किं तत्? बुद्धत्वं तस्मिन् सिद्धये सिद्धिनिमित्तं दद्यात्। गुरुविषये देयधर्मप्रतिपत्तये परिच्छेदाभावं दर्शयितु-माह। सप्तरत्नेत्यादि। पद्मरागेन्द्रनीलवैदूर्यमरकतवज्रमुक्ताप्रवालमिति सप्तरत्नानि। तैः परिपूर्णमिदं क्षेत्रं प्रतिदिनं दद्यात्। ताः (?) स्त्री पुरुष-मणिचक्रखड्गगजाश्वरत्नैर्वा विचक्षणः पुण्यसंभारज्ञानकुशलः। प्रत्यहं प्राज्ञः प्रकर्षज्ञानवान् ज्ञानार्थी गुरुसकाशाद्द्वयज्ञानप्रतिषेधं कर्तुकामः। तदुपदेशेन महामुद्रासिद्धिसाधनकाङ्क्षया दद्यात्। प्राज्ञो ध्यानेनापि सर्वं सम्पादयेदिति।

एवं संपादितपूजोपकरणे शिष्ये गुरुः किं कुर्यादित्याह। अधिपतीत्यादि। यथा स्वमण्डलाधिपतेर्या महामुद्रा तां समादाय गृहीत्वा मण्डलाचार्यो बुद्धमण्डलमध्यतः तथागतचक्रमध्ये।

रागो महासुखं तत्र बुद्धिर्येषां ते रागबुद्धयः। तेषां रागबुद्धीनां बुद्धानां तथागतानां स्पर्शसंयोगं स्पर्शवज्राजनितसुखं दद्यात्। तत् कथमित्याह। आकाशेत्यादि। आकाशधातु गगनं तन्मध्यस्थं व्यूहं मण्डलं भावयेत् ध्यायात्। ध्यात्वा रूपस्कन्धादिभावेन वैरोचनादिज्ञानमयदेहे निर्माणकायग्रहणार्थं प्रवेशयेत्।

ततः स्वविम्बं महावज्रधरस्वरूपमात्मदेहं तथागतमयं वैरोचनादिसर्व-तथागतपरमाणुपरिघटितं कृत्वा विडिति विषया .... मिन्द्रियं विषयै रूपादिभिः गुरुं मान्यं पूजयेत् प्रीणयेत्। तामेव पूजां योषितमित्यादिना दर्शयति। योषितं शिष्यप्रतिपादितां चारुवक्त्रां हर्षेण प्रसन्नचेतनां मनोह्ला-दनकरत्वात् मनोरमाम्।

अधिष्ठानपदं ध्यात्वेति। अधितिष्ठन्तीत्यधिष्ठानानि वैरोचनादयः तेषां पदं प्रणवादिबीजान् मुद्रादेहे यथास्थानं ध्यात्वा विन्यस्य पञ्चकुलकलापिनीं

कृत्वा तत्त्वपूजां समापत्तिलक्षणां प्रकल्ययेत् अधितिष्ठेत्। वाह्यपूजापेक्षया इयं [दे]वतत्त्वपूजा रागविरागमध्यरागानुक्रमेण क्लेशविशुद्धिपदसाक्षात्करणात्। शुक्रे गुह्यविशालाक्ष्यामिति। समापत्तिपूजानन्तरं विशालाक्ष्याः शुक्रं गृह्य स्त्रियां मुद्रापद्मस्थितं बोधिचित्तं बोधिचलिताध्याशयत्वात्। दृढबुद्धिमान् वज्रशिष्यः गुरुणा दत्तमनेन स्वकायस्थानसर्वतथागतान्तर्यामीति भक्षयेत् अभ्यवहरेदिति। गुरुश्च तेनेव बोधिचित्तेन संख्यादिसंस्थितं गन्धोद्रक-ममोघमङ्गलगाथादिपूर्वकं शिष्यमभिषिञ्चेत्। यथोक्तं भगवता **गुह्येन्द्र-तिलके**।

उत्सृज्य रत्नोज्वलपद्ममध्यतः
संगुह्य मूर्तिः सकलं जिनानाम्।
अभिषिश्वच मूर्ध्नामलरत्नवर्षै-
र्विशुद्धवज्रोद्भवज्ञानतोयैः॥ इति।

इदं तदिति। यदनन्तरोक्तं पूजाव्यपदेशेन गुह्याभिषेचनम्, तत्सर्व-मन्त्राणां सर्वतथागतानां संवन्धिभूतं तज्ज्ञानवज्रिणां घटमानयोगिनां मन्त्र-सिद्धिकरं मन्त्रालौकिकसिद्धिप्रदायकाः आलिकालिजनिताः सर्पादयो मन्त्राः। तेषां सिद्धिरविकलसिद्धिसंपादनं तत्र करोतीति मन्त्रसिद्धिकरं क्रियातन्त्रादि-नयप्रवृत्तानां गोप्यत्वाद् रहस्यम्। अविनश्वरकायवाक्चित्तनिवर्तनात् काय-वाक्चित्तपूजनमिति। यथारुतम्।

॥ प्रदीपोद्द्योतनटीकायामष्टमपटले षट्कोटिव्याख्या ॥

——०——

## ।। नवमः पटलः ।।

निर्वर्तिताभिषेकस्याद्भुतकरणेनापि बोधिसाधनमाह । अथेत्यादि । अथ गुह्याभिषेकानन्तरं चतुर्व्योमात्मकतया सर्वाकाशो भगवान् । अतएव महाक्षरः । सर्वेषां क्रियातन्त्रादिप्रपन्नानामभिषेकचर्या सर्वाभिषेकचर्या तासामुपरिस्थितत्वात् सर्वाभिषेकचर्याग्रः । सर्वैः सिद्धिकामैरर्थ्यन्ते याच्यन्ते इति सर्वार्था वैरोचनादयः तेषां परमेश्वरः षष्ठस्तथागतः । एवंविधो भगवान् त्रिवज्राभेद्यमण्डलं घोषत इति संवन्धः ।

कायवाक्चित्तसंभोग इति । आत्मनः कायवाक्चित्तानां संभोग उपभोगो यस्मिन् मण्डले तत् कायवाक्चित्तसंभोगं त्रिवज्राभेद्या वैरोचनादयः तेषां मण्डलमत्यद्भुतमण्डलं परमं विशिष्टतरं रत्नपुद्गलानामेव विषयत्वाद् रहस्यम् अप्रकाश्यम् । केषाम् ? बुद्धज्ञानिनां श्रावकादीनां तत्त्रासकरत्वात् ।

एवंविधलोकविरुद्धालापद्वारेण बोधिप्राप्त्युपायं यो भाषते स्मेति प्राप्ते यथारुतम् । आकाशधातुमध्यस्थं बुद्धमण्डलं महावज्रध[र]विम्वमक्षोभ्यवज्रं प्रभावित्वेति तत्परावृत्त्या अक्षोभ्यं निष्पाद्य पाणौ वज्रं विभावयेदिति प्रधानचिह्नकथनम् । नान्येषां चिह्नानां निषेधः ।

स्फुलिङ्गानि विप्रुषः व्यतिगहनं घनीभूतम् अतएव दीप्तं सितादिरश्मिभिराप्लुतं वज्रं भावयेत् । अनेन त्रैकाल्यसंभूततथागतान् ध्यात्वा चूर्णयेत् ।

तेषां कायवाक्चित्तानां संभोगः समूहः तं वज्रेण चूर्णितं नष्टमस्तङ्गतं भावयेत् । एतदनन्तरोक्तं परमं ध्यानं चित्तसिद्धिसमावहं चित्तैश्वर्यावाहकम् ।

अनेनैव गुह्यवज्रेण सर्वसत्त्वान् विघातयेद् विनाशयेत् । अनेन ध्यानविशेषेण विनष्टा अक्षोभ्यवज्रस्य बुद्धक्षेत्रे जिनौरसा बोधिसत्त्वा जायन्ते । अयं द्वेषकुलतत्त्वसमयः । अत्राह,

> यद्येकस्यां निवृत्तायां वहवः सन्ति निर्वृताः ।
> स महापुण्यराशिः स्यादन्यथा पापकं परम् ।। इति ।

अथेत्यादिना मोहकुलसमयमाह। स एव महावज्रधरः अज्ञानं मोह अविद्या। तेन मोक्षप्रसाधको भूतकोटिप्रापकः ज्ञानमोक्षप्रसाधकः स्वभावशुद्धः प्रकृतिशुद्धः। पुण्यापुण्याभ्यामलेप्यत्वात् निर्लेपः। सत्त्वसन्तानगतमात्सर्य-क्लेशापनयनात्मिका चर्या बोधिचर्या। तां प्रकर्षेण देशयतीति बोधिचर्या-प्रदेशकः। बुद्धबोधिनिष्पादकं तत्त्वमविपरीतं द्रव्याकर्षणसमयं भाषते। आकाशे-त्यादि गतार्थः। वज्रमण्डलं महावज्रधरमहामुद्राम्।

तत्परावृत्या वैरोचनमात्मानं भावयित्वा सर्वबुद्धान् माण्डलेयान् विभाव-येत् उत्सृजेत्। कथमित्याह। सर्वरत्नप्रयोगेणेति। सर्वरत्नं सितादिवर्णोपेतं रत्नजातं तदर्थः प्रयोगः सर्वरत्नप्रयोगः। तेन वज्रविम्वानक्षोभ्यादितथागतान् विभावयेत् प्रेरयेत्। यद् रत्नं येन येन तथागतेन सवर्णं तदुद्धरणार्थं तं तं प्रेरयेदिति।

एवं तथागतान् संप्रेर्य साधकेन यदनुष्ठेयं तद् दर्शयति। हरणमित्यादि। हरणं तथागतैर्द्रव्याकर्षणं त्रिवज्रेणेति कायेन वाचा मनसा च विभावयेत्। तद्यथा रोमकूपविवरनिर्गतसितादिरश्मियोगैरभिमतरत्नजातमावध्य निश्च-लीकृत्य ततः स्वजिह्वाब्जदलविनिर्गत ह्लीःकाराङ्कुशेनाकृष्य स्वगृहे स्थापितम्। मनसा ध्यायादिति भगवन्नित्यादिना। मात्सर्यदोषकलुषितसन्तानानां विशुद्धिमाह चिन्तामणिरभिलषितार्थप्रदायको मणिविशेषः। तत्समा द्रव्योदधिर्द्रव्यसमुद्रोऽ-क्षयत्वात्। तेन प्रपूरिताः प्रीता भवन्ति ये द्रव्यपतयः। न केवलं लौकिक-सम्पत्सम्पन्ना भवन्ति।

औरसा इत्यादि। उरसिजाता औरसाः सर्वबुद्धानां प्रधानपुत्रा भवन्ति। पश्चात् तथागताश्च भवन्ति। सर्वकुलार्णवे अक्षोभ्यादिकुलार्णवमध्ये मोह-कुलस्य वैरोचनसंवन्धिदेवताचक्रस्य तत्त्वं रहस्यं अयमेवालङ्घ्यत्वात् समयः। अत आह भगवान् **श्रीवैरोचनाभिसंबोधिचर्यातन्त्रे** इह बोधिसत्त्वः सर्वेण सर्वमदत्त्वादानात् प्रति विरतो भवति अन्यत्र मत्सरिण इति॥

अथेत्यादि। रागकुलसमयावतारः स एव भगवान् स्वकारार्पणेन विज्ञानं रञ्जयतीति रूपादयो रागान्तैर्मुमुक्षूणां मोक्षं सर्वदुःखोपशमनलक्षणं प्रसा-धयतीति रागमोक्षप्रसाधकः। गुह्यशुद्धः सत्यद्वयात्मकः। अप्रतिष्ठितनिर्वाण-स्थितत्वान्निरालम्बः अमिताभ[:] समयचक्रमुद्घोषयति कथयति।

आकाशेत्यादि। पद्ममण्डलं महावज्रधरविम्वम् अमिताभोत्पादकत्वात्।

उपचारेण पूर्ववत् । महावज्रधरपरावृत्त्या अमिताभं ध्यात्वा बुद्धैर्मण्डलेय-देवताभिः सर्वकूटागारोदरं पूरयेत् । यथास्थानं स्फरेत् ।

तत्र मण्डले सर्वेषां माण्डलेयानां स्त्रीपुरुषाकाराणां योषिदाकारसंयोगं विभावयेत् ध्यायात् । योषिदाकारः स्त्र्याकारः । तेन संयोगः संयोजनं स्त्री-रूपाकारेण परिणामनम् । कथमित्याह । चतुःसमययोगेनेति । चतुःसमयश्चतु-र्योगः तेन योगो देवाताकारनिष्पादनं चतुःसमययोगः । चतुःसमययोगेन योषिदाकारं भावयेदिति योजनीयम् ।

इदमनन्तरोक्तं ध्यानं वज्रनयेति महायाने कामैश्वर्यप्रधानत्वादुत्तमम् ।

एवं ध्यात्वा किमित्याह । द्वयेन्द्रियप्रयोगेणानुरागणादिपूर्वकं वज्र-पद्मसमायोगेन सर्वांस्तान् विश्वरमणक्रियया स्वरमणक्रियया एकक्षणमुपभुञ्जयेत् कामयेत् । इदमनन्तरोक्तं यत्सर्वमन्त्राणां सर्वसाधकानां त्रिकायं भेद्यसाधन-मिति धर्मसंभोगनिर्माणरूपत्रिकायाभेद्यत्वसाधनं निष्पादकं ध्यानम् । अयं रागकुले समयः करणीयः । मन्त्रिणोत्पत्तिकर्मारूढेन साधनीयोऽनुष्ठातव्यः । ओंशब्दोऽवधारणे । साधनीय एवेति ।

अथेत्यादि । अमोघसिद्धिः समयावतारः स एव भगवान् वज्रमन्त्रः प्रवेशादिलक्षणो वज्रजापः । तदुपदेशेन विनेयानामभिप्रेतार्थं साधयतीति वज्रमन्त्रार्थसाधकः । ज्ञानं धर्मकायः तस्माद् व्युत्थितः ज्ञानसंभूतः । अथ च मायोपमदेहत्वात् नैरात्म्यः निर्गत आत्मा यस्य स निरात्मा । निरात्मा एव नैरात्म्यः महावज्रधरः इदं वक्ष्यमाणं वचनमब्रवीदिति सङ्गीतिकारवचनम् ॥

आकाशेत्यादि । बुद्धमण्डलं महावज्रधरं ध्यायात् । तत्परावृत्त्या वज्रा-मोघसिद्धिं भावयित्वा तदनन्तरं सर्वबुद्धान् माण्डलेयान् भावयेत् ॥

मृषा वाग्वज्रपदमिति । मृषा सर्वधर्माः मायोपमत्वादित्यस्य वज्र-पदस्यार्थे स्थित्वा सर्वविम्वान् सर्वसत्त्वान् तत्रैव स्थितान् विभावयेद् विजा-नीयात् ।

ततः किं कुर्यादित्याह । विसंवादयेदित्यादि । जिनान् सर्वान् । जिना-नामालया जिनालयाः सत्त्वाः तथागतगर्भत्वात् । सर्वे च ते जिनालयाश्च सर्वजिनालयाः । ताश्च विसंवादयेत् सर्वतथागतान् सर्वसत्त्वांश्च सर्वधर्मा-विसंवादका मायास्वभावा इति वचनमुच्चायतो ध्यायादिति यावत् । तथा चोक्तम् ।

मृषा माया देवपुत्र सर्वधर्माः । तथैवाहं प्रकाशयामि तेनाहं मृषावादीति ।

इदमनन्तरोक्तं सर्वबुद्धानां सर्वतथागतायत्तं वागाकाशमिव निःस्वभावत्वात् वागाकाशं सुनिर्मलम् । एतन्मन्त्रसिद्धिकरं प्रोक्तं रहस्यं ज्ञानबुद्धिनामिति अद्वयज्ञानी बुद्धिरधिमोक्षो येषां तेषां ज्ञानबुद्धीनां घटमानानां मन्त्रसिद्धिकरम् ।

सुसमयेन सर्वसत्त्वानामाकर्षणं यत् तत् समयाकर्षणकुलममोघसिद्धिकुलं तस्य तत्त्वसमयः यथाभूतसमयः प्रेरणीयः । पुनः पुनरभ्यसनीयः यथार्थतः यावत् । अत्राह ।

परेषां च सुखार्थाय आचर्या सुखहेतुना ।
रत्नत्रयोपकाराय मृषावादं वदेदिति ॥

अथेत्यादि । रत्नसंभवसमयावतारः स एव भगवान् त्रयाणां कायादि-वज्राणां समाहारः । त्रिवज्रं भिद्यते पृथक् पृथक् क्रियते इति भेद्यं न भेद्यमभेद्यम् । त्रिवज्राभेद्यमपृथग्रूपं यस्य स त्रिवज्राभेद्यः जिनास्त्र्यध्ववर्तिनो बुद्धास्तेषा-मालयः उत्पत्तिस्थानत्वात् । त्रिवज्राभेद्यश्च जिनालयश्चासौ त्रिवज्राभेद्य-जिनालयः । सिद्धिः वज्रधरत्वम् तदेवाभेद्यत्वाद् वज्रं तत्प्रकर्षेण प्रापयतीति सिद्धिवज्रप्रणेतार इत्यार्षम् । इदं वक्ष्यमाणकं वाक्यमुदीरितवान् ।

आकाशेत्यादि विभक्तार्थः । समयमण्डलं महावज्रधरमहामुद्रा तत्परा-वृत्त्या रत्नकेतुमात्मानं भावयित्वा सर्वविम्बैरिदं स्फरेत् इति । सर्वविम्बैः पार्षदीयैः । इदं कूटागारोदरं स्फरेत् पूरयेत् ।

पारुष्यवचनाद्यैरिति । परुषं निष्ठुरं परुषमेव पारुष्यं पारुष्यं च तद्वचनं च पारुष्यवचनम् । तदाद्यैर्वचोभिस्तदुपायेन सर्वसत्त्वसंग्रहार्थमाविर्भूतैः सेवयन् महावज्रधरमाराधयन् अद्वयज्ञानमाप्नुयात् ।

इत्याह भगवानित्यादिना समयमुपसंहरति संगीतिकारकः इत्यनेन प्रकारेणोक्तवान् सर्वतथागतवज्रव्यूहो महावज्रधरः । नेयार्थः । आर्षव्याख्यान-माह ।

अथ सन्ध्याय धर्मैकं सर्वज्ञं सर्ववित्प्रभुम् ।
वज्रपाणिर्वदेन्नाथं समयतत्त्वार्थभाषणम् ॥
तथतैकस्वभावा च ये बुद्धास्त्र्यध्वसम्भवाः ।
धर्मकायैकनिर्याता कथं वज्रेण चूर्णिताः ॥

चूर्णयित्वा तु तां सम्यक् चित्तसिद्धिर्नयेत् कथम् ।
अतीता उपदेष्टारः वर्तमानानुशासकाः ॥
आराध्यागामिकाः बुद्धाः सम्यक्संवोधिदायकाः ।
हन्यास्ते वै कथं नाथ वज्रेणाक्षोभ्यरूपतः ॥
कथं ते प्रतिपत्स्यन्ति वाक्यं नानार्थतत्त्वतः ।
भाषस्व भगवन् तत्त्वं आगामिजनितां प्रति ॥
यज्ज्ञात्वा निर्विकल्पाः स्युः सन्ध्यायार्थं जिनौरसाः ।
अथ वज्रधरोक्तं तु श्रुत्वा वाणीं जगद्धिताम् ॥
प्रत्युवाच ततः स्वामी भूयो वज्रधरं विभुम् ।
साधु वत्स महासाधु साधु समन्तभद्रकः ॥
अध्येशयासमां यस्त्वं सन्ध्यायभाषितां प्रति ।
तमहं प्रतिवक्ष्यामि भावितार्थं यथायथम् ॥
अक्षोभ्य इति निर्माणं वज्रं तत्स्यादभेदतः ।
सविद्या तस्य पाणि[:] स्यात् तत्र वज्रं प्रभास्वरम् ॥
तस्माज् ज्ञानमयः कायः पञ्चरश्मिसमुज्ज्वलः ।
वुद्धाः स्कन्धादयः प्रोक्तास्त्र्यध्वज्ञास्ते त्रिवज्रता ॥
चूर्णनं देहवज्रेण प्राकृतस्कन्धनाशनम् ।
एतद्द्वेषकुलं रम्यमक्षोभ्यं ज्ञानवज्रजम् ॥
प्राप्नुवन्ति महासिद्धिं तत्क्षेत्रे जातिरुत्तमा ।
अथ महासुखः श्रीमान् ज्ञानमोक्षप्रसाधकः ॥
प्रकृतिशुद्धनिर्लेपो बोधिचर्याप्रसाधकः ।
आमन्त्र्य सर्वगुह्येशं वज्रपाणिं महाद्युतिम् ।
भाषते समयं तत्त्वं सम्यक्संबुद्धसाधनम् ॥
धर्मरत्नप्रवेशेन वज्रसत्त्वं प्रभावयेत् ।
वैपाकिकानां हरणं तेन कायेन सर्वथा ॥
सर्वद्रव्यापहरणं बुद्धबोधिप्रसाधकम् ।
चिन्तामणिः समस्तेन द्रव्योदधिः प्रपूरितः ॥
मोहकुलस्य तत्त्वोऽयं समयः परिकीर्तितः ।
मायादेहोऽमितायुः स्यात् तत्र स्कन्धादिप्रपूरणम् ॥

प्रज्ञापारमितायुक्तान् स्कन्धादीन् तत्र कारयेत् ।
चतुःशून्यसमायोगात् कुर्याद् बोधिनयोत्तमम् ॥
संवृत्तिः परमार्थश्च द्वयेन्द्रियमिहेन्दनात् ।
युगनद्धसमाख्यातस्तत्प्रयोगस्तदद्वयम् ॥
तत्समापत्तियोगेन सर्वांस्तानुपभुञ्जयेत् ।
इदं तत्सर्वबुद्धानां महारागमयोत्तमम् ॥
अथ भगवान् विश्वः त्रिवज्राभेद्यजिनात्मकः ।
वज्रसिद्धिप्रणेता वै वचनमिदमब्रवीत् ॥
पारुष्यादियदश्राव्य स्कन्धाद्यभाववाचकः ।
तदर्थमभ्यसेद् योगी लघु बोधिमवाप्नुयात् ॥ इति नीतार्थः ॥

महावज्रधरपर्षन्मध्यस्थितमहाबोधिसत्त्वा अनन्तरोक्तसमाधिविशेष-द्योतकवज्रपदानां निश्चयार्थमजानाना इवानागतपद्मादिमृद्विन्द्रियाणां सत्त्वानां हिताय यथा चोदयन्ति तद्दर्शयितुं संगीतिकृदथेत्याह । अथ खल्विति । पञ्चमसमयप्रकाशनानन्तरं सर्वतथागतसमतां यातीति सर्वतथागतसमयः । कोऽसौ वज्रकेतुः वज्रचिह्नत्वात् वज्रपाणिः तत्प्रमुखाः तत्पुरःसरा बोधिसत्त्वा लोकविरुद्धवाचोयुक्त्या समाधिविशेषप्रकाशनादाश्चर्यमद्भुतप्राप्ताः इदं वक्ष्य-माणरूपं वज्रघोषमप्रतिहतरुतमकार्षुः कृतवन्तः ।

किमित्यादिना पर्षद्गततथागतपृच्छाव्याजेन भगवन्तमेव यथा परिपृच्छन्ति तद्दर्शयितुमाह । किमिति प्रश्ने । अयं भगवान् महावज्रधरः सर्वतथा-तथागतस्वामी त्रैधातुकव्यतिवृत्तं वज्रपदं भाषत इति संबन्धः । स्वलक्षण-धारणाद् धातुः । प्रविचयलक्षणा प्रज्ञा । सा त्रिधा मृदुमध्याधिमात्रभेदात् त्रैधातुकं विशेषेणातिवर्तते व्यतिक्रामति नानुसरतीति त्रैधातुकव्यतिवृत्तम् । अतएव सर्वलोकधातुव्यतिवृत्तं सर्वलोकधातूनां मृद्वादिभेदेन स्थितत्वात् । सर्वतथागतसर्वबोधिसत्त्वपर्षन्मध्ये अग्नेः शैत्यमिवाद्भुतमपूर्वम् । अभूत-मजातमित्यद्भुम् । तद्द्योतिका वाक् अद्भुतवाक् । तदेव पन्थाः प्रवर्तकत्वात् । वज्रमभेद्यं आदेयत्वात् । तस्मादेव पदं प्रतिष्ठा सर्वेषां तथागतवचनानु-सारित्वात् । अद्भुतवाक्पथःवज्रपदम् । पर्षद्द्वयमध्ये कौकृत्यजनकम् । किमिति भाषते न वक्तव्यमिति यावत् ।

अनन्तरोक्तबोधिसत्त्वभणितमाकर्ण्य भगवत्पर्षत्सन्निपतिततथागता भगवन्तः

अभिप्रायमभिलक्ष्य प्रश्नं यथा विसर्जयन्ति संगीतिकृत् तद्दर्शनाय पीठिकां रचयितुमाह । अथेत्यादि । भगवन्त एवमाहुरिति संवन्धः । तान् पूर्वोक्ता-नभिलाप्येत्यादि विभक्तार्थः ।

मा कुलपुत्रेत्यादि परिहारः । मा प्रतिषेधे कुलपुत्र इत्यामन्त्रणं कुलं वज्रकुलादिकं तत्र जाताः कुलपुत्राः । कुलपुत्रैवमित्यार्षम् । एवामनन्तरोक्तं समयविचिकित्सामुखेन हीनं निकृष्टमिति संज्ञा हीनसंज्ञा । जुगुप्सितां लोक-गर्हितमिति संज्ञा जुगुप्सितसंज्ञा तां द्विविधामपि संज्ञां नोत्पादयत मा कुरुत । हीनसंज्ञाद्युत्पादेन दोषप्रकाशनायाह । तत् कस्माद्धेतोरिति केन कारणे-नैवं न कर्तव्यमित्यत आह । अग्रचर्येत्यादि । यदुत या बोधिसत्त्वचर्या सा अग्रचर्या श्रावकादिचर्यापेक्षया अग्रचर्या । का बोधिसत्त्वचर्या ? लोकविरुद्धेना-विरुद्धेन वा येन प्रकारेण सत्त्वार्थः सम्पद्यते, तेन तेन प्रकारेण मन्त्रिणां यथाशक्त्या प्रवृत्तिः वोधिसत्त्वचर्या । यदुत या मन्त्रचर्या सा तथागतचर्या । गुरवो येभ्यः तत्त्वं मन्त्रं कथयन्ति ते मन्त्रा रत्नपुद्गलाः । तेषां चर्या निष्पन्न-क्रममधिगम्य यदसमाहितयोगेन चरणं सेयं तथागतचर्या । इहैव जन्मनि स्वरूपपरिवर्तनात् ।

एवं चर्याद्वयस्य निर्देशं प्रतिपाद्य सत्यद्वयविभागेन तत्साधनमाह । तद् यथेत्यादि । तद् यथापिनामेति निपातसमुदायो यथेत्यस्मिन्नर्थे प्रवर्तते । आकाशं परमार्थसत्यम् । सर्वत्रानुगतं सर्वेषु प्रतीत्यसमुत्पन्नेषु धर्मेष्वनुगतं व्याप्तम् । सर्वधर्माणि स्कन्धधात्वायतनानि आकाशानुगतानि धर्मधर्मतयोर-भिन्नत्वात् । न कामधातुमास्थितानीत्यादिनामुमेवार्थं विवृणोति । रूपादीनि कामयन्ति प्रार्थयन्तीति कामाः चातुर्महाराजकायिकादयो देवाः । तेषां वासनाद् [?] वास्तुर्भवनं तानि स्कन्धादीनि । तत्रापि न स्थितानि । काम-धातोरपि परमार्थसत्यगतत्वात् । यस्मिन् भवे रूपरागमात्रं स रूपधातुः यस्मिन् भवे रूपवैराग्येण विज्ञप्तिमात्रं स आरूप्यधातुः । तयोरपि न स्थितानि । न चतुर्महाभूतस्थितानीति वायुमण्डलादिक्रमेण स्थितं यन्मण्डलचतुष्टयं स्थावरजङ्गममाधारभूतं तच्चतुर्महाभूतं तत्रापि न स्थितानि । सर्वेषां प्रभास्वर-मयत्वात् ।

एवमेवानेनैव प्रकारेण सर्वधर्माः स्कन्धादयः अनुगन्तव्याः । इममर्थ-वशमिति । इममनन्तरोक्तं अर्थाः प्रतीत्यसमुत्पन्नाः तेषां वशं परमार्थसत्यं

पारतन्त्र्यं स्वतोऽप्यसिद्धत्वं विज्ञायाधिगम्यापि तथागताः सत्त्वानां मृद्वादिभेद-स्थितानामाशयमधिमुक्तिं विदित्वा परिच्छिद्य धर्मं वाग्विज्ञप्तिलक्षणं सत्त्वेभ्यो देशयन्ति प्रकाशयन्ति चिन्तामणिभद्रघट्टवदनाभोगेन सत्त्वानामाशयं .... रूपेण धर्मदेशनाप्रादुर्भावो देशना ।

यथेयं देशना एवमेवानेन प्रकारेण पदानां निरुक्तिः प्रत्याहारः आकाश-तुल्यपदनिरुक्तिराकाशपदनिरुक्तिः[१] । तथा आकाशपदनिरुक्त्या तुल्याः सर्वतथागतसमयाः अनन्तरोक्ता अनुगन्तव्याः ।

एवं सर्वधर्माणां परमार्थसत्यविशुद्धिमुपदिश्यान्ययानसाधारणवज्रकाय-निष्पादकमुपायविशेषं दर्शयन्नाह । तद्यथापीत्यादि । काण्डमरणिः अग्निमथने-राधारभूतं काष्ठं अनेनाग्निर्मथ्यत उत्पाद्यत इति मथनिः उपरिकाष्ठं पुरुष-हस्तव्यायामः मथनं घटनं एतात्त्रितयं प्रतीत्याश्रित्य औष्ण्यानन्तरं धूमः प्रादुर्भवति ततो धूमानन्तरप्रादुर्भाव्यग्निः ज्वलद्भासुराकारो भूतसंघातः समुत्तिष्ठति समेति । उष्मा धूमः पावकश्च एते त्रयः काण्डे न स्थिता इति प्राप्ते न काण्डस्थितो [न] मथनिस्थितः न पुरुषहस्तव्यापारस्थितः । एवमेवेति यथोष्मादयः काण्डादिषु पृथङ्नोपलभ्यन्ते अथ च समवायात् तैरेव तारतम्येनोत्पद्यन्ते, एवमेव सर्वतथागतवज्रसमया अनुगन्तव्याः सर्व-तथागतालयत्वात् । सर्वतथागताः सर्वशून्यं वज्रं महाशून्यं समयोऽतिशून्यं अनुगन्तव्यः शून्यम् । एतेषां त्रयाणामनु पश्चाद् गम्यते ज्ञायत इति कृत्वा । एवं सर्वतथागतादयो ज्ञायन्ते । गमनागमनाद्यैरिति । गमनं नाम शून्य-त्रयक्रमेण परमार्थसत्यगमनम् । तस्मान्महाशून्यातिशून्यशून्यताप्राप्तिरागमनम् । आदिशब्देन गमनागमनाभावपरिग्रहः, निष्पन्नस्य प्रवेशव्युत्थानाभावात् । इतिशब्दः परिसमाप्तौ ।

एवं परमगम्भीरधर्मतत्त्वमाकर्ण्यावधार्यार्तमनसो यथोदानमुदानयन्ति, तद् दर्शयन्नाह । अथेत्यादि । आपातक्षणे आलोकोदयेनाश्चर्यमुपगतास्ततो धर्मतामधिगम्य विस्मयेन विकसितनयनाः उपायज्ञानोदयेन संजाता इदं वक्ष्यमाणकं स्वप्रतिविध्यधर्मतोद्दद्योतनस्वरुपं वचनमकार्षुः कृतवन्तः ।

महाभूतेष्वित्यादि । अत्र महाभूतो धर्मः परमार्थसत्यम् । जात्या बहु-

---

१. आकाशपदनिरुक्तिः repeated, MS

वचनम् । सर्वव्यापित्वात् तदेवाकाशसदृशम् । तार्किकैर्विकल्पयितुमशक्यत्वात् निर्विकल्पः । संवृतिसत्यपरिशोधनात् शुद्धम् । तस्मिन् परमार्थसत्ये संवृणोत्याच्छादयति चक्षुष्पथं विषयताभावेनेति । संवृतिः वज्रधरमूर्तिः । तुशब्दः पुनरर्थः । परमार्थसत्याभिगमनेन शून्यीभूय पुनदृश्यतां यातीति यद् गीयते तदिदमाश्चर्यमिति यावत् ।

परमार्थः प्रभास्वरम् । तेन शुद्धः परमार्थशुद्धश्चासौ तत्त्वार्थश्च महावज्रधरः । स एवालङ्घ्यत्वात् समयः । तत्प्रतिपादको ग्रन्थसन्दर्भश्च परमार्थशुद्धतत्त्वार्थः । सन्ध्याभाषा ॥

॥ प्रदीपोद्द्योतनटीकायां नवमपटले षट्कोटिव्याख्या ॥

—◦—

## ॥ दशमः पटलः ॥

सामान्योत्तमसाधनाश्रिता प्रपञ्चादिविविधचर्यासु जितश्रमा योगिनो यदा सिद्धिर्न लभन्ते तदा स्वदेवताहृदयसंचोदना कर्तव्येति । अथेत्यादिना दशमपटलमुपक्षिपति । अथाहुरिति संबन्धः । पुनः समाजमागम्येति । प्रथमपटलोक्तक्रमेण महासमयवज्रो महावज्रधरः तं तत्त्वाभिसंबोधिसत्यद्वयाद्वैधीभावलक्षणं तमेव कायवाक्चित्तरहस्यत्वात् कायवाक्चित्तगुह्यं विनेयानां यथाशयभेदोपगतत्वात् तथागतः तं नमस्यैवमाहुः ।

तत्त्वमविसंवादकं मन्त्रा मालिकालिजनिताः सर्पकवन्धादयस्तेषां साराः प्रधाना ओंकारादयस्त्रयः तेषां समुच्चय उद्दीपनं कायवाक्चित्तास्तथागताः तेषां गुह्याख्यं रहस्यसंज्ञकं महासिद्धिनयाः महासिद्ध्युपायास्तेषामुत्तमं विशिष्टं तं भाषस्व प्रकाशयेत्यध्येषणा ।

अध्येषणानन्तरं वज्रधरः उपायज्ञानात्मकप्रज्ञोपायोपलब्धापेक्षया विराजमानत्वात् राजा । सर्वक्लेशा रागादयः ते च प्रभेदानुभेदभिन्नत्वात् सागरोपमा इति । सर्वक्लेशार्णवाः तेषु दुःखदौर्मनस्यादिप्रकृतिरभिभूय परमानन्दस्वरूपेण प्रभवति क्रीडत इति प्रभुः । सर्वदुःखेन्धनदहनाद् दीप्तः अतएव चण्डः क्रोधात्मकत्वात् । तस्योदये प्राकृतानामपि प्रोत्फुल्लनयनत्वापादनाद् विशालाक्षः इदं घोषमकार्षीत् । घोषप्रवर्तनस्य तदायत्तत्वात् ॥

कायेत्यादि । कायादीनां कायवाक्चित्तभावनं कायवाक्चित्तस्वरूपेण भावनं परिज्ञानं कायवाक्चित्तवज्राणां भावनं तत् कर्तव्यम् । कथम् ? निर्विकल्पं निरालम्बमिति क्रिया विशेषणम् । अयं काय इयं वाक् इदं चित्तमिति तत्त्वतो भेदाभावान्निर्विकल्पं अन्योन्याश्रयाभावान्निरालम्बम् । त्रयाणामेकरसता समता तया न क्वचित् स्थितम् । समतयेति प्राप्ते समतेत्यार्षम् । नासन्ध्यम् ।

एवं भगवद्वचनेन कायादीनां परमार्थतोऽभेदं प्रदर्श्य सङ्गीतिकृत् हृदयसञ्चोदनोपयोगिनीं समासेन पीठिकां रचयन्नाह । अथेत्यादि । अनन्तरोक्त-

क्रमेण स्वभावशुद्धतथागतः। पारमितालोचनादयो मन्त्रः। विरोचनादयस्तूपनयः तयोरन्योन्याराधनं तदेव वज्रमविनश्वरत्वात् । तन्नामकं समाधिं चित्तैकाग्रतां समापन्नः प्राह भगवान् महावज्रधरः तानध्येषकान् सर्वतथागतानेवमाह । अस्तीत्यादि । अयं वक्ष्यमाणोऽर्थोऽस्ति । भगवन्तः सर्वतथागता इत्यामन्त्रणम्। अक्षोभ्यप्रमुखाः सर्वतथागता इत्यस्य प्रदर्शनक्रियाभियोगः सर्वतथागताः स्त्रीविम्वनिषण्णाः विद्यादेव्यः ताः सहचरादिभेदेनानेकाः । तासां कोटिनियुतशतसहस्रैरप्रमेयत्वादुपलक्षणभूतैः सार्धं सत्त्वाः विषयोपभोगेन मोक्षकामाः तेषामर्थक्रिया छन्दानुरूपेण बोधिप्रापणं तस्यानात्मरङ्गं प्रविष्टसूत्रधारवत् प्रवर्तनं नाटकं तत्प्रदर्शयन्ति ।

कथमित्याह । दशदिग्लोकधातुपर्यवसानेषु लोकधातुषु पञ्चकामगुणैः सतताह्लादनकरै रूपादिभिः क्रीडन्ति विकुर्वन्ति रमन्ति विश्वरमणेन देवीभिः सह रमन्ति परिवारयन्ति विद्यागणैः पूजिताः पुनस्तां प्रतिपूजयन्ति । इयं परिचर्या । न च ते मन्त्रचर्याभियुक्तमवलोकयन्तीति । ते तथागताः क्रीडाद्वारेण परमानन्दसुखमनुभवन्तः मन्त्रः चतुर्विधो मन्त्रवादः यदुत मन्त्रसंज्ञा मन्त्रार्थः मन्त्रविदर्भणं वज्रवाक् स्वरवर्जिता चेति। एतैरुपायैः शान्तिकादिषु प्रवृत्तिः मन्त्रचर्या तत्राभियुक्तं तदभिनिविष्टचित्ता नावलोकयन्ति । न वहु मन्यन्ते । अनवलोकनकारणं निष्पन्नो वतेत्यादिना दर्शयति । अयमिति मन्त्रपरायणः तथागतास्त्र्यध्ववर्तिनः मन्त्रयते गुरुभिरुपांशु कथ्यते यः स मन्त्रः तद्विषयचर्या मन्त्रचर्या तां नयति प्रापयतीति नयः सप्तविधः । यदुत

मण्डलं गणकुण्डं च वलिर्मेलापकक्रमः ।
तत्त्वं सप्तविधाख्यानं स मन्त्रनय उच्यते ।। इति ।

स एव निष्पन्नक्रमः समाधिस्थै[रे]त्रार्यत इति धर्मः। एवंविधतथागतपरम्परागतमन्त्रचर्यानयधर्मा[त्] निष्पन्नो निर्गतो वाह्यः । धर्मादिति प्राप्ते धर्म इत्यार्षः । वत इत्यनादरे । इतिशब्दो लुप्तनिर्दिष्टः ।

एवं मन्त्रपरायणेषु तथागतवैमुख्यं दृष्ट्वा तेषां सिद्धचर्थिनामनुग्रहाय तथागतावलोकनोपायं यथा कथयति भगवांस्तद्दर्शयन्नाह सङ्गीतिकृत् । तदित्यादि । यस्मात् क्रीडादिद्वारेण परमानन्दसुखमनुभवन्तस्तथागताः साधकं नाद्रियन्ते, तस्मात् तेषां महासत्पुरुषाणां तथागतानां व्यवलोकनार्थं साधकाभिमुखीकरणेन प्रसादोत्पादनार्थं इदं वक्ष्यमाणकमुदाजहार । सर्वेत्यादि ।

सर्वतथागतानां कायवाक्चित्तरहस्यभूतं सर्वमन्त्राः सर्पादिमन्त्रदेवता तेषां हृदयं जीवितं संचोद्यते प्रवोध्यते येन तत् । सर्वमन्त्रहृदयसंचोदनं नाम परमगुह्यम् अपात्राणामत्यन्तगोप्यं सर्वतथागतमोहकुलीनाः तेषां कायवाक्चित्तानि सम्यगयन्ति गच्छन्तीति समयः स मन्त्रिभिरालम्ब्यते मनस्कारेणेति आलम्वनस्तं समवलम्वनं प्रणवम् । एवं सर्ववज्रधरकायाद्यालम्वनं मेघनादं सर्वधर्मपरकायाद्यालम्वनम् आःकारं स्वकायवाक्चित्तवज्रेभ्य इति । स्वो महावज्रधरस्तस्य कायादोंकारं वाचः आःकारं चित्तात् हूँकारं यथाक्रममुदाजहार निश्चारयामास । कथं वाक्पथनिरुक्त्या वाक्पथं वचनमास्यं तेन निरुक्तिः कथनम् । तया निरुक्त्या मनःकायाभ्यामपि वक्त्रया[?] वाचा उदाजहार । किमुत वाचा । स्त्रीपुंनपुंसकस्वभावा वर्णास्ते समुच्चीयन्ते संग्रहं गच्छन्ति यस्मिन् स मन्त्रसमुच्चयः । तमक्षरत्रयमुदाजहार ॥

अथेत्यादि । अथ मन्त्रसमुच्चयोदाहरणानन्तरम् अस्मिन्नक्षरत्रये भाषितमात्रे उच्चारितक्षणे सर्वबुद्धा अक्षोभ्यादय सऔरसा बोधिगणसहिता महावज्रधरानुग्रहायास्य सत्त्वानां अवलोकनेन कम्पिता मूर्च्छामापेदे । वज्रसत्त्वं सर्वकुलाधिपमनुस्मरन् सर्वसत्त्वानुग्राहकस्वभावं स्मरन्तः मूर्च्छां प्रीत्यौद्वेल्यमापेदे आपेदिरे प्राप्तवन्तः ।

अथ स्मरणानन्तरं वज्रपाणिर्महावज्रधर इदं वक्ष्यमाणकं देवतासमयालङ्घ्यरूपमुदाजहार । आकाशेत्यादि। आकाशं तथता तत्र धार्यते स्थाप्यत इति आकाशधातुः समयसत्त्वं तस्य मध्यं हृदयं तत्स्थं व्यूहमण्डलं ज्ञानसत्त्वं भावयेत् ध्यायात् । तत्र तस्मिन् ज्ञानसत्त्वमध्यस्थं हृदयस्थं हूंकारं समाधिसत्त्वाख्यम् । एतद्द्वितयं स्वविम्वेन स्वरूपेण प्रकल्पयेत् निष्पादयेत् ।

तेषु समाधिसत्त्वं वज्ररश्मिमहादीप्तं स्फुरन्तं विभावयेत्। वज्राः पञ्चतथागताः तेषां रश्मयः सितादयः तैर्महादीप्तमत्यर्थदीप्तम् विस्फुरन्तं ज्वलन्तं विचिन्तयेत् । बुद्धानां वैरोचनादिनिष्पन्नानिष्पन्नतथागतानां दशदिग्लोकधातुव्यवस्थितानां कायवाक्चित्तं कायवाक्चित्तशक्ति समाधिसत्त्वविनिर्गतसितादिरश्म्यङ्कुशेन हृदयमाकृष्टं विचिन्तयेत् ध्यायात् ।

एवमभ्यस्यन् साधकस्तत्क्षणादेवाकृष्य समाधिसत्त्वे प्रवेशितमात्रादेव सर्वमभिभूय वज्रसत्त्वो भवेदिति संवन्धः । किं स्वरूपः ? अभेद्यकायादिस्वभावत्वात् । कायवाक्चित्तवज्रधृक् महान्तस्तथागताः तेषां रञ्जकत्वात्

महाराजा । सर्वे स्थावरजङ्गमाः तेषामग्र्या हरिहरादयः । तेषामपि निग्रहानुग्रहकरणात् सर्वाग्रः परमेश्वरः । एवं प्रकारं महावज्रधरमात्मानं भावयेदिति यावत् ।

स्वमण्डलं स्वकायमण्डलं तस्य स्ववज्रेण स्वचित्तेन निष्पादनविधेरयं इदं यदनन्तरोक्तं सर्वबुद्धानां त्र्यध्ववर्तिनां सारं स्थिरीभूतं वज्राणि तथागतचित्तानि तेषां समुच्चयमाकर्षणम् । समुच्चीयते आकृष्यते अनेनेति कृत्वा ।

एवं सर्वतथागतचित्तमयमात्मानं निष्पाद्य यथापरिवारचक्रं निष्पादयति । तद्दर्शयन्नाह । स्वेत्यादि । स्वात्मानं चतुर्षु स्थानेषु पूर्वादिस्थानेषु रूपतः यथोक्तवर्णभुजादिस्वरूपतः । त्रिमुखाकारयोगेनेति । आक्रियन्ते व्यज्यन्ते गृह्यन्त इत्याकाराः रागादयस्तैर्योगः त्रिमुखाकारयोगः तेनोपलक्षितं कृत्वा त्रिवर्णेन त्र्यक्षरेण मन्त्रपुरुषा वैरोचनादयः तांश्च तत्स्थानेषु ध्यात्वा भावयेदभ्यसेत् । अनेन न्यायेन यथास्वं तत्कुलप्रतिबद्धदेवताः तथागतव्यूहं स्फरेत् । तथागतचतुष्टयस्योपलक्षणार्थत्वात् ।

इत्येवमाह अवोचद् भगवान् खवज्रसमयो महावज्रधरः । एवं संग्रहमण्डलमभिनिर्माय पुनः किं कुर्यादित्याह । तत्रेत्यादि । तत्र तथागतहृदयसंचोदने इदं वक्ष्यमाणं परममुत्कृष्टं वज्ररहस्यं तथागतरहस्यं मण्डलान्येवाभेदान्माण्डलेयास्तेषां मण्डलानां प्रत्येकं हृदयमध्यगतं हृच्चन्द्रस्थं सूक्ष्मं विभावनं कुर्यात् । विशेषेण विभाव्यत इति विभावनं ज्ञानमयत्वात् सूक्ष्मं ज्ञानसत्त्वं भावयेदिति यावत् । तस्य ज्ञानसत्त्वस्य मध्यगतं हृच्चन्द्रगतं तथैव प्रत्येकमक्षरमविनश्वरस्वभावं परममुत्कृष्टमनाहतोद्भवत्वात् पदं हूङ्कारं योगतः श्रेयसा साधकं योजयति इति योगः समाधिसत्त्वः । तस्मात् पञ्चशूकं महावज्रं विकरालं भावयेत् ध्यायात् । अनेन प्रकारेण त्रीणि समयज्ञानसमाधिसत्त्वाख्यानि ते (?) अभेद्यत्वात् वज्राणि चिन्तयेत् । वज्राङ्कुशप्रयोगत इति । वज्रास्तथागताः तेषामङ्कुशमिवाङ्कुशम् यथा गजस्य । तस्य प्रयोगो वज्राङ्कुशप्रयोगः तस्माद् वज्राङ्कुशप्रयोगं त्रीणि वज्राणि चिन्तयेत् ।

तमेव प्रयोगं दर्शयितुमाह । हृदयमित्यादि । तेन वज्रत्रयेण हृदयं साध्यदेवताहृदयं ताडयेत् चालयेत् । अधिपतिप्रमुखत्रिसत्त्वात्मक माण्डलेयानामेकीभूतेन रश्मिसमूहेनाङ्कुशाकारेण साध्यदेवताहृदयं त्रिसत्त्वाख्यं कम्पयेत् यावद् देवतां वा प्रचोदयेदिति । वाशब्दः समुच्चये । वज्राङ्कुशभेदनेन

साधकः । स्फरणोत्पादानन्तरं देवतां पुरोवर्तिनं निशुम्भराजं आज्ञां मार्गयन्तं विचिन्त्य तं तथागतैः समयसिद्धिं दापयेत् । चोदयेत् आज्ञापयेत् । इदं यदनन्तरोक्तं विधानं तत् सर्ववज्राणां सर्वसाधकानां बुद्धबोधिप्रसाधनमिति । बुद्धास्तथागतास्तेषां बोधिचित्तप्रसाधनमाकर्षणम् ।

वज्रेत्यादि । अनन्तरोक्तं त्रिसत्त्वात्मकवज्राङ्कुशविभावनं वज्रपद्मकुलादयैरिति । तथागतरत्नकर्मकुलैश्च साधकैरनुष्ठेयम् । इदमनन्तरोक्तं हृदये चोदनं तथागतहृदयसंचोदनं तत्सर्वं नाटक इव संभूतत्वात् नाटकसंभवम् । यथा नाटक एक एव सूत्रधार इन्द्रादिस्वरूपेण नेपथ्यादिभिः परिकल्प्यते, तथेहाप्येक एव चित्तवज्रः साध्यसाधकसाधनरूपेण परिकल्प्यत इति यावत् ।

अस्य हृदयसंचोदनविधानस्य कालप्रमाणं दर्शयितुमाह । सप्ताहमित्यादि । आरम्भदिवसात् प्रभृति सप्तदिनानि तावत्कुर्वीत । इदं वज्रनयोत्तममिति । वज्रास्तथागतास्ते नीयन्ते आकृष्यन्ते यैर्विधानैस्तानि वज्रनयानि तेषूत्तममूत्कृष्टं वज्रनयोत्तमम् । तद्विधानमनुतिष्ठेत् । सिध्यत इत्यादिना विधानस्यानुशंसनमाह । कायवाक्चित्तसाध्यं तथागतकायवाक्चित्तं ज्ञानवज्रिणां साधकानां सिध्यते रहस्यं गुरूपदेशलभ्यत्वात् ॥

भीता इति भीरिताः अतिक्रान्ताः भीता एवंभूता अपि तथागताः संत्रस्तमनसा इति । कृपावशगतयोऽविघ्नचेतसः साधकवरदा व्यवलोकयन्ति । काङ्क्षितवरप्रदानेनानुगृह्णन्ति । अनुगृह्य किं कुर्वन्तीत्याह । ददन्तीत्यादि । विपुलां महतीं मनःसन्तोषणेन प्रियामिष्टां सिद्धिं लौकिकलोकोत्तरलक्षणां ददन्ति ढौकयन्ति ।

के ददन्तीत्याह । बुद्धाश्चेत्यादि । बुद्धा अक्षोभ्यादयः बोधिसत्त्वा मैत्रेयादयः मन्त्रचर्याग्रधारिणो बोध्यर्थं घटमानसिद्धपुरुषाः एवमप्रतिपत्तेः साधकस्य किं स्यात् इत्याह । अतिक्रमेदित्यादि । यदि चेन्मोहात्मा इमे तथागताः अहंप्राकृता या परिकल्पना स मोहः । एवंविधो मोहः आत्मा स्वभावो यस्य स मोहात्मा । स तस्य साधकस्य जीवितं तदन्तम् । येन कर्मणा सिद्धिमिच्छति । तेनैव कर्मणा जीवितं क्षपयति न पुनः सिद्धिं प्रतिलभते हृदयसंचोदनविरहितश्चेदित्यभिप्रायः । यथारुतम् ।

एवं सामान्यसाधनप्रवृत्तानां हृदयसंचोदनप्रयोगं निर्दिश्येदानीमुत्तमसाधनस्थानमाह । अथेत्यादि विभक्तार्थः । इदं घोषमिदं वचनमकार्षीत् अब्रवीत् ॥

यावन्तः केचिन्मन्त्ररहस्यं तत्र प्रवृत्ताः पुरुषाः मन्त्रपुरुषाः त्रिवज्रज्ञानास्तथागताः तैः पूरिताः परिपूर्णाः सन्तः तेषां सर्वभावविकल्पनं द्वयेन्द्रियप्रयोगेण भवति नान्यथा । सर्वभावाः अनन्तरोक्ताः वक्ष्यमाणाश्च साध्यसाधनादिप्रयोगास्तेषां विकल्पनं निष्पादनं सर्वभावविकल्पनं तत् । द्वयेन्द्रियप्रयोगेणेति द्वयेन्द्रियं सत्यद्वयं तस्य प्रयोगो मीलनं तेन भवति या काचित् लौकिकलोकोत्तरा सिद्धिः सा द्वयेन्द्रियप्रयोगेण निष्पादनं सर्वभावविकल्पनं तद्विना न सिध्यतीत्यभिप्रायः । तदनन्तरोक्तप्रयोगेण निष्पादितं साधनं तदिदं सर्वबुद्धानां तथागतसंवन्धिमन्त्रसमयोऽलङ्घ्यो यैस्ते मन्त्रसमयाः तेषां साधनं साधनोपायम् ।

विद्येश्वरीत्यादिना द्वयेन्द्रियप्रयोगनिष्पादनोपायमाह । विद्येश्वरी प्रज्ञापारमिता । तया प्रविष्टेषु स्कन्धादिषु निराभासीकृतेषु वज्रं संयोगः एकीकरणं तस्य भावना कार्या । ततः सिद्धः सन् किं कुर्यादित्याह । रक्तामित्यादि । परमार्थसत्यप्रवेशानन्तरं सत्यद्वयात्मिकां स्वमहामुद्रां निष्पाद्य तां त्रैधातुकीं तदपरित्यागसंयोगेन रक्तां सक्ताम् । रक्तेक्षणां त्रैधातुकस्थितसत्त्वराशिरयमस्माकं पितेत्यादिबुद्धिमुत्पाद्य सरागं सवहुमानं च वीक्षेद् विजानीयात् । इमं यदनन्तरोक्तं तत् समयमण्डलम् । समयो महावज्रधरः तस्य मण्डः सारभूतो विधिः तं लाति गृह्णातीति समयमण्डलम् । किं तद्विधानम् ?

एवं सोपायं सफलं च हृदयसंचोदनं संप्रदर्श्य तत्सिद्धस्य योगिनः प्रवृत्ति दर्शयितुमाह । अथेत्यादि । सर्वतथागताः वैरोचनादिस्वभावपरिकल्पिताः रूपस्कन्धादयः । तेषामात्मा स्वभावः परमार्थसत्यं तस्माज्जातः सर्वतथागतात्मजः महावज्रधरः । सर्वबुद्धानामभिषेकभूतत्वात् सर्वाभिषेकः । अतएव सर्वबुद्धाग्रः । इदं वक्ष्यमाणवचनमब्रवीत् । सर्वेष्वनन्तापर्यन्तेषु लोकधातुषु यावन्तो हीनमध्यमप्रणीतभेदभिन्ना योषितः स्मृताः रूपवज्रादयः परिकल्पिता महामुद्राः द्विविधाः यदुत मन्त्रमूर्तिर्ज्ञानमूर्तिश्च तस्या आदियोगः तथागतालम्बनं तेन तान् रूपादिविषयान् उपभुञ्जयेत् ।

स्फरेद् बुद्धपदं तत्र असंख्यकोटिवज्रेण

तत्र महामुद्रादियोगे बुद्धपदं बुद्धनिर्माणमसंख्यप्रमाणमप्रमेयं वज्रिणा वज्री स्फरेत्याह भगवान् बोधिसमयो महावज्रधरः ।

अनेन योगेन बोधिं प्राप्नुयात् । सत्त्वान् बोधयति आत्मस्वरूपमिति बोधिः । कीदृशीति ? वज्राकाशसन्निभा । कायवज्रादिस्वभावा । अस्पृश्यत्वादाकाशसन्निभा । तां बोधिं प्राप्नोति । घटमानावस्थायामप्यनुशंसां दर्शयति। स भवेदित्यादि। घटमानो बोधिसत्त्वैः वज्रसत्त्वस्येव संमुखारोग्यादि समर्पितम् । दीर्घमायुर्यस्य स वज्रसत्त्वायुः उपचाराज्जिना गुणजिनाः तेषामुदधिः स्थानं भवेद् यथा सर्वरत्नानामुदधिरिति । सन्ध्याभाषा।

लौकिकलोकोत्तरसिद्ध्यर्थं तथागतहृदयसंचोदनपटलः ॥

॥ प्रदीपोद्द्योतनटीकायां दशमपटले षट्कोटिव्याख्या ॥



## ॥ एकादशः पटलः ॥

एवमुभययोगिनां द्विप्रकारेण हृदयसंचोदनमभिधायेदानीं विकल्पित-निष्पन्नयोगिनां प्रथमपटलोक्तद्विविधदेवतारूपोद्द्योतनार्थमेकादशमपटलमुप-क्षिपन्नाह। अथेत्यादि। सर्वतथागतवज्रं प्रणवाद्यक्षरत्रयं तेनोत्पद्यमाना पुरुषोत्तमा देवता यस्मिन् समाधौ तन्नामकं समाधिं चित्तैकाग्रतां समापद्या-मुखीकृत्य इदमुदाजहार। किं तत्? सर्वतथागतानां मन्त्रः। गुह्यभूता वज्रविद्या सर्वतथागतमन्त्रवज्रविद्या ओङ्कारादित्रितयमेव तैर्निष्पाद्यते पुरुषदेवता यस्मिन् तत्पटलमुक्तवानिति सङ्गीतिकारः अमुमेवार्थं भगवद्वचनेन दर्शयन्नाह।

त्रिवज्रान् कायवाक्चित्तवज्राः तन्निष्पादकान्यक्षराणि ओङ्कारादीनि त्रिवज्राक्षराणि तानि मन्त्राग्राणि सर्वमन्त्रप्रभावत्वात्। तैर्महामुद्राविभावनं कर्तव्यम्। महामुद्रेति भूर्भुवः स्वः प्रपूज्यत्वान्महतीं मुदं हर्षं द्रवति गच्छतीति महामुद्रा। तस्या विभावनं कर्तव्यमनुष्ठेयम्। ज्ञानवज्रेण साधकेन सर्वबोधिः पञ्चाकाराभिसंबोधिः तत्समावहम्।

ओङ्कारमित्यादिना अक्षरत्रयस्य कारित्रं दर्शयति। ओङ्कारं तथागत-हृदयं तद् योगिनोऽभेद्यकायनिवर्तकत्वात् वज्रकायसमावहम्। बोधिस्तथता ततो निर्मितो निष्पन्न आत्मा यस्य स बोधिर्निरात्मा अमिताभः। तस्य भावो नैरात्म्यम्। नैरात्म्यमाःकारं तत्स्वभावं योगिनोऽभेद्यवाङनिवर्तकत्वात् वाग्वज्रमावहम्। कायवाचोराश्रयभूतं चित्तं कायवाक्चित्तम् अक्षोभ्यस्व-भावम्। त्रिवज्राणामभेद्यमभिन्नत्वं यस्मिन् तत् त्रिवज्राभेद्यं चित्तं तद्-योगिसन्ताने निष्पादयतीति त्रिवज्राभेद्यसमावहं हूङ्कारमित्येवमाह सर्व-तथागतकायवाक्चित्तमन्त्रपुरुषो महावज्रधरः।

अनन्तरोक्तमहामुद्रानिष्पत्तिरानुपूर्व्यं दर्शयन्नाह। खवज्रेत्यादि। खवज्र-माकाशं मध्यं तद्गतं सर्ववज्रं मण्डलं चिन्तयेत्। सर्ववज्राणि लोचनादि-चतुर्देव्यः ताभिरानुपूर्व्येण निर्वर्तितं मण्डलं भावयेत्। तत्र भूभागोपरि भ्रूङ्कारं कूटागारनिष्पत्तिहेतुभूतं वज्रमेघास्तथागतसमूहाः। तेषामधिमोक्षेण यथास्थानं

स्फरणं तदावहति धारयतीति वज्रमेघस्फरावहम् । भ्रूङ्कारं तत्रेत्यादिना भ्रूङ्कारं प्रदर्शनं वज्रमण्डलं सूर्यमण्डलं तन्मध्यस्थं हूङ्कारं प्रभावयेत् । हूङ्कारनिष्पन्नं सूर्यमण्डलं भावयेदित्यभिप्रायः ।

तथैवोंकाराःकारनिष्पन्नं चन्द्रपद्ममण्डलं भावयेत् । एवं मण्डलत्रयं निष्पाद्य पद्मकर्णिकोपरि तदेव वीजत्रयं विन्यसेदित्याम्नायः । भ्रूङ्कार-मालयमित्यादिना पूर्वोक्तमर्थं निगमयति । आधारमण्डलं ध्यात्वैवं [च] चिह्नत्रयं भावयेत् । नान्यथेति ॥

हृदयमित्यादि । त्र्यध्वबुद्धेभ्यः त्र्यध्वतथागतानां त्र्यध्वबुद्धानामिति प्राप्तत्वात् । हृदये चन्द्रमण्डलं चित्तसंकेतितत्वात् । कायवाक्चित्तं त्र्यक्षरं तेन यस्मिन् रज्यते स्थीयते तत् कायवाक्चित्तरञ्जनं चन्द्रविम्बं चिह्नत्रय-मुपमर्द्यंतां भावयेत् । ततः किमित्याह ओमित्यादि । तस्मिश्चंद्रमण्डले बुद्ध-कायसंज्ञकमोङ्कारं तथा बुद्धवाक्पथमाःकारम् ॥

ज्ञानानां प्रकृतीनामोघः समूहो यस्मिन् तज्ज्ञानौघं चित्तं तत्स्वभावं हूङ्कारम् । इदमक्षरत्रयं बोधिनयोत्तममिति । बोधिर्महासुखपदम् । तन्नीयते प्राप्यते येन तद् बोधिनयम् । किं तदक्षरत्रयपरावृत्त्या संजातं पञ्चाकाराभि-संबोधिसूचकं वज्रं तदेवोत्तमं सर्वकुलविशिष्टत्वात् । इदमिति अनन्तरोक्तं यद्वज्रं तत् सर्वबुद्धानां महावज्रधरयोगिनां बुद्धबोधिप्रसाधकम् । उत्पत्ति-क्रमेण महामुद्रानिष्पादकम् ।

निर्मितमित्यादि । एतन्महामुद्रारूपं ज्ञानवज्रेण महावज्रधरेण निर्मितं प्रदर्शितम् । किमर्थम् ? बुद्धा रत्नपुद्गलास्तेषां हेतुः संवृतिसत्यम् । फलं च परमार्थसत्यम् । हेतुफलाभ्यामुदेति निष्पाद्यते इति हेतुफलोदयम् । परिशुद्ध-देवतारूपं तदर्थं निर्मितं महावज्रधरेण । एत इत्यादि । मन्त्रा विद्या इति च कल्पादौ कीर्तिताः निष्पादनादिसमयैरिति । निष्पादनं पूर्वमेवारक्षण-भक्षणादिसमयैः सार्धं कथिताः । बुद्धपूरुषा अक्षोभ्यादय एव नान्यैः । कैरि-त्याह । त्रिवज्राभेद्यभावनैस्तथागतैः ॥

सर्वतथागतेत्यादिना अमुमेवार्थमुपसंहरति । सर्वतथागतकायवाक्चित्त-त्र्यक्षरं तस्य समयं तदुद्भूतं सूर्यादिमण्डलत्रितयं तस्मिन् तत्त्वं पद्मोपरि त्र्यक्षरं ज्ञानमिति सर्वपरावृत्तिनिष्पन्नं चन्द्रमण्डलं वज्रं चन्द्रमण्डलोपरि विन्यस्ताक्षरत्रितयनिवृत्तं पञ्चसूचिकमहावज्रं तेनाधिष्ठीयते निष्पाद्यत

इत्यधिष्ठानं महामुद्रारूपं तस्य हेतुः कारणम् । तन्निष्पादिका चित्तैकाग्रता समाधिः। स तथोक्तः ॥

विविक्तेष्वित्यादिना साधकस्य प्रतिपत्तिं दर्शयति । विविक्तेषु जन-सम्पातरहितेषु रम्येष्विति पुष्पफलपल्लवोपेतविविधतरुलतोपगूढमनोज्ञसलिला-शयविराजितमनोऽनुकूलेषु स्थानेषु स्थित्वा यः साधकः इममनन्तरोक्तं योगं समारभेदभ्यसेत्, तेन कायवाक्चित्तं महावज्रधरत्वं सिध्यते साध्यते। पक्षैकेनेति । पक्षः गुरुदेवताविषये सम्प्रत्ययः। तस्मिन्नेकेन निश्चितेन तत्परेण न संशयः। नियतं कायवाक्चित्तं साध्यतेऽनेन क्रमेणोत्पत्तिक्रममभ्यसन् मन्त्री निष्पन्नक्रमसमाधिमधिगम्य नियतमिहैव जन्मनि महावज्रधरत्वं प्राप्नोतीत्य-भिप्रायः ॥

एवं महावज्रधरयोगिनामुत्पत्तिक्रमसाधनं संदर्श्य वैरोचनादियोगिना-मेकस्मृतिसमाधिं दर्शयन्नाह । खवज्रमध्यगं चिन्तेत् स्वच्छं मण्डलमुत्तममिति । अभावेत्यादि गाथानुपूर्वेण कूटागारोदरे द्वात्रिंशद्देवताविन्यासपर्यन्तमधिमोक्षेण समापद्य ओंशून्यतेत्यादिमन्त्रेण सर्वं निराभासीकृत्य ओङ्काराद्यक्षरत्रयेण चन्द्र-सूर्यपद्मानि निष्पाद्य पद्मकर्णिकोपरि त्र्यक्षरं विचिन्त्य सर्वपरावृत्त्या स्वच्छ-मण्डलं चन्द्रमण्डलं विचिन्तयेत् । निष्पाद्य स्वमन्त्रसमयमिति। चन्द्रमण्डलोपरि त्र्यक्षरं विन्यस्य तत्परावृत्त्या चक्रं भावयित्वा तज्जातं वैरोचनं समयसत्त्वं भावयेत् ।

तस्य हृदये ज्ञानसत्त्वं विभाव्य तस्यापि हृदये ओङ्कारं समाधिसत्त्वाख्यं हृदयभूतं पञ्चरश्मि पञ्चरश्म्युपेतं न्यसेत् । वैरोचनाग्रभावनैः वैरोचनयोगिभिः महामेघाः वैरोचनसमूहाः तान् । ओङ्कारं स्फारयन् ध्यायात् ।

अनेन समाधिना बुद्धस्योत्पत्तिक्रमज्ञस्य वज्रवैरोचनस्योदधिरिव स्व-कुलीनानां प्रभवत्वात् । स यस्य साधकस्य कायं कायः सिध्यतो पक्षमात्रेण समाध्यासक्तिमात्रेण क्रियाप्रपञ्चनिरपेक्षयैवेत्यभिप्रायः । बुद्धकायः सर्वलक्षणो-पेतवज्रकायः । तत्समप्रभः तत्समर्द्धिः सिध्यति । त्रिवज्रकल्पं महवज्रधरप्रक्षो भूत्वा सेवयन् पञ्चज्ञानिनां तिष्ठेयुः तिष्ठेत् । पञ्चज्ञानानि चक्षुरादीनि विज्ञा-नानि तानि ग्राहकस्वभावेन येषां ते पञ्चज्ञानिनो रूपादयो विषयाः । तानन-भवन्नासंसारा तिष्ठेदित्याह भगवान् कायवज्रगुह्यो महावज्रधरः । सर्व-तथागतचन्द्रमण्डलं तत्र वज्रमभेद्यस्वभावं चक्रं तस्य रश्मिव्यूहो महामुद्रारूपं

तन्निष्पादकः समाधिः सर्वतथागतवज्ररश्मिव्यूहो नाम ॥

खवज्रेत्यादि । तथैव सर्वं संपाद्य धर्ममण्डलं पद्ममुत्तमं रक्तमष्टदलं ध्यात्वा तत्परावृत्त्या स्वमन्त्रपुरुषममिताभं निष्पाद्य तद्धृदि ज्ञानसत्त्वं ध्यात्वा वाक्पथे ज्ञानसत्त्वे आःकारसमाधिसत्त्वं पञ्चवर्णं महावज्रमभेद्यस्वरूपं लोकेश्वराग्रभावनैरमिताभगतचेतोवृत्तिभिः न्यसेत् । निष्पाद्य समयज्ञानवाक्समयप्रपञ्चकमिति । समयः समयसत्त्वः ज्ञानं ज्ञानसत्त्वम् । वाक्समयः समाधिसत्त्वः । निष्पाद्यैतत्सत्त्वत्रितयमेकीकृत्य भावयेत् । अनेनैव न्यायेन पञ्चकं तथागतपञ्चकं त्रिसत्त्वसंपुटीकरणेन भावयेत् ॥

धर्मवाक्पथोऽमिताभसमाधिः समारूढः संप्राप्तः धर्मः परमार्थसत्यं वज्रं संवृतिसत्यम् । धर्मसमायुक्तं वज्रं धर्मवज्रं महावज्रधरपदं समावहेत्, प्राप्नुयात् । त्रिवज्रकल्पमित्यादि विवृतार्थम् ।

सर्वतथागतो ज्ञानसत्त्वः वाग्वज्रसमाधिसत्त्वसमयः समयसत्त्वः सर्वतथागतवाग्वज्रसमयानां संभवो यस्मिन् स तथोक्तः समाधिः ॥

खवज्रेत्यादि । महावज्रधरसमाधिवत् सर्वं संपाद्य स्वविम्बपुरुषं समयसत्त्वं निष्पाद्य चित्तं ज्ञानसत्त्वस्तत्संस्थितं ज्ञानसत्त्वहृदयसंस्थितम् हूङ्कारं समाधिसत्त्वाख्यं चिन्तयेत् ।

एवं त्रिसत्त्वकायं महासमयसत्त्वमक्षोभ्यं पञ्चवर्णरश्मिप्रभामण्डलोपेतं विभावयेत् । ज्ञानवज्रेणाक्षोभ्ययोगिना । सर्ववज्रजिनोऽक्षोभ्यः तस्यालयं महामुद्रासिद्धिं प्रतिलभत इति दर्शयितुमाह । वज्रचित्तेत्यादि । वज्रं परमार्थसत्यं चित्तं संवृतिसत्यं ताभ्यां घटितः वज्रचित्तमयः देवमनुष्याणामनुशासकत्वात् शास्ता । ज्ञानगुणाः कामैश्वर्यादयोऽष्टौ तेषामुदधिराकरत्वात् । त्रिवज्रकल्पमित्यादि गतार्थम् ।

वज्रं समयसत्त्वः चित्तं ज्ञानसत्त्वः गुह्यं समाधिसत्त्वः । एवं त्रिसत्त्वात्मकत्वाद् वज्रचित्तगुह्यो महावज्रधर इत्याह । सर्वतथागतेत्यादिना प्रकृणार्थमुपसंहरति । सर्वतथागतो महावज्रधरः कायं वाक्चित्तं वैरोचनादित्रयं समयोऽमोघसिद्धिः । वज्रो रत्नसंभवः एषां समाधिरभेदोपचारात् सर्वतथागतकायवाक्चित्तसमयवज्रो नाम । यथारुतम् ।

एवं कल्पितयोगस्य फलरूपेण निष्पन्नक्रमं सूचयित्वा तच्छाक्षादेव

दर्शयितुमाह । महावज्रधरमित्यादि । ज्ञायत इति ज्ञानं स्थिरचलं तस्य मण्डलं समूहः त्रैलोक्यं तन्मध्ये महावज्रं स्वं महामुद्रारूपं समाधायाधिपतित्वेन स्थापयित्वा सर्वकायेषु स्थावरजंगमेषु खंकारमाकाशीकरणमनुभेदक्रमेण सर्वं निराभासीकृत्यात्मन्यनुक्रमेण प्रवेशः । तंकृत्वा खवज्रज्ञानसमो भवेत् । त्रिसत्त्वात्मक एकः स्यात् । खमिति प्रभास्वरः ॥

तस्य च बुद्धैः वैरोचनादिस्वभावैः रूपस्कन्धादिभिर्बोधिसत्त्वैः क्षितिगर्भादिस्वभावैः चक्षुरादिभिर्मुहुर्मुहुरिति । रूपस्कन्धगतेत्यादिक्रमेण प्रतिक्षणं पूज्यमानः । ज्ञानत्रयात्मके स्वस्मिन् प्रवेश्यमानस्त्रिधा प्रज्ञोपायोपलब्धस्वभावेन कल्प्यत इति त्रिकल्पं ज्ञानत्रयं तत् समयति विलयं गच्छति यस्मिन् तत् त्रिकल्पसमयं प्रभास्वरं तं तिष्ठेत् । तिष्ठन् बुद्धैरपि न दृश्यत इति । बुद्धाः त्रीणि ज्ञानानि । तैरपि यथा न दृश्यते यथादर्शनमनाभासः तथा तिष्ठेदित्याह भगवान् खवज्रसमय इति । खवज्रं प्रभास्वरं तस्मात् समेति उद्गच्छतीति खवज्रसमयो महावज्रधरः वक्ष्यमाणकं व्युत्थानसमाधिं सूचयन्नाह कायेत्यादि । कायवाक्चित्तवज्रं महामुद्रा तस्या अन्तर्द्धानं प्रभास्वरं तस्मात् संभवतीति संभवः व्यूहः स्थिरचलसर्वभावात्मकं ज्ञानकायं तस्य माला यथाशयं वैरोचनादिरूपेण प्रवृत्तिः सा यस्मिन् समाधौ चित्तक्षणे स तथोक्तः ।

तमेव सर्वसमाधिं दशयन्नाह ध्यात्वेत्यादि । स्वमन्त्रपुरुषो त्रयपरिशुद्धमहामुद्रारूपं वज्रमण्डलमध्यतः प्रभास्वरमध्यादुत्थितं ध्यात्वा तदनन्तरं प्राकृतसत्त्वानां विषयीभूतनिर्माणकायं परिगृह्य प्राणायामाङ्गभूतमनाहतं हूंकारवज्राख्यं हृदये कृत्वा स्थापयित्वा तदनन्तरं रश्मिविभावना कार्या । दश रश्मयः प्राणायामे स्थिता । तेषां विभावना दक्षिणादिभेदेन प्रवेशादिक्रमेण प्रवृत्तिः ॥

हूमिति अनभिलाप्यानभिलाप्य-सूचकम् । मञ्जुरविनश्वरः श्री प्रभाश्वरः । तस्मात् समुदेतीति मञ्जुश्रीसमयः । संभुज्यतेऽवैवर्तिकैर्विषयी क्रियते इति स एव संभोगः ज्ञानसमयः कायः तं प्राप्य कायवाक्चित्तवज्राणि निर्मितकायवाक्चित्तानि तानि सन्ति यस्य स कायवाक्चित्तवज्रिणः वज्रीति प्राप्ते । बोधिः परमार्थः सत्त्वः सम्वृतिसत्यं ते आत्मा देहो यस्य स बोधिसत्त्वात्मा । दशभूमयः दशरश्मयः । तेषु प्रतिष्ठितः । योऽनन्तरोक्तक्रमेण भावकः स एवं संभवेत् ।

बोधिसत्त्वेत्यादिना समाधिं समापयति। सत्यद्वयेन परिगृहीतं रूपं बोधिसत्त्वः। तच्च ज्ञानं स एव समयः। स एव त्रैधातुकाच्छादकत्वाच्चन्द्रः······ सत्त्वार्थकरणाद् वज्रः। तन्निष्पादकसमाधिरपि तथोच्यते। सन्ध्याभाषा।

अनन्तरोक्तक्रमेण निर्माणकायस्य चक्षुराद्यायतनविशुद्धिद्वारेण फलं दर्शयितुमाह। खधात्वित्यादि। आदौ चक्षुर्गोलकशून्यीकरणेन लब्धं यत्सौसीर्यं तत् खधातुः। तन्मध्यगतं थ्लींकारं ज्वालसुप्रभं सूर्येन्दुरश्मिभिः दीप्यमानं अस्यन्ते क्षिप्यन्ते येनेत्यस्त्रं परमाः शक्रादिविघ्नगणाः तदर्थमस्त्रं परमास्त्रम् तन्निष्पन्नेन चक्षुर्भ्रमणेन सर्वविघ्नविध्वंसनात् परमास्त्रं थ्लींकारं तं वज्रकायेन क्षितिगर्भस्वभावेन ध्यात्वा खवज्रकायसमो भवेदिति। महावज्रधर इवानन्तलोकधातुस्थितः सर्वभावान् हस्तामलकवत् पश्येत् थ्लीं इति उक्तार्थसूचकं बीजम्।

खवज्रसमयो महावज्रधरः। तस्य व्यूहो महामुद्रा। सा आलयः स्थानं यस्य क्षितिगर्भस्य स खवज्रसमयव्यूहालयः। तत्सूचकसमाधिरपि तथोच्यते।

एवमनन्तरोक्तक्रमेण वक्ष्यमाणेन च दिव्यचक्षुः श्रोत्रादिकं भावयति यः स योगी पञ्चाभिज्ञासमो महावज्रधरतुल्यो जायते। कथम्? बुद्धाभिज्ञाग्रसमयैः बुद्धाः त्र्यध्ववर्तिनो जिनाः तेषामभिज्ञाग्रसमया दिव्यनेत्रादयः। तैर्महावज्रधरसमो भवेत्। इदमिति यदनन्तरोक्तं दिव्यं चक्षुः सर्वसिद्धिनामिति। सर्वे स्वपरयूथ्याः तेषां सिद्धिनां बुद्धं स्वचित्तं तद् यथाभूतमभिजानन्तीति बुद्धाभिज्ञा महायोगिनः। तेषामग्रसाधनम् सर्वसिद्धीनामपि प्रधानसाधनम्। बुद्धमण्डलं सर्वतथागतसमयमुत्तमम्। वज्रवदभेद्यात्मकः सत्त्वः वज्रसत्त्वः। तं भावयित्वा निष्पाद्य खधातुमध्यगतं श्रोत्रस्थानभावितप्रभास्वरमध्यगतं ज्ञानं वज्रपाणिः तन्निष्पादकमोङ्कारं ज्ञानोङ्कारं भावयेत्।

त्रिवज्रसमयो वज्रपाणिः। तस्य साधनेन तन्मयीकरणेन त्रिवज्राक्षोभ्यो महावज्रधरः अनन्तलोकधातुस्थितविविधशब्दानां श्रोत्रविलपतितैकशब्दवत् ग्रहणेन तत्समत्वात् त्रिवज्राक्षोभ्यसमो भवति योगीत्याह भगवानक्षोभ्यवज्रो महावज्रधरः।

अक्षोभ्यसमकायेनेति। महावज्रधरतुल्यकायः तथैवाप्राकृतवाक्चित्तधारणात् वाक्चित्ताग्रधृक् सदा सर्वकालं सर्वेषु लोकधातुषु पूज्यते अक्षोभ्यवज्रिणेति श्रोत्रस्थेन वज्रपाणिना पूज्यते सेव्यते।

अक्षोभ्यसमयोऽक्षोभ्यः तस्मात् संभवतीति अक्षोभ्यसमयाभिसंभवो वज्रपाणिः। तदुत्पादकः समाधिरपि तथोक्तः।

खधात्वित्यादिना आकाशगर्भसमाधिमाह। खधातुमध्यगतं प्रभास्वरमध्यगं बुद्धमण्डलं महावज्रधरकायमण्डलं चिन्तयेत्। आकाशवज्रं प्रभावित्वेति। महामुद्रारूपस्यापि घ्राणेन्द्रियदेशे आकाशवज्रं प्रभास्वरं ध्यात्वा रत्नः आकाशगर्भः तन्निष्पादक ओंकारो रत्न ओंकारस्तं विभावयेत्।

त्रिवज्रसमयध्यानेनेति। त्रिवज्रः त्रिविधो गन्धः। तं समेति गच्छतीति त्रिवज्रसमयः आकाशगर्भः। तस्य ध्यानेन तत्स्वभावालम्बनेन। त्रिवज्रकेतुर्महावज्रधरोऽनेकलोकधातुस्थितगन्धग्रहणेन तत्समो भवेत् इत्याह भगवान् रत्नकेतुवज्रो महावज्रधरः।

कायेत्यादि। एवं भावकः अप्राकृतकायवाक्चित्तेन रत्नकेतुसमप्रभ इति। गगनगञ्जसमाधिना रत्नकेतुसमर्द्धिः स भवेत्। बोधिनैरात्म्यं प्रभास्वरम् तत्र ज्ञानं चतुःशून्यात्मकं महावज्रधररूपम्। तदेव श्रावकाद्यविषयत्वाद् गुह्यम्। तेन सममालयं शरीरं यस्य स बोधिनैरात्म्यज्ञानगुह्यसमालयः साधकः रत्नसमयः।

त्रिप्रकारो गन्ध[:] संभुज्यते अनुभूयते येन स रत्नसमयसंभोगवज्रः आकाशगर्भः। तन्निवर्तकसमाधिरपि तथा।

खधात्वित्यादि। पूर्ववन्महामुद्रारूपं निष्पाद्य तस्मिन् जिह्वाप्रदेशे लोकानामीश्वरो भूतकोटिस्तत्प्रभावित्वा[त्] धर्मो लोकेश्वरः तन्निर्वर्तक ओंकारो धर्म ओंकारः तं भावयेत्।

त्रिवज्रेत्यादि। त्रिवज्रं त्रिविधो रसः तं समेति गच्छतीति त्रिवज्रसमयो लोकेश्वरः। तस्य ध्यानेन तद्द्वारेण त्रिविधरसानुभावनात् त्रिवज्रामितो महावज्रधरः दशदिग्लोकधातुपर्यायं नवरसानुभवनेन तत्समो भवेत् इत्याह भगवानमितवज्रः।

य एवमालम्बयति, भवेत् स कायादीनाममितायुःसमतेजाः। त्विद्वीन्द्रियादि सर्वसत्त्वानां महायानपथः बुद्धमार्गः। तदर्थ उपायो यस्य स महायानपथोदयो भवेत्।

अमितगुणो महावज्रधरः तस्मिन् त्रैधातुकस्थितसर्वरसानां जिह्वेन्द्रियस्थै-

करसवत् ग्रहणेन प्रभा सा शोभमाना श्रीर्यस्य सोऽमितगुणप्रभाश्रीः लोकेश्वरः। तत्सूचकसमाधिरपि तदाख्यः।

खधात्वित्यादि। पूर्ववदादियोगं कृत्वा समय ओंकारं प्रभावित्वा वज्रोत्पलं प्रभावयेदित्याम्नायः समयः सर्वनिवरणविष्कम्भी तन्निष्पादकं बीजं समय ओंकारः स्पर्शेन्द्रिस्थाने प्रभास्वरशोधनपूर्वकं तत्समय ओंकारं प्रभावित्वा वज्रमेवोत्पलं मुकुलाकारत्वाद् वज्रोत्पलं तं प्रभावयेत्।

त्रिवज्रं त्रिविधं स्पर्शं तत् समेति गच्छतीति त्रिवज्रसमयः। सर्वनिवरणविष्कम्भी। तस्य ध्यानेन त्रिवज्रोऽमोघसिद्धिः अपर्यन्तलोकधातुस्थितानेकस्पर्शानामेकमुद्रापद्मगतस्पर्शवज्रवदनुभवनेन तत्समो भवेत्। इत्याह भगवानमोघवज्रो महावज्रधरः।

अस्यानुशंसाप्रदर्शनं कायेत्यादि। य एवं भावयति स कायादिना वज्रामोघः अमोघसिद्धिः तत्समा प्रभा यस्य स तथोक्तः। ज्ञातं सर्वनिवरणविष्कम्भी तस्योदधिः स्थानममोघसिद्धिः। श्रीः परमानन्दसुखं तदस्यास्तीति श्रीमान् सर्वसत्त्वानामर्थः सर्वसत्त्वार्थः। सर्वसत्त्वार्थजननलक्षणः स संभवति यस्मादिति सर्वसत्त्वसंभवः अमोघसमयोऽमोधसिद्धिः। तस्मात् संभवो यस्य स सर्वनिवरणविष्कम्भी। तस्य रश्मयः तद्विनिर्गतबोधिचित्तविन्दवः। तेषां संभवः प्रसवो यस्मिन् समाधौ युक्तः स तथोक्तः॥

एवं बोधिसत्त्वानां चक्षुरिन्द्रियादिषु न्यासमुक्त्वा तथागतन्यासेनापि निष्पादयेदिति दर्शयन्नाह। खधात्वित्यादि। खधातुस्तथता तन्मध्यादागतं खधातुमध्यगतं उत्पत्तिक्रमेण निष्पन्नं सुप्रभं बुद्धमण्डलं महावज्रधररूपं चिन्तेदात्मानं भावयेत्। तस्य चक्षुःस्थाने वैरोचनवज्रं प्रभावित्वा त्रिकाय ओंकारं प्रभावयेदिति। प्रभावित्वा त्रिकाय ओंकारं वैरोचनवज्रं प्रभावयेदित्यानुपूर्व्या योगः। त्रिकायो वैरोचनः तन्निष्पादक ओंकारः त्रिकाय ओंकारः। तं चक्षुर्गोलके भावयित्वा तत्परावृत्त्या वैरोचनमेव चक्षुरिन्द्रियस्वरूपेण तावत्॥

त्रिवज्रं त्रिविधरूपं चक्षुरिन्द्रियस्वभावेन समेत्यालम्वयतीति त्रिविधवज्रसमयो वैरोचनः। तस्य चक्षुर्भावेन ध्यानेन त्रिवज्रवैरोचनमहावज्रधरः पूर्ववत् तत्समो भवेत्। इत्याह भगवान् वैरोचनमहावज्रः।

कायेत्यादिनानुशंसामाह। एवं भावयति यः साधकः स कायादिवज्रेण वैरोचनसमप्रभः वैरोचनसमानतेजाः ज्ञानस्वरूपेण ज्ञानमूर्तित्वेन संबुध्यते

ज्ञायत इति ज्ञानसंबोधिः त्रिकायभेद्यं महावज्रधरपदं तत् साधयतीति त्रिकायाभेद्यसाधकः स साधको भवेत् ।

कायवाक्चित्ततत्त्वेनालम्ब्यते गृह्यत इति कायवाक्चित्तालम्बनं महावज्रधररूपं तस्य चक्षुरिन्द्रियस्थाने स्थित्वा त्रिविधं रूपं संबुध्यते जानातीति संबोधिः। स एवाप्रतिहतप्रसरत्वाद् वज्रः तन्निष्पादकसमाधिरपि कायवाक्चित्तालम्बनसंबोधिवज्रो नाम । नासन्ध्यम् ।

पर्वतेष्वित्यादिना साधनस्थानमाह । पर्वतेषु फलपुष्पाद्यलङ्कृतेषु गिरिशिखरेषु विविक्तेषु जनसंपातरहितेषु नदीप्रस्रवणेषु उद्यानादिनिकटप्रदेशेषु श्मशानादिष्विति । आदिशब्दादेकवृक्षशून्यागारदेवतालयाद्यन्येष्वपि मनोऽनुकूलेषु इदमनन्तरोक्तं ध्यानसमुच्चयं क्षितिगर्भादिसमाधिवृन्दं कार्यं करणीयम् । नेयार्थः ॥

पर्वतेषु पीनस्तनजघनादिसमन्वितेषु नारीजनेषु विविक्तेषु कन्याजनेषु नदीप्रस्रवणेषु सर्वजनसाधारणेषु वेश्यादिस्त्रीजनेषु श्मशानादिष्विति श्मशानवल्लोकगर्हितेषु चण्डालरजकादिस्त्रीजनेष्विदं ध्यानसमुच्चयं कार्यमिति नीतार्थः ॥

एवं स्थानसम्पदमासाद्य वैरोचनन्यासेन दिव्यचक्षुः साधनमभिधाय तथैवाधिपत्यादिन्यासेन दिव्यश्रोत्रादिसाधनमाह । अक्षोभ्येत्यादि । अक्षोभ्यनिष्पादकं ज्ञानमोंकारवीजं तत्परावृत्त्या संभूतं वज्रमक्षोभ्यः अक्षोभ्यज्ञानवज्रादयोऽक्षोभ्यरत्नसंभवामिताभामोघसिद्धयः तान् । पूर्ववत् । श्रोत्रायतनादिषु प्रभास्वरालम्बनपूर्वकं ध्यात्वा पञ्चाभिज्ञाप्रयोगेण महावज्रधरयोगेन स्थाने क्षितिगर्भादिस्थाने बुद्धाग्रा वैरोचनादयः तेषां भावना कार्या । इत्याह भगवान् । महावज्राः साधकाः तेषां समयवज्रः अभेद्यसमयः तमुपदेष्टुं जानातीति महावज्रसमयः वज्राभिज्ञो महावज्रधरः । यथारुतम् ॥

उत्पत्तिक्रमेण बीजविन्यासपूर्वकं पञ्चाभिज्ञासाधनमुपदिश्य निष्पन्नक्रमेणोपक्षिपन्नाह । पञ्चशूलमित्यादि । पञ्चशूलपञ्चेन्द्रियाणि शूलवद्विषयेषु निमज्जनात् तदेव महावज्रमव्याहतप्रसरत्वात् । पञ्चज्वाला उद्ग्राहादिपञ्चरश्मयः तैर्विभूषितं मण्डितं स्फरणसंहरणनिर्वर्तनात् । पञ्चस्थानं रूपशब्दादिकं तस्मिन् प्रयोगेण प्रसरणेन वज्राभिज्ञो महावज्रधरः तत्समो भवेत् ।

स्वमन्त्रं प्रवेशादिस्वभावमक्षरत्रयम् अनवरतं घटीयन्त्रवत्। अहर्निशं प्रवर्तमानत्वात्। चक्रं स्फुलिङ्गगहनाकुलं पञ्चरश्म्यात्मकपञ्चवज्राणि तेषु प्रयोगेण प्रेरणे वज्राभिज्ञासमो भवेत्।

खवज्रं स्वमहामुद्रारूपं तन्मध्यगतं स्थितं चक्रमिन्द्रियवृन्दं बुद्धा वैरोचनादयः तदुपलक्षितज्वाला सितादिरश्मयः तत्समप्रभं तत्समानवर्णं ध्यात्वा विज्ञाय बुद्धा रूपादयो विषया तेषु प्रवेशेन समायोगेन बुद्धास्त्वत्र पञ्चस्कन्धाः तेषामाश्रयः ज्ञानमूर्तिर्महावज्रधरः तत्समो भवेदिति ॥

निष्पन्नक्रमेणैव समाध्यन्तरमुपक्षिपन्नाह। बुद्धमण्डलमित्यादि। बुध्यत इति बुद्धं किं तत्? ज्ञेयमण्डलं स्वकायम्। त्रैधातुककायमधिमुच्य वैरोचनं न्यसेदिति वैरोचनं कल्पयेत्। ओंकारं हृदये ध्यात्वेति। त्रैधातुकस्वभावकायवज्रहृदये ओंकारज्ञानसत्त्वं ध्यात्वा मन्त्रे ज्ञानसत्त्वे विज्ञानभावना विन्द्वात्मकसमाधिसत्त्वभावना कर्तव्या ॥

एवमभ्यस्यतो योगिनश्चित्तं यदा निरोधमध्यगतं विन्दुभावनामप्यपहाय यदा प्रभास्वरनिष्ठं जायते, तदा स योगी चिन्तामणिवत् अभिलषितार्थप्रपूरकः संभाराद्वयोपेतत्वात्। श्रीमान् सर्वबुद्धाग्रो महावज्रधरस्तं साधयतीति सर्वबुद्धाग्रसाधको भवति।

एवं स्वचित्तं त्रैधातुकचित्तस्वभावं ग्रक्षोभ्यं प्रभावयेत्। ततस्त्रैधातुकसमयसत्त्वहृदये हूंकारं ज्ञानसत्त्वं ध्यात्वा चित्तं विन्दुगतं न्यसेदिति समयसत्त्वहृदयस्थज्ञानसत्त्वाख्यो विन्दुगतं स्वचित्तं स्माधिसत्त्वरूपं न्यसेत्।

स्ववाग्वज्रं तु पूर्ववत् त्रैधातुकवाक्स्वभावं ध्यात्वा तदमिताभं प्रभावयेत्। समयसत्त्वस्य हृदये आःकारं ज्ञानसत्त्वरूपं ध्यात्वा वज्रं स्वचित्तं समाधिसत्त्वगतं न्यसेत् स्थापयेत्।

इदमित्यादिनानन्तरोक्तं समाधित्रयस्यानुशंसामुपसंहरति। समयाग्रमुत्पत्तिक्रमभावनं तस्याग्रं त्रिवज्रं सर्वसत्त्वकायवाक्चित्तं तेन स्वकायवाक्चित्तवज्रस्याभेद्यत्वेन भावनं त्रिवज्राभेद्यत्वेन भावनं निरोधसमयो धारणं तज्ज्ञायते येन तन्निरोधसमयज्ञानं बुद्धा रूपादयस्कन्धाः तेषां सिद्धिः प्राकृतदेहापगमेन औदार्यगाम्भीर्यात्मकज्ञानदेहपरिग्रहः। तत्समावहति प्रापयतीति बुद्धसिद्धिसमावहम् ॥

अमुमेवार्थं प्रकारान्तरेण द्योतयन्नाह। खवज्रेणेत्यादि। खवज्रं

प्रभास्वरं तत्र धार्यत इति खवज्रधातुः त्रैधातुकं तत्रस्थं भावयेत् । स्वच्छमण्डलं कायवज्रं त्रैधातुकं कायवाक्चित्ते ओंकार ज्ञानसत्त्वं ध्यायात् । त्रैधातुकं कायवाक्चित्तोपमर्दनेन ज्ञानकायं भावयेदिति यावत् । एवं ध्यात्वा किमित्याह । कल्पं संतिष्ठतीति सर्वसत्त्वमनोरथस्य कल्पनं संपादनं कल्पः । तस्मिन् तिष्ठति आसंसारं त्रिकायात्मको भूत्वा सकलजगदभिप्रेतार्थसंपादन-समर्थस्तिष्ठतीति यावत् । समाधिद्वयमप्यनेनैव व्याख्यानेन बोध्यव्यम् ।

त्रिवज्रकल्पसमय इति । कायादिवज्रैर्जगदर्थं कल्पयति संपादयतीति त्रिवज्रकल्पसमयो महावज्रधरः । यतः प्रभृतीत्याद्यनुशंसा । इमं द्विविधं योगं प्राप्ताभिषेको गुरुभिरनुज्ञातो यतः प्रभृत्यारभ्य कायवाक्चित्तवज्रिणो महावज्रधरस्य यः पठे[दि]ति यः परेभ्य उपदिशेत्, चिन्तयेदिति स्वयम-भ्यसेत्, स च वज्रधरो भवेत् । न केवलं भावक इत्यभिप्रायः ।

सर्वतथागतमन्त्रा ओंकारादयः । तैर्निष्पन्नसमयो महावज्रधरः । तदेव मन्त्रपरायणानां तत्त्वं विद्या प्रज्ञापारमिता तत्समुत्थितपुरुषो विद्यापुरुषः । स एव ज्ञानसमयत्वादुत्तमः सर्वतथागतमन्त्रसमयतत्त्वं च विद्यापुरुषोत्तमश्च यस्मिन् सर्वतथागतमन्त्रसमयतत्त्वविद्यापुरुषोत्तमः पटलः । सन्ध्याभाषा ।

॥ प्रदीपोद्द्योतनटीकायामेकादपटले षट्कोटिव्याख्या ॥



## ॥ द्वादशः पटलः ॥

एवं कर्मपथविशुद्धि प्रतिपाद्योभयक्रमस्य महामुद्रापरिणामप्रदर्शनाय द्वादशपटलमुपक्षिपन्नाह । अथेत्यादि । भूर्भुवःस्वःशासनात् शास्ता । तस्यैव जनकत्वात् स्रष्टा । ज्ञानाग्रा रत्नपुद्गलाः तान् वज्रोपमसमाधौ प्रतिष्ठापनेन साधयतीति ज्ञानाग्रंसाधकः त्रिवज्रसमयो महावज्रधरः तस्य तत्त्वं परमार्थसत्यं तस्मिन् तद्वाग्वज्रं वक्ष्यमाणलक्षणमुदाहरेत् उदाजहार इति प्राप्ते । खतुल्येत्यादि । खमाकाशं तेन तुल्यं परमार्थसत्यं तेन सममेकं खतुल्यसमयम्, सर्वेषां परमार्थसत्यनिष्ठत्वात् । खतुल्यसमतां भूतेषु गतेषु निर्विकल्पस्वभावो येषां ते निर्विकल्पस्वभाविनः । तेषु निर्विकल्पस्वभाविषु । अतएव स्वभावशुद्धधर्मेषु अयं वक्ष्यमाणो नाटक इव प्रपञ्चो विभाव्यते प्रदर्श्यते । नासन्ध्यम् ।

सर्वसिद्धिसाधनस्थानमाह । महाटवीत्यादि । महाटव्याः प्रदेशेषु प्रकृष्टेषु देशेषु जलाशयादिमनोहरत्वात् । फलपुष्पाद्यलङ्कृते पर्वते विजने अन्यस्मिन्नपि विविक्ते सर्वलौकिकलोकोत्तराः सिद्धयो यस्मिन् समुच्चीयन्ते संग्रहं गच्छन्ति तत् सर्वसिद्धिसमुच्चयं बुद्धत्वं साध्यं साधनीयम् । नेयार्थः ।

आर्षव्याख्यानमाह

> आकाशकल्पनायोगैः स्कन्धमहाटवी मताः ।
> अस्थानस्थितियोगेन प्रदेशे महतालये ॥
> संभोगकल्पवृक्षेऽस्मिन् विविधे सिद्धिपुष्पिते । प/
> निर्माणफलसंशोभे सम्यक्ससंबोधिपर्वते ॥
> निःस्वभावविजने रम्ये साध्यं तद् वज्रसंज्ञकम् ॥

इति नीतार्थः ॥

मं इति वक्ष्यमाणसमाधिसूचकम् बीजम् । कायेत्यादि । मनः स्वभावेन युज्यते सेव्यत इति मञ्जुः । स एवाभेद्यत्वाद् वज्रः । तस्य प्रभावना मञ्जुवज्रप्रभावना कार्या । कुत्र स्वकायवाक्चित्तवज्रेषु न केवलं स्वकायादिषु ततः त्रैधातुककायवाक्चित्तस्फरणमपि ततः मञ्जुवज्रस्य समो भवेदिति ।

योजनानां शतं योजनशतं असंख्येयप्रमाणविस्तारं दीप्तवज्रं स्वकार्ये यया सा दीप्तवज्रा तया प्रभया अनन्तलोकधातुमवभासयत्यालोकं करोति । शुद्धात्मा मायोपमदेहत्वात् । द्वात्रिंशन्महापुरुषलक्षणाद्यलङ्कृतत्वात् सर्वालङ्कारभूषितः ।

तमेवंविधं ज्ञानकायलाभिनं ब्रह्मादयो देवाः कदाचन कदायदापि न पश्यन्ति किं पुनरन्ये, अवैवर्तिकगोचरत्वात् । मञ्जुश्रीवज्राग्रसमयो मञ्जुश्रीमहामुद्रारूपं तस्य पृथग्जनानामदृश्यास्पृश्यत्वेनान्तर्धानकारी नाम समाधिरयम् ॥

इममेव मायामयदेहं प्रभास्वरविशोधनेन साधयितुमाह । विण्मूत्रेत्यादि । विण्मूत्रमिन्द्रियविषयाः तैरन्योन्यमीलनात् पञ्चसमयैः । त्रिवज्राभेद्यं चित्तं तत्संभूतैः इन्द्रियविषयैस्त्रिलोहसहितामाभासत्रयसंयुक्तां मूर्त्तिं कृत्वा संपाद्य मुखे प्रभास्वरे पिण्डग्राहानुभेदाभ्यां प्रवेश्य भावयेत् ।

तत्र प्रभास्वरे सर्वबुद्धानां सर्वतार्किकाणामभेद्यमविषयं चित्तं ज्ञानकार्यं प्रभावयेत् । य एवं भावयति योगी तत्क्षणादेव व्युत्थानलक्षणादेव मञ्जुवज्रसमप्रभो भवेदिति । सन्ध्याभाषा ।

एवं मञ्जुश्रीसमयसमाधिमुपदिश्य चक्रविद्याधरादिसिद्धिमुपक्षिपन्नाह । स्वमन्त्रेणेत्यादि । आदौ वैरोचनसमाधिमामुखीकृत्य स्वमन्त्रेण वैरोचननिष्पादकेन प्रणवेन चक्रमष्टारं श्वेतवर्णं स्फुलिङ्गसुप्रभं स्फुलिङ्गाकृतिरश्मिभिर्मण्डितं पुरतो ध्यात्वा सर्वबुद्धानां तथागतकुलीनानां आलयं स्थानभूतं ध्यात्वेति यावत् धूमायति रुष्मायति प्रज्वलति वा तावदभ्यस्यते गृहीत्वा तिष्ठेत् यः स योगी बुद्धसमो महावज्रधरसदृशो भवेत् ।

एवं सिद्धस्य विद्याधरस्य महिमानमाह षट्त्रिंशदित्यादि । षडधिकानां त्रिंशत्प्रमाणानां सुमेरूणां यावत् संख्याः परमाणवः तावत्प्रमाणा अनुचराः परिवाराः तस्य भवन्ति । कीदृग्विधाः सर्ववज्रधरवदविनश्वरस्वभावाः ।

चक्रं येन समाधिना समेति प्राप्नोति स चक्रसमयनाम समाधिः ॥

स्वमन्त्रेणेत्यादि वैरोचनयोगवद् द्रष्टव्यम् । स्वमन्त्रो हूंकारो मण्डलमाकाशमण्डलं योषितो भविष्यन्तीत्यस्य कामैश्वर्यं दर्शयति महावज्रधरोपमत्वात् महावज्रधरो भवेत् । रुद्रनमस्कृत इत्याधिकवचनेन त्रैधातुकनमस्कृतत्वं सूचयति । रुद्रस्य त्रैधातुकनमस्कृतत्वात् ।

वज्रो महावज्रधरः समतीति समं सह अतन्ति गच्छन्तीति समता डाकिन्यः। वज्रश्च समताश्च सहचर्यः प्रियाः। स च ताश्च यस्मिन् समाधौ स तथोक्तः। एवं धर्मा अमिताभकुलीनाः तेषामालय उत्पत्तिस्थानं वज्रधर्मो लोकेश्वरः तत्समो भवेत्।

षट्त्रिंशत्सुमेरुसंभूताः यावत्प्रमाणाः परमाणवः तावत्संख्यकाः शुद्धात्मा पद्मकुलीना बुद्धा उपायरूपाणि पूजाग्राः प्रज्ञारूपाणि। तेषां मण्डलं समूहः। तस्मिन् स्थापयन्ति सर्वे मन्त्रमुद्रागणाः स्वाधिपतित्वेन साधकमभिषिञ्चन्तीति यावत्।

पद्माः पद्मकुलीनास्तैः समता यस्मिन् समाधावभेदात् स तथोच्यते।

तिष्ठेदित्यादि विभक्तार्थः। त्रिगुह्यं पर्युपासत इति। सर्वबुद्धसंवन्धि-कायवाक्चित्तगुह्यं पर्युपासते अधिगच्छति तदात्मको भवतीति यावत्।

स्वमन्त्रं स्वमन्त्रादिति प्राप्ते। पञ्चरश्मयः अन्यूनाधिकत्वेन समाः यस्यां प्रभायां सा पञ्चरश्मिसमा प्रभा यस्य तं खड्गं पञ्चरश्मिसमप्रभं पाणौ पाणिना गृह्य गृहीत्वा विशालाक्षः साधकः त्रिवज्रा निष्पन्नाः विद्या महामुद्राः तान् तदात्मकत्वेन धारयतीति त्रिवज्रविद्याधरः। त्रैधातुकेषु ये महान्तो मर्हधिकाः तैः पूज्याः दैत्येन्द्राः असुरप्रधाना ब्रह्मेन्द्र[ा] ब्रह्मप्रधानाः तैरपि नमस्कृतश्च भवेत्। त्रिसाहस्रे लोकधातौ एकशूरः तत्राधिपतित्वात् गुह्यधराः सामान्य-साधनस्थाः तेषामुत्तमः प्रधानः कायवाक्चित्तवज्रिणः कायवाक्चित्तवज्री साधकः यदभिलषति यत्प्रार्थयति तादृशीं तत्स्वभावां चित्तवज्रप्रभावितां मनः संकल्पितां सिद्धि लोकिकलोकोत्तरां ददाति प्रयच्छति॥

सर्वतथात्मकः खड्गः सर्वखड्गः अभेदात् समाधिरपि सर्वखड्गो नाम। एवं वज्रचक्रादिसिद्धि निर्दिश्येदानीं वाह्यद्रव्यनिर्वृत्तगुलिकासिद्धिमपनीय मन्त्रेणैव गुलिकासिद्धिनिदर्शनायाह। ओङ्कारमित्यादि। ओङ्कारमेव चण-कास्थिप्रमाणगुलिकां ध्यात्वा मध्ये गुलिकाभ्यन्तरतः स्वदेवताविम्बं ध्यात्वा मुखे शिरोद्वारे प्रवेश्य स्वरूपेण विचिन्त्य विभावयेत् पुनः पुनरभ्यसेदिति।

य एवमभ्यस्यति, स तत्क्षणादेव तदारभ्य बोधिसत्त्वसमप्रभ इति। बोधिः परमार्थसत्यम्, सत्त्वः संवृतिसत्यं तयोरद्वयस्वरूपेण यः स्थितः स बोधिसत्त्वः महावज्रधरः। तस्य समा प्रभा ऋद्धिर्यस्य स बोधिसत्त्वसमप्रभः साधकः संजायते तेजसा दुर्निरीक्ष्यत्वात्। उदितादित्यसंकाशः जाम्बूनद-

समप्रभ इत्यनुशंसा । एवमाकारः स्थित्यात्मकं रक्तवर्णं मुखे कण्ठस्थाने ध्यायात् । बोधिज्ञाने महावज्रधरहूङ्कारमपि गुलिकारूपेण हृत्पुण्डरीकोपरि व्युत्थानात्मकं ध्यायात् ।

इदानीं महामुद्रारूपेणापि सिद्धिमुपक्षिपन्नाह । खधात्वित्यादि । खधातुस्तथता । तत्र स्वच्छं चन्द्रमण्डलं विभाव्य तन्मध्यस्थं वैरोचनमात्मानं तस्य हस्ते चक्रमष्टारं ध्वात्वा विद्याधरो भवेत् ।

एतच्च कथं कुर्यादिति चेत् ? महाचक्रकुलमित्यादि । महाचक्रकुलं वैरोचनकुलं तत् पूर्ववत् ध्वात्वा ज्ञानाग्रस्य वैरोचनस्य ज्ञानवज्रेण साधकेन कायाग्रयोगतः वैरोचनयोगवान् ।

खधात्वित्यादि खधातौ वज्रं सूर्यमण्डलं ध्यात्वा तन्मध्यस्थमद्वयज्ञानात्मकमक्षोभ्यमात्मानं भावयेत् । हस्ते वज्रमित्यादि पूर्ववत् ।

खधातौ रत्नं विभाव्य तन्मध्यस्थं रत्नवज्रं रत्नसंभवमात्मानं भावयेत् । हस्ते रत्नमित्यादि विवृतम् ।

खधातौ धर्माष्टदलपद्मं ध्यात्वा तत्मध्यस्थममितायुषमात्मानं विभाव्य सर्वं पूर्ववत् संपादयेत् ।

खधातौ समयमध्यस्थं विश्ववज्रस्थममोघाग्रमित्यादिः विवृतार्थः ।

एवं चक्रादिचिह्नं साधनमुक्त्वा अन्यदपि क्रोधराजचिह्नं साधयितव्यमिति त्रिशूलादयो गृह्यन्ते। वज्रप्रयोगत इति अक्षोभ्यसमाधिना साध्यः। तस्याक्षोभ्यस्य ध्यानेनैते त्रिशूलादयः सिध्यन्ति साध्यन्ते। कैः कायवाक्चित्तसाधनैरिति। कायवाक्चित्तानि ये प्राकृतभावमपनीय विशिष्टभावेन निष्पादयितुं शक्तास्ते कायवाक्चित्तसाधनाः तैः साध्यन्ते नेतरैरिति महासमयो महायानं तत्र सिद्धिरनन्तरोक्ता तत्प्रकाशको वज्रः महासमयसिद्धिवज्र इत्याहेति प्रकरणोपसंहारः ।

सिद्धिसाधनोपायमाह चतुष्पथेत्यादि । ब्राह्मणादिकुलसंभूतमुद्राचतुष्टयी । अथवा एकवृक्षे एकाकिन्या वा एकलिङ्गे स्वसमानवेशधारणात् शिवालये चण्डालादिवनितासु । एषु यथालब्धस्थानेषु वज्रं ज्ञानत्रयं आकृष्यते साक्षादनुभूयते यो न तद्वज्राकर्षणं समापत्तिलक्षणं तत्साधयेत् विशेषतोऽतिशयेनान्यस्मिन् विषये मन्दप्रचारत्वात् । सन्ध्याभाषा ॥

एवं चाधिगतविशेषेण स्वार्थसम्पत्तिमुपदिश्य विनेयजनचित्तावर्जि-

त्रियोग इत्यादिनाह । त्रियोगमन्त्रपुरुषं त्रिवज्रात्मकमन्त्रपुरुषं त्रियोगवज्रिण-मिति त्रिसत्त्वात्मकं ध्यात्वात्मानं निष्पाद्य आत्मनः कायवाक्चित्तमङ्कुश-स्वभावं ध्यायात् । किमर्थं बुद्धानां रत्नपुद्गलानां ज्ञानबुद्धीनामद्वयज्ञानार्थिना-माकर्षणार्थम् ।

तत्रैव प्रयोगं दर्शयन्नाह वायव्येत्यादि यङ्कारोद्भवं वायुमण्डलं चञ्चल-रूपं ध्यात्वा साध्यं तत्र संस्थाप्य तस्य कायवाक्चित्तेषु आत्मानं कायवाक्चित्त-रश्म्यङ्कं व्यवसज्य शनैः शनैः आत्मसकाशमागत्य वायुमण्डलादवरुह्य लङ्कारोद्भवं माहेन्द्रमण्डले स्थित्वा प्रणतं ध्यायात् । बुद्धाकर्षणमिति यदनन्त-रोक्तविधानं तद् भव्यजनचित्ताकर्षणमुत्तममन्यत्रासाधारणं विधानम् । अनेनैव प्रयोगेण दशदिक्समयव्यवस्थिता योषितो व्याकृष्योपभुञ्जयेत् स्वाज्ञायां नियोजयेत् ।

खधातुसमया देव्यः तासां वज्राकर्षणमभेद्याकर्षणम् ।

वैरोचनेत्यादि । वैरोचनमहाचक्रं वैरोचनचिह्नभूतं चक्रं वैरोचनकुली-नानामुत्पत्तिकारणत्वात् । जिनालयं तदङ्कुशाकारेण ध्यात्वा साध्यहृदये अवसज्य पूर्ववदाकर्षयेत् । अनेनैव क्रमेणावशिष्टैरपि चिह्नैराकर्षणं कुर्यादित्याह वज्रेत्यादि । त्रैधातुकसमया यक्षिण्यादयः । तासामाकर्षणं त्रैधातुकसमया-कर्षणम् । सर्वाकारवरोपेतमिति । वैरोचनाद्याकारपरिघटितं बुद्धबिम्बं महा-वज्रधरमात्मानं विभावयेत् ।

पाणौ तस्य हस्ते कायवाक्चित्तं साध्यं तमङ्कुशादीन् विभावयेदिति । अङ्कुशादिभिरिति ग्राह्यम् । अङ्कुशेनाकृष्य पाशेन बध्वा वायुमण्डलमारोप्य आनीय पाणिना गृहीत्वा मुद्रयेदित्यभिप्रायः ।

अनेन मुद्रणप्रयोगेण साधकः पदं वज्रसत्त्वपदं तस्य कर्म तदनुष्ठेया क्रिया तत् करोतीति पदकर्मकृद् भवेत् ।

सर्वाकारेत्यादिना अनन्तरोक्तमेवार्थं विवृणोति । कायवज्रं स्वकायं यथोक्तलक्षणोपेतं ध्यायात् । तदेतद् वैरोचनीकरणम् ।

जिह्वैव वज्रं जिह्वावज्रं तस्य प्रयोगो मन्त्रजल्पनं तेन वागमिताभः तत्समो भवेदित्यमिताभीकरणम् ।

स्वदेवताहङ्कारवान् हस्तस्थसाध्यं जप्यमन्त्राक्षरार्थं च ध्यात्वा वज्र समो भवेदिति तत्समो भवेदित्यक्षोभ्यकरणम् ।

अनेन प्रकारेण त्रिगुह्यं कायवाक्चित्तं तत्समयं त्रिकायादिस्वभावं यान्तीति त्रिगुह्यसमयावैरोचनादयः तेषां पूजाग्रीं पूजां यथास्वभावपरिज्ञान-लक्षणां पूजां पूज्य कृत्वा प्रसाधयेत् । इदमनन्तरोक्तप्रयोगं संपादयेत् ।

यदनन्तरोक्तं विधानं तत् सर्वबुद्धानां सर्वतथागतसंवन्धिसारं विशिष्ट-भूतं गुह्यं रहस्यं समुच्चीयते आकृष्यते येन तद्विधानं गुह्यसमुच्चयं महागुह्यं देवाद्याकर्षणं समयमलङ्घ्यभूतं यस्य स महागुह्यसमयः महावज्रधर एवमाहेति संगीतिकारः कर्मभेदे मांसाहारप्रदर्शनायाह महामांसेत्यादि । महान्तो मनुष्याः तेषां मांसं मृतकोद्भूतत्वात् समयाग्रं तेन वलिं दत्वा त्रिवज्र-मुत्तमं स्वदेहं साधयेत् रभसा प्रापयेत् । निरवद्यलब्धनरपिशितेन विघ्नोप-शमनार्थं सर्वभूतानां वलिं दत्त्वा खेचरत्वं साधयेदिति । समयाग्रेणेति नरमांसादिकं विन्मूत्रैर्युक्तं समयाग्रं तेन विद्याधरत्वं साधयितुकामो वलिं दद्यात् ।

हस्ती एव समयो मृतकत्वात् । तस्य पिशितेन पञ्चाभिज्ञकामो वलिं-दद्यात् । तथैवाश्वमांसेनान्तर्धानसिद्धिं साधयेत् ।

कर्मभेदे नोक्तमांसलाभे विधिमाह श्वानेत्यादि । श्वानमांसेन निर्दिष्टां सिद्धिं प्रसाधयेदिति ज्ञेयम् । तथैव निरवद्यगोमांसोपहारेण वज्रा दुःसाध्याः राजादयः ।

निरवद्यमांसाभावे विधिमाह उक्तमांसालाभेऽपि पिशितं ध्यात्वा संपा-दयेत् । अथवा पिष्टादिना नरादिमृतकं कृत्वा तत्स्वरूपेण निष्क्रान्तं जीवितं च ध्यात्वा तदवयवेन साधयेदिति । अनेनानन्तरोक्तवज्रयोगेनाभे-द्योपहारविधिना सर्वबुद्धैरधिष्ठ्यते । साधकः अभिप्रेतार्थसिद्धिं प्राप्यते ।

देहपुष्ट्यर्थमाप्यायनविधिमाह । सर्वाकारेत्यादि । कायवाक्चित्तवज्रिणं महावज्रधरमात्मानं ध्यात्वा तदनन्तरं हृत्पद्मस्थितचन्द्रमण्डले ज्ञानसमयं ज्ञानसत्त्वं ध्यात्वा तस्यापि हृदये समाधिसत्त्वं ध्यायात् । मुकुटे उष्णीष-स्थाने वज्राग्रधारिणं महावज्रधरं चन्द्रांशुपुञ्जसन्निभं स्रवत्सुधं सर्वबुद्धानां समयज्ञानसत्त्वाख्यानं प्रीणनं ध्यायात् ।

इदमनन्तरोक्तसर्वसमयनये उत्तमं विशिष्टं समयाग्रेण साधकेन परं सर्वासिद्धिकरं ध्यानं कर्तव्यं करणीयमेव ।

सर्वसमयाः साधकाः तेषां ज्ञानवज्रं बोधिचित्तमाहारः प्रीणनं यस्मिन्

समाधौ स तथा । कुलभेदेनाह जिह्वासमयवज्राग्र इति । समयवज्राः पञ्च-कुलयोगिनः । तेषामग्रमक्षोभ्यकुलम् । तस्मिंस्थितः । जिह्वाहूङ्कारवज्रिणं हूङ्कारपरावृत्तं वज्रं ध्यायात् । किञ्चिदन्नादिकमभ्यवहरन् पञ्चामृतप्रयोगेण पञ्चामृतीकरणेनोपयुज्य त्रिवज्रं कायवाक्चित्तप्रस्रब्धिमाप्नुयात् ।

इदमनन्तरोक्तमाहारकृत्यलक्षणं वज्रनयोत्तमम् । आःकारौङ्कारसमया-दपि कर्तव्यम् । अमिताभयोगिना जिह्वा आःकारपरावृत्तिलक्षणं पद्मं ध्यात्वा वैरोचनयोगिना प्रणवनिर्वृत्तं चक्रं ध्यात्वा कर्तव्यमिति यावत् । अनेनाहार-कृत्ययोगेन कायादिप्रस्रब्धिं लब्धा महावज्रधरतुल्यो भवेत् । लब्ध्वा/

समयवज्रं पञ्चामृतीकरणलक्षणो ध्यानविशेषोऽमृतमालामृतपुञ्जसमय-वज्रेण निष्पादिता अमृतमाला यस्मिन् समाधौ । स तथोच्यते । व्यापारतां योगिक्रियामुखेन लौकिकसिद्धिं निर्दिश्येदानीं निष्पन्नक्रमस्थानां मुद्रासिद्ध्यु-पायं त्रिवज्रेत्यादिनाक्षिपति । त्रिवज्रं कायवाक्चित्तं समेति लीयते यस्मिन् स त्रिवज्रसमयः परमार्थसत्यं तदेव सिद्ध्यग्रं तस्मिन् त्रिकायं धर्मसम्भोग-निर्माणलक्षणं कायत्रयं तद् वज्रं यस्मास्ति स त्रिकायवज्रिणो महावज्रधरो भवेत् जायते । वज्रीति प्राप्ते वज्रिण इत्यार्षम् । एवं निष्पण्णस्य प्रातिहार्य-सन्दर्शनं दशदिगित्यादि दशदिग्व्यवस्थित निष्पन्नसर्वसत्त्वानां चिन्तामणी-नामुदधिश्चिन्तामण्योदधिः तत् प्र[प्तो] भवेत् ।

वज्रात्मा वज्रकायः अवभासयति स्वदेहप्रभ[या] लोकधातुं समन्तत इति दशदिग्लोकधातुं आलोकयति .... तस्या व्याप्तिकथनं चक्रसमयेत्यादि । चक्रसमयो वैरोचनः तत्प्रतिबद्धा सिद्धिश्चक्रसमयसिद्धिः सैवाग्र्या तस्मिन् बुद्धकायसमो भवेत् तत्सदृशो भवेत् ।

एवमक्षोभ्यादिप्रतिबद्धसिद्धिनिमित्तम्, तस्योपलक्षणत्वात् । समन्ततः सिद्ध इति । अनन्तरोक्तसर्वभावेन सिद्धिः सर्वतः दशसु दिक्षु गङ्गानदी-वालुकासमा लोकधातून् विचरेत् । सर्वेष्वित्यादि । सर्वसमयाः डाकडाकिन्यादि-समयाः तेषामग्रास्तेषु विद्या तत्साधनमन्त्रः तं धारयतीति विद्याधरः तेषामपि प्रभुः भवेत् ।

सर्वेत्यादि । अनन्तरोक्तडाकादिसमयसिद्धचग्रे सति कायवज्रप्रभावना सुमहामुद्राप्रभावना । अन्तर्धानेषु सर्वेष्विति वा[क्]क्रियाकायावयवान्तर्धानेषु स्थित्वा त्रिसाहस्रैकावभासकः । त्रिसाहस्रलोकधातूनेकावभासेनावभासयन्नपि

सर्वबुद्धानां सर्वसिद्धीनां संबन्धिनीं विकृतिं हरति गृह्णाति । सुराग्राः शक्रादयः । तेषां कन्यामाकृष्योपभुङ्क्ते अनुभवति ।

गङ्गेत्यादि । गङ्गावालुकाप्रमाणान् जिनान् त्रिवज्रो महावज्रधरः । तस्यालयमनन्तापर्यन्तो लोकधातुः तत्रस्थं स्थितान् चक्षुर्वज्रेण सूक्ष्मविशुद्धिदिव्य-नेत्रेण पश्यते पश्यति । हस्ततलगतमामलकमिव ।।

गङ्गावालुकसमैः क्षेत्रैः क्षेत्रेषु ये शब्दाः उपात्तानुपात्तोभयमहाभूतजाः तान् सर्वान् श्रोत्रे विलगतं शब्दमिव शृणोति । अभिज्ञा ऋद्धिस्तत्र ऋषभः प्रभुः प्रधानः अभिज्ञार्षभः ।

कायवाक्चित्तलक्षणैः कायादिस्वभावैः गङ्गावालुकासमेषु कायवाक्चित्त-लक्षणेषु लोकधातुषु सर्वसत्त्वानां नाटकवन्नानाप्रकारेण स्पन्दमानं चित्ताख्यं षष्ट्युत्तरशतप्रकृतीनां कारणभूतं स वेत्ति ।

संसारस्थितिसंभवमिति । शुभाशुभकर्मवशेनानादिसंसारे पञ्चगति-परिभ्रमणं तत्संभवं पूर्वनिवासे पूर्वजन्मनि समयं कालविशेषं दिनत्रयमिव अतीतदिनत्रयमिव स्मरेत् ।

गङ्गानदीवालुकाप्रमाणैरात्मानः कायैर्बुद्धमेघाद्यलङ्कृतैः वैरोचनादि-पञ्चकुलीनदेवताचक्राद्यलङ्कृतैः गङ्गावालुकोपमेषु कल्पेषु स्थित्वा स्फरेत् निर्मिणोति । ऋद्ध्या अग्रवज्रं प्रभास्वरं बुद्धस्यास्ति सो ऋद्धाग्रवज्रिणः वर्जीति प्राप्ते ।

समयाभिज्ञो महावज्रधरः एवंमाह । वज्रचक्षुरित्यादि । वज्रो महावज्रधरः तस्य चक्षुः प्रभास्वरविशुद्धा दृष्टिः वज्रचक्षुः । एवमन्यत् । अनेन परार्थं प्रति किमित्याह । बुद्धेत्यादि । बुद्धाभिज्ञा दिव्यचक्षुरादयः तैरर्थसिद्धिः सम्यक्परार्थसम्पत् । बुद्धकायसमो भवेदिति । यथा बुद्धकाया अनन्ताः तत्त्वार्थाः क्रियाश्च साप्यनन्ता ।

एवं परार्थसम्पद्युक्तां सिद्धिं कथं विहरतीत्याह । गङ्गेत्यादि । गङ्गावालुकाप्रमाणैः परिवारैरभेद्यचेटादिभिः पूजाप्रसरसहितैः परिवृतः पुरस्कृतः समन्ततो दशदिग्व्यवस्थितेषु लोकधातुषु कायवाक्चित्तो महावज्रधरः विचरेत् विहरतीति फलैकदेशः ।

विजहारपदादारभ्य यथासंभवं सामान्योत्तमसाधनमुपदिश्येदानीमुत्प-त्तिक्रमसाधनाङ्गं पुनः स्पष्टयन्नाह । सेवेत्यादि । सेव्यते आलम्ब्यत इति

सेवा तथता। सैव समयः भूभागादिनां संयोजनं निष्पादनं सेवासमयसंयोगं प्रथममङ्गं शून्यतालम्वनं सूर्याद्यालम्वनमुपसाधनम्। तदेव मन्त्रविन्यासपर्यन्तं संभवतीत्युपसाधनसंभवो द्वितीयं साधनार्थं च समयमिति। साधनोपस्थापनायार्थः अध्येषणं साधनार्थः समयः। स[मे]ति गच्छतीति समयः समाधिसत्त्वो ज्ञान-सत्त्वश्च साधनार्थश्च समयश्च तृतीयम्। अवशिष्टस्य मण्डलराजाग्रीकर्मरा-जाग्रीपर्यन्तस्य महतः परार्थस्य साधनं महासाधनं तच्चतुर्थकम्।

एतदङ्गचतुष्टयं विज्ञाय वज्रभेदेन कुलभेदेन ततस्तदनन्तरं कर्माणि वक्ष्यमाणान्युक्तमिव साधयेदित्युद्देशः। सेवासमाधीत्यादिना उद्दिष्टान्यङ्गानि निर्दिशति। बोधिलिङ्गालम्वनं सेवा। सैव समाधीयते चेतसि स्थाप्यत इति समाधिः। संयोजनं संयोगः। किं तत्? भूभागादेर्मण्डलचक्रं पर्यन्तस्याधिमुक्त्या निष्पादनं सेवा समाधिश्च संयोगश्च सेवासमाधिसंयोगं तत् कृत्वा ओं शून्यतेति मन्त्रार्थप्रचयोदयभूतामुत्तमां गुह्यसंबोधिं तथतालक्षणां भावयेदिति।

सूर्यचन्द्रपद्मानि क्रमेणैवोपर्युपरि व्यवस्थाप्य तदुपरि त्र्यक्षरं विन्यस्य सर्वोपमर्दनेन शशाङ्कमण्डलं तदुपरि पुनस्त्र्यक्षरं तत्परावृत्त्या चिह्नं चिह्नपरा-वृत्त्या महामुद्रारूपनिष्पादनं उपसाधनं उप समीपे साध्यं निष्पाद्यते इति कृत्वा। सिद्धिर्महामुद्रासिद्धिः तस्या अग्रा आदिभूताः प्रणवादयो मन्त्राः यस्मिन् तदुपसाधनसिद्ध्यग्रं विन्यस्तसमस्तमन्त्राक्षरं महामुद्रारूपं यस्मिन् वज्रा वैरोचनादिसप्तपर्यन्ताः तेषामायतनानि रूपस्कन्धादयः तेषां तृतीय-व्यवस्थालिक्रमेण निर्णीय कार्यकारणपरिज्ञानविचारणा साध्यते अधिष्ठानाया-राध्यते येन तत्साधनचोदनं प्रोक्तमिति पर्यायकथनम्॥

किं तत्? बुद्धकायधर इत्यादिगाथाद्वयम्। मन्त्राधिपतिविभावनमिति। मन्त्रा ओंकारादयः समाधिसत्त्वा अधिपतयः ज्ञानसत्त्वाः मन्त्राधिपतीनां कुलभेदेन यथासंभवं ध्यानमन्त्राधिपतिविभावनमिति।

महासाधनेत्यादि। यदुद्दिष्टं महासाधनं तत्सम्पादनकालेषु ज्ञानवज्रिणः स्वाधिदैवतयोगवान् मन्त्री वज्रपद्मसंस्कारपूर्विकां समापत्तिं कृत्वा स्वमन्त्रा वज्रधृगादयः तत्संभूतास्तथागताः स्वमन्त्रवज्रिणः तेषां विम्बं महामुद्राख्यं ध्यात्वा मुकुटेऽधिपतिं ध्यात्वेति पञ्चतथागतानां महामुद्रारूपस्य जटामुकुटमहा-वज्रधरमधिपतिं परिशिष्टे तत्कुलीनानां मुकुटे वैरोचनादीन् ध्यात्वा सिध्यते सिद्धिमाप्नोति। यथारुतम्।

एवं चतुर्योगक्रमेण वज्रसत्त्वसमाराधनं प्रतिपाद्येदानीं षडङ्गक्रमेण महावज्रधरनिष्पत्तिमाह **समाजोत्तरे**

सामान्योत्तमभेदेन सेवा तु द्विविधा भवेत् ।
वज्रचतुष्केण सामान्यमुत्तमं षड्भिरङ्गतः ॥
सेवा ज्ञानामृतेनैव कर्तव्या

इत्यादि ।

सेव्यते मुमुक्षुभिरभ्यस्यत इति सेवा । किं तत् ? परिशुद्धदेवतामूर्तिः । सा ज्ञानामृतेनैव षडङ्गयोगेनैव कर्तव्या निष्पाद्य[ा] सर्वतः सर्वात्मना सदा सर्वकालं सर्वेर्यापथेषु । एवकारोऽवधारणे । एषो हिं ज्ञानामृताख्यः षडङ्गयोगः सर्वमन्त्राणां सर्वतथागतानां मन्त्राः सर्वादयः तत्त्वं देवतातत्त्वं तयोरर्थः फलं युगनद्धसमाधिं तत्साधनान्मन्त्रं तत्त्वार्थसाधकः । हिर्यस्मादर्थे । यस्मादेवं षडङ्गयोगः तस्मात्तेनैव सेवा कार्येति ।

तानि प्रत्याहारादीनि षडङ्गानि निर्दिष्टानि **समाजोत्तरे**

सर्वेषां षडङ्गयोगेन कृत्वा साधनमुत्तमम् ।
साधयेदन्यथा नैव जायते सिद्धिरुत्तमा ॥
प्रत्याहारस्तथाध्यानं प्राणायामश्च धारणा ।
अनुस्मृतिः समाधिश्च षडङ्गो योग उच्यते ॥

इत्युद्देशपदानां निर्देशमाह

दशानामिन्द्रियाणां तु स्ववृत्तिस्थं तु सर्वतः ।
प्रत्याहार इति प्रोक्तः कामाहारं प्रति प्रति ॥
पञ्च कामाः समासेन पञ्चबुद्धप्रयोगतः ।
कल्पनं ध्यानमुच्येत तद्ध्यानं पञ्चधा भवेत् ॥
वितर्कं च विचारं च प्रीतिं चैव सुखं तथा ।
चित्तस्यैकाग्रता चैव पञ्चैते ध्यानसंग्रहाः ॥
गुह्यत्रयं वितर्कश्च विचारं तत्प्रभोगता ।
तृतीयं प्रीतिसंकाशं चतुर्थं सुखसंग्रहम् ॥
स्वचित्तं पञ्चमं ज्ञेयं ज्ञानज्ञेयोदयक्षयः ।
सर्वबुद्धमयं शान्तं सर्वाकाशप्रतिष्ठितम् ॥

पञ्चज्ञानमयं श्वासं पञ्चभूतस्वभावकम् ।
निश्चार्य पद्मनासाग्रे पिण्डरूपेण कल्पयेत् ।।
पञ्चवर्णं महारत्नं प्राणायाम इति स्मृतम् ।
स्वमन्त्रं हृदये ध्यात्वा प्राणं विन्दुगतं न्यसेत् ।।
निरुद्धे स्वेन्द्रिये रत्ने धारयेद् धारणं स्मृतम् ।
निरोधवज्रगते चित्ते निमित्तोद्ग्राह जायते ।।
पञ्चधातुनिमित्तं तु बोधिवज्रेण भावितम् ।
प्रथमं मरीचिकाकारं धूम्राकारं द्वितीयकम् ।
तृतीयं खद्योतकाकारं चतुर्थं दीपवज्जलन् ।।
पञ्चमं तु सदालोकं निरभ्रगगनोपमम् ।
स्थिरं वै वज्रमार्गेण स्फारयेत्तं स्वधातुषु ।।
विभाव्य यदनुस्मृत्त्या तदाकारं तु संस्मरेत् ।
अनुस्मृतिरिति ज्ञेयं प्रतिभासं तत्र जायते ।।
प्रज्ञोपायसमापत्त्या सर्वभावाः समासतः ।
संहृत्य पिण्डयोगेन विम्वमध्ये विभावयेत् ।।
झटिति ज्ञाननिष्पत्तिः समाधिरिति संज्ञितम् । इति ।।

दशानामित्यादि । इन्द्रियाणि इन्द्रियार्थाश्च इन्द्रियाणि तेषां दशानामिन्द्रियाणां विषयविषयिणां स्ववृत्तिः यथास्वं ग्राह्यग्राहकस्वरूपेण प्रवृत्तिः स्ववृत्तिः । तत्र स्थितं स्ववृत्तिस्थम् । सर्वतो हीनमध्योत्तमभेदेन कामाचारं प्रति प्रतीति । काम्यन्ते अभिलष्यन्त इति कामा रूपादयस्तेषामिन्द्रियैर्यदाहरणं ग्रहणं प्रति प्रति पुनः पुनः तत्प्रत्याहार इत्याद्यङ्गस्य प्रतिनिर्देशः ।

प्रत्याहार विशोधनाय द्वितीयमङ्गमाह पञ्चत्यादि । पञ्चकामा रूपादयः इन्द्रियाणि विषयभूताः समासेन इन्द्रियैरेकीभावेन पञ्चबुद्धाः चक्षुरादयः तेषां संयोजनं योजनं पञ्चबुद्धप्रयोगतः । तस्मात् रूपादयोऽपि पञ्च बुद्धा इत्येवंविधं यत् परिशुद्धकल्पनं तद् ध्यानम् । तद् वितर्केत्यादिभेदेन पञ्चविधं भवति । वितर्केत्यादि तद्भेदकथनम् । गुह्यत्रयेत्यादि। इन्द्रियविषयेन्द्रियज्ञानानि गुह्यत्रयम् । पञ्चेन्द्रियाणि इन्द्रियज्ञानानि तद्विषयाश्च पञ्चतथागतात्मका इति । यत् परिकल्पनं स वितर्कः । तस्मिन्नेव विचारणं स्थितिविचारः । एवं विचारयतः तत्त्वप्रवेशाभिमुख्येन यत् सौमनस्यलक्षणं तत्

प्रीतीति संकाशं तत्त्वाभिनिवेशेन कायप्रश्रब्ध्यादिलक्षणं यत् प्राप्तं सुखं तत् सुखसंग्रहम् । एवमभ्यस्यतः प्रकर्षपर्यन्तगमनात् ज्ञानस्य चक्षुरादिषट्प्रवृत्तिर्विज्ञानस्य ज्ञेये रूपादिधर्मधातुपर्यन्ते । उदयो ज्ञानज्ञेयोदयः । तस्य क्षयः । चित्तस्य ग्राह्यग्राहकशून्यत्वपरिज्ञानलक्षणा चित्तैकाग्रता स्वचित्तमित्युक्तम् । तदेवंविधं स्वचित्तं योगिनः। सर्वबुद्धमयं शान्तमिति ग्राह्यादिविकल्पशमनात् । शान्तमाभासमात्रं तत्सर्वशून्यतैकनिष्ठं जायते । पञ्चप्रभेदं द्वितीयमङ्गम् ।

पञ्चेत्यादि। आदर्शादिपञ्चज्ञानस्वभावमधः श्वासं तमेव पृथिव्याद्यात्मकं स्ववज्रविवरान्निःसार्य पद्मनासाग्रे पिण्डरूपेण बोधिचित्तविन्दुरूपेण ध्यायात् । तमेवोच्चप्रवृत्तश्वासं पञ्चवर्णं पञ्चतथागतात्मकमतएव महारत्नं प्राणोज्जीवितम् आयाम्यते दीर्घं विस्तार्यते येनेति स प्राणायाम इति । स्मृतः ज्ञातः । तमेव प्रवेशादिस्वभावेनाहर्निशं जाप्यमानत्वात् । स्वमन्त्रं हृदये स्वहृत्पुण्डरीके ध्यात्वा प्राणं विन्दुगतं समाहृतं न्यसेदिति तृतीयमङ्गम् ।

निरुद्धेत्यादि। स्वं रूपादय इन्द्रियं चक्षुरादयः तस्मिन् स्वेन्द्रिये निरुद्धे विलीने ततो विषयेन्द्रियाधारभूते रत्ने चित्तरत्ने च प्राणायामेन सह निरुद्धेऽस्तं गते यद्धारयेत् तद् धारणम् । किं तत् ? भूतकोटिः । एतद् धारणाख्यं चतुर्थमङ्गम् ।

निरोधवज्रगते चित्ते निमित्तोद्ग्राहो जायते इति । निरोधवज्रं प्रभास्वरं तद्भूते तज्जाते चित्ते निमित्तानामुद्ग्रहः निमित्तप्रतिभासो जायते उत्पद्यते ।

पञ्चधातुनिमित्तं तु बोधिवज्रेण भावितम् ।

इति पृथिव्या अम्भसि लयनान्मरीचिकाकारं प्रतिभासते प्रथमं निमित्तम् । एवमम्भसस्तेजसि लयनात् धूम्राकारं द्वितीयम् । तेजसो वायौ लयनात् खद्योताकारं तृतीयम् । सूक्ष्मधातोराभासत्रयगमनाद् दीपवदालोकपुञ्जस्वभावं चतुर्थम् । प्रकृत्याभासलयनात् निरभ्रं गगनवत् सततालोकं प्रभास्वरमात्रं भवति पञ्चमम् । एतानि पञ्चनिमित्तानि निर्वाणं प्रापयन्ति । यथोक्तं **कर्मान्तविभागे**

> प्राङ्महीं सलिलं गच्छेज्जलं गच्छति पावकम् ।
> पावको वायुमन्वेति वायुर्विज्ञानमाविशेत् ।।
> विज्ञानं धारणां त्वित्थं प्रभास्वरमथाविशेत् ।।

इति ।

स्थिरमित्यादिना वज्रमार्गेण अलङ्घनीयं पञ्चनिमित्तानुपूर्वेण प्रभास्वर-प्रवेशेन स्थिरं विशुद्धं स्वधातुषु लोकधातुषु स्फारयेत् ध्यायेत् धर्मकायरूपेण।

एवमात्मानं प्रभास्वरगतं विभाव्य साक्षात्कृत्वा यत् पूर्वमनुस्मृत्या मरीचिकाद्याकारेण भूतकोटिं प्रापितम्, तदाकारेण तेनैव क्रमेण संस्फरेत् निष्पादयेत् ।

एतदनन्तरोक्तं पञ्चममङ्गमनुस्मृतिरिति ज्ञेयं ज्ञातव्यम् । प्रतिभासं संवित् तत्रानुस्मृत्यङ्गं जायते नान्यत्र ।

प्रज्ञोपायेत्यादि । सर्वभावा स्थावरजङ्गमं प्रज्ञोपायसमापत्त्या संवृत्ति-परमार्थयोगेन स्थितिपिण्डरूपेण महामुद्रारूपेण एकीकृत्य तस्य स्थावरजङ्गमस्य मध्ये युगनद्धात्मकमहावज्रधरविम्बं विभावयेत् जानीयात् ।

अनेन क्रमेण झटिति क्षणेन ज्ञाननिष्पत्तिः ज्ञानदेहनिष्पत्तिः समाधिरिति षष्ठमङ्गं कथ्यते ।

**श्रीमायाजाले**ऽपीममेव देवतानिष्पत्तिभेदमुद्द्योतयन्नाह

योगस्तु त्रिविधो ज्ञेयोऽधिष्ठानः परिकल्पितः ।  
निष्पन्नो चित्तविम्वस्य योगो बुद्धैस्तु वर्णितः ॥  
अधिष्ठानमात्राहंकारयोगोऽधिष्ठान उच्यते ।  
बोधिचित्तविशुद्धिस्तु मन्त्रबीजोदयो महान् ॥  
क्रमनिष्पन्नविम्बस्तु मुद्रा गणैस्तु कल्पितः ।  
तत् कल्पितेति कथितो योगः कल्पित उच्यते ॥  
सर्वाकारवरोपेतः स्फरेत् संहारकारकः ।  
झटिति ज्ञाननिष्पन्नो योगो निष्पन्न उच्यते ॥ इति ।

**वैरोचनाभिसंबोधितन्त्रे**ऽपि द्विविधदेवतायोगं निर्दिशति । देवतारूपमपि गुह्यकाधिपते, द्विविधं परिशुद्धमशुद्धं च । तत्र परिशुद्धमधिगतरूपं सर्व-निमित्तापगतम् । अपरिशुद्धं सर्वनिमित्तं रूपवर्णसंस्थानं च । तत्र द्विविधेन देवतारूपेण द्विविधकार्यनिष्पत्तिर्भवति । सनिमित्तेन सनिमित्ता सिद्धिरुपजायते । अनिमित्तेनानिमित्ता सिद्धिरिष्टा जिनवरैः सदा अनिमित्ते स्थित्वा वै सनिमित्तं प्रसाध्यते । तस्मात् सर्वप्रकारेण निर्निमित्तं निषेध्यत इति ॥ सन्ध्याभाषा ॥

एवं द्विविधदेवतायोगं निर्दिश्येदानीं साधनस्थानमाह महाटवीप्रदेशेष्वि-त्यादि । नेयार्थः ।

आदर्शाख्यमहाटव्या प्रदेशे समताह्वयि ।
प्रत्यवेक्षाख्यविजये विशुद्धगिरिगह्वरे ।।
प्रकृत्यानुष्ठानात्त्रिकुञ्जेषु येष्वेवं प्राप्यते सुखम् ।। नीतार्थः ।।

एवमुभययोगिनां स्थाननिर्देशं कृत्वा तेषामेव संक्षेपतः साधनं निर्देष्टुमाह । अथेत्यादि । नोत्पत्तिक्रमसाधनस्थान् प्रति । वज्रचतुष्कं **समाजोत्तरे** विवेचितम् ।

प्रथमं शून्यता बोधिः द्वितीयं बीजसंहृतः ।
तृतीयं विम्वनिष्पत्तिश्चतुर्थे न्यासमक्षरम् ।।

इति नेयार्थः ।।

उत्तमसाधनस्थानां तु वज्रचतुष्कं शून्यताचतुष्टयं तेन सेवा कार्या । महावज्रधरप्राप्तये प्रयतितव्यम् । दृढव्रतैरुत्तप्तवीर्यैः । त्रिवज्रकायो महावज्रधरः। तेन तुल्यमात्मानम्। एतेनानन्तरोक्तवज्रचतुष्केण भावयत्स्वभाव-परिज्ञानेनाभ्यस्यत्सिद्धिं महामुद्रासिद्धिमश्नुते । नीतार्थः ।।

चतुःसन्ध्येत्यादि । पञ्चस्थानेष्विति । रूपादिविशिष्टपञ्चविषयेषु सन्नि-हितेषु चतुःसन्ध्याश्चतस्त्रो देव्यस्ताभिः प्रयोग आलिङ्गनादिप्रकारेण तदाराधनं तेन चतुःसन्ध्यप्रयोगेण बुद्धिमान् सुरतज्ञः । ओङ्कारं कुलिशाग्रे ध्यात्वा ज्ञानवज्रेण तेन ओङ्काराधिष्ठितस्वकुलिशेन रमित्वा संवरं सत्सुख-मादिशेत् दद्यात् ।

एवमप्यविकलसामग्रीकस्य स्वचित्त[?]मुद्राभिः सह महासुखसमाध्यर्थं घटमानस्यानुशंसां दर्शयन्नाह । दिनानीत्यादि । अधिमात्रेन्द्रियस्य सिद्धि-कालः दिनानि सप्त । मध्येन्द्रियस्य पक्षः पञ्चदशदिनानि । मासं मृद्विन्द्रियस्य । अध्य[र्ध]मासेन । पक्षेणाधिको मासः अध्यर्धमासः । तस्मिन् वा मृद्विन्द्रियः सिध्यति । वज्रं प्रभास्वरं तेन सममेककालमेति निष्पत्तिं गच्छतीति वज्रसमयो महावज्रधरः। तमुत्पाद्य तद्भावेनात्मानं निष्पाद्य लघु क्षिप्रं सिद्धिर्महामुद्रात्मिका अवाप्यते ।

कल्पितसमाधिस्थस्य कालभेदमुक्त्वा तद्वैपरीत्येन उत्तमसाधनस्थानां कालस्यानियमं दर्शयन्नाह । विस्तरेणेत्यादि । आदिकर्मिकानां मया पूर्वं

विस्तरेण प्रपञ्चेन दिनभेदप्रभेदनैः दिनानि सप्तेत्यादिकथनैरुक्तम् । इदानी-मुत्तमसमाधिस्थस्य वक्ष्यत इति पूर्वार्धाभिप्रायः । यथारुतम् ।

पक्षः संवृतिः परमार्थश्च तयोरभ्यन्तरं मध्यम् । किं तत् ? सत्यद्वया-द्वैधीकारेण स्थितिः । ततः पक्षाभ्यन्तरतः सिद्धिः महावज्रधरपदमुक्ता कथिता। कैः गुह्याग्रसम्भवैः गुह्याग्रप्रभास्वरं तत्सम्भवो येषां तैः अध्ववर्तिभिस्तथागतैः ।। सन्ध्याभाषा ।।

अनन्तरोक्तक्रमेण महामुद्रासिद्धौ योगिनः कायाद्यधिष्ठानपूर्विकाप्रवृत्ति-रिति दर्शयन्नाह । तत्रेत्यादि । तत्रेति वाक्यालङ्कारे । साधकस्य कायमुपेत्य प्राप्य साधकं साधयति पात्रीकरोतीत्युपसाधनः कायवज्रः । स एव संव्रियते प्रार्थ्यत इति संवरः । उपसाधनसंवरो वैरोचनः । तस्य विषयं वक्ष्यमाणबुद्धकायधर इत्यादिगाथा ।

बुद्धास्त्र्यध्ववर्तिनस्तथागताः । तेषां कायं तदात्मकतया धारयतीति बुद्धकायधरः । श्रीः लोचना सा यस्य विद्यते स श्रीमान्। त्रिवज्रो महावज्रधरः। तेनाभेद्यत्वेनैकात्म्येन भावितः । मे मम कायेन तदधिष्ठानेन पदं प्रतिष्ठां करोतु कायवज्रिणः वैरोचनः । कायवज्रीति प्राप्ते ।

एवमधिपतिमध्येष्य दशदिगित्यादिना तच्चक्रमध्येषते । तत्रेत्यादिना वागधिष्ठानमवतारयति । वचसि स्थित्वा साधकं साधयति निष्पादयतीति साधनः स एव संव्रियते प्रार्थ्यत इति साधनसंवरोऽमिताभः । तस्य विषयं वक्ष्यमाणगाथा ।

धर्मोऽमिताभः वाक्पथः वाक्स्वभावत्वात् । श्रीः पाण्डरवासिनी । तया युक्तः श्रीमान् । त्रिवज्रेत्यादि पूर्ववत् ।

तत्रेत्यादिना चित्ताधिष्ठानं महच्चित्तं तस्मिन् स्थित्वा साधकं चित्त-वशित्वेन यो भ्रमतीति महासाधनः स एव संवरोऽक्षोभ्यः तद्विषयं गाथा।

वज्रवच्चित्तं वज्रचित्तं संसारनिर्वाणयोरलीनत्वादेवंभूतं चित्तं धारयतीति वज्रचित्तधरोऽक्षोभ्यः मामकी ममायुक्तत्वात् श्रीमान् । शेषं पूर्ववत् ।

एवं कायवाक्चित्ताधिष्ठानपर्यन्तं देवतायोगं विस्तरेण प्रदर्श्य तदवश्य-कर्तव्यतामुखेनोपसंहरन्नाह । बुद्धो वेत्यादि । बुद्धोऽभेदात् वैरोचनयोगी धर्मोऽमिताभयोगी वज्रसत्त्वोऽक्षोभ्ययोगी यदि चेत् मोहात्मा अलब्धोपदेशत्वात्

मोहाक्रान्तः अतिक्रमेत् कायवाक्चित्ताधिष्ठानं पृथक्त्वेन कल्पयेत् स्फुटेति निष्पन्नक्रमाद् दूरीभवति। अत्रास्मिन् मद्वचसि संशयो विमतिर्न कार्या इत्याह महावज्रधरः।

सर्वतथागताः कायवज्रादयः तेषाममेद्यस्वभावश्चतुर्योगो वज्रयोगः सममीयते गम्यत अनेनेति समयः। स एव साध्यस्वरूपत्वात् साधनः निष्पन्न-क्रमावाहकत्वादग्रः निर्देश[:]प्रकाशः पटलः ग्रन्थसन्दर्भः पृथगभिधेयापेक्षया द्वादशः। यथारुतम् ॥

॥ प्रदीपोद्द्योतनटीकायां द्वादशपटले षट्कोटिव्याख्या ॥

---o---

## ।। त्रयोदशपटलः ।।

द्विविधक्रमाभ्यासप्रवृत्तेन साधकेन विनेयजनावर्जनार्थं कर्मप्रसरोऽप्य-नुष्ठेय इति तत्प्रदर्शनार्थं त्रयोदशपटलमुपक्षिपन्नाह। अथेत्यादि। अथ-आसेवादिविद्यानन्तरं कामैश्वर्यादियुक्तत्वाद् भगवन्तः सर्वतथागता अक्षो-भ्यादयः ज्ञानवज्रमद्वयज्ञानं तदेव प्रधानत्वादग्रं तद्धारणाद् ज्ञानवज्राग्र-धारिणः। सर्वसत्त्वानामर्थः प्रयोजनं शान्तिकादि तदर्थसंभूताः उद्यताः के ते ? बोधिसत्त्वाः क्षितिगर्भादयः धीमन्तः मुद्रास्थिताः एवंविधा बुद्ध-बोधिसत्त्वा महाशास्त्रं शास्तारं महावज्रधरं सर्वतथागतमनोर्वातत्वात्, मुनिं लौकिकलोकोत्तरसंप्रदायेष्वव्याहतशक्तित्वात्, सर्वार्थवज्रिणं सत्यद्वयपरिज्ञानात् समयतत्त्वज्ञं बाह्याध्यात्मिकपूजाभिः पूजयित्वा वज्रघोषमुदीरयन् कर्म-प्रसराध्येषणवचनं वज्रघोषमुदीरयन् कृतवन्तः। यथारुतम्।

अहो आश्चर्ये। बुद्धनयः प्रत्याहारादिषडङ्गयोगः वज्रचतुष्कातिक्रमणात् दिव्यम् षडङ्गयोगं प्रपश्य। सत्यद्वयमीलनेनाभिस्तुवन्नाह पुनरहो इति। बोधिषडङ्गयोगः तस्य नयः सत्यद्वयनियोजनं तदेवोत्तमं विशिष्टं सर्व-तथागतवचनार्थसंग्रहणात्। पुनरप्यहो इति। धर्मः सत्यद्वयं तस्य नयः एकीकरणं तच्छान्तं निष्प्रपञ्चम्। पुनप्यहो इत्यादिना स्तुतिमुपसंहरति। मन्त्रास्तथागताः तेषां नयं बोधिप्रापणोपायः। दृढमभेद्यं श्रावकादिभिर-भेद्यत्वात्। सन्ध्याभाषा।

अनुत्पन्नेष्वादिशान्तेषु धर्मेषु स्कन्धादिषु बोधिप्रापकत्वेन स्वभावा-तिशयविशिष्टेषु निर्विकल्पेषु मन्यनारहितेषु अविचारैकरम्यत्वेनास्तित्वात्। भूतेषु सत्सु। एवंभूतेषु धर्मेषु षडङ्गयोगोपायेन ज्ञानोत्पादः वज्रसत्त्वोत्पादः भगवता संप्रगीयते कथ्यते। तदाश्चर्यम्। नासन्ध्यम् ।।

एवं स्तुत्वा भगवन्तमाराध्याभिप्रेतार्थं प्रत्यध्येषयन्नाह। भाषस्वेति। सर्वे मन्त्रा आलिकालितनिभास्ते यस्मिन् समुच्चीयन्ते संग्रहं गच्छन्ति तं वज्रजापसमोपजापं महाज्ञानमनुत्तरज्ञानप्रापकत्वात्, त्रिकायाभेद्यो महा-

वज्रधरः तस्य प्रवेशस्थितिव्युत्थानस्वरूपेण प्रवर्तनस्थानं मण्डलं भाषस्व।

तमेव विशिनष्टि बुद्धज्ञानानि दशमतवैशारद्यादीनि येन त्रिवज्राभेद्यभावनैः साधकैः प्राप्य स्थितं भाषस्वेति योगः। तस्यैव विशेषणं जापवज्रः वज्रजापः तस्य प्रयोगः प्रवेशादिस्वरूपेण परिकल्पनं तेन सर्ववज्रैस्तथागततैरधिष्ठचते स्वीक्रियते।

कुलानामित्यादि। सर्वमन्त्राणां सर्पादीनां कुलानां वृन्दानां कायवाक्चित्तलक्षणं कायादिस्वभावः। मन्त्रजापं वज्रजापं अद्येदानीं प्रघोष कथय। किमर्थं ज्ञानसागराः रत्नपुद्गलाः शृण्वन्तु जानन्तु।

त्र्यध्वसंभूताः प्रवेशस्थितिव्युत्थानात्मका भूत्वा संभूता निष्पन्नाः। के ते? कायवाक्चित्तवज्रिणः.... सर्वे बुद्धाः ज्ञानमतुलमद्वयज्ञानं संप्राप्ताः वज्रमन्त्रप्रभावनैरिति वज्राजापपरिज्ञानैः॥

अथाध्येषणानन्तरम्। खवज्रं परमार्थसत्यं ज्ञानं संवृतिसत्यमुभाभ्यां निष्पन्नत्वात् खवज्रज्ञानसंभवो महावज्रधरः किन्ते (? कर्ते)त्यादिना तमेव विशिनष्टि शान्त्यादिनिष्पादकत्वात् कर्ता। अनधिकृताभिचारकादिकर्मच्छेदनात् स्रष्टा वरा वृक्षादयः तेषामग्राः अर्हत्प्रभृतयः तेषामप्यधिकत्वात् वराग्राग्रो भगवानेव स्ववज्रजापमुदाहरदुक्तवान्।

सर्वमन्त्रेत्यादि। सर्वमन्त्राः सर्पादयः तेषामर्थोऽक्षरत्रयं तस्य जापः प्रवेशादित्रयः तेषु सत्सु त्रिवज्राभेद्यलक्षणं तत्स्वभावं वज्रजापमुदाहरदिति। योगः शृण्वन्नाह त्रिभेदे इत्यादि। त्रिभेदः कायादिभेदः तस्य वज्रपर्यन्तो वज्रधारैकनिष्ठो न्यासः प्रवेशादिस्वरूपेण परिज्ञानं तत् त्रिवज्रमुच्यते ज्ञायते।

तस्य विषयं दर्शयन्नाह। त्रिविधमित्यादि। कायवाक्चित्तानां सन्निधिरूपादानं किं तत्? निर्माणकायग्रहणं तस्मिन् सति त्रिविधं स्फुरणं प्रवेशादिलक्षणं कार्यं निष्पाद्यम्। अस्यानुशंसामाह अनेनानन्तरोक्तेन जापवज्रेण वज्रजापेन त्रिवज्रं कायादिकं तस्य चित्तं कायादिभावेनापृथग्भूतो ज्ञानदेहस्वभावो महावज्रधरः तत्समो भवेत्।

अनुत्तरपूजां दर्शयन्नाह। बुद्धानामित्यादि। कायवाक्चित्तनिर्माणरूपग्रहणं ध्यात्वा निष्पाद्य बुद्धानां दशदिग्लोकधातुस्थितानां पूजाविशेष-

कल्पनं कर्तव्यम् । केन ? ज्ञानवज्रेण निष्पन्नक्रमसमाध्यारूढेन त्रिवज्रेत्याद्यनुशंसा पूर्ववत् ।

वाह्यपूजाभिनिवेशाय नयनायाह पुनर्बुद्धानामित्यादि । पूजाग्रकल्पनं अशेषपूजाव्यूहं ध्यात्वा लोकधातुषु संकल्प्य बुद्धानां कायवाक्चित्तपूजनं कर्तव्यम् । सोत्तरादिपूजाव्यूहस्तथागतकायादिभावेनावगन्तव्यः । ज्ञानवज्रेण इदमीदृग्विधं परिज्ञानं बोधिसमावहं महावज्रधरपदनिष्पादकर्मेत्यनुशंसा ।

एवमधिमात्रेन्द्रियस्य पूजाविधिं संप्रदर्श्य मृद्विन्द्रियस्यापि दर्शयन्नाह । अथवेत्यादि । अथवेति प्रकारान्तरप्रदर्शको निपातः । त्रिभेदेन एकैकमपि देवतानिर्माणं कायभेदेन प्रति प्रति पृथक् पृथक् स्फरणं स्वकायमण्डलादुत्सर्जनं कार्यं करणीयम् । निर्मितमण्डलेषूपलम्भनिरासार्थमाह । कायेत्यादि । कायवाक्चित्तनैरात्म्यं तासां देवतानां कायादिनैःस्वाभाव्यं ज्ञानचित्तेन प्रत्यवेक्षणात्मकेन ज्ञानविशेषेण संस्फरेत् प्रकटीकुर्यात् ।

संपुटीकरणमाह । उच्चार्येत्यादि । वज्रं निर्मितदेवतार्विग्रहं [स्था]नादुच्चार्य स्थानादुत्थाप्य संस्फरेत् स्कन्धादिस्वरूपेणात्मन्यवस्थापयेत् । समाप्तौ स्फुटीकरणक्रियावस्थाने संहारं समाधिसत्त्वप्रवेशमादिशेत् कुर्यात् । इदमनन्तरोक्तं यत् सर्वबुद्धानां सर्वपुद्गलानां ज्ञानोन्मीलितचक्षुषां विवृतज्ञाननेत्राणां कायवज्रो वैरोचनः सोऽभिसंवध्यते निष्पाद्यते येन स कायवज्राभिसंबोधिः ओंकारः तस्य श्रुतिपथगोचरत्वादस्तित्वेन स्वभावरहितत्वनास्तित्वेन परिज्ञानं तद्भावाभावविचारणं चेद् वुद्धकाय इति प्रोक्तं स कायजाप उच्यते ।

वाक्समयोऽमिताभः । तस्याभिसम्वोधिराकारः स शब्द्यते श्रोत्रेन्द्रियेण गृह्यत इति शब्दः तद्विपर्यासादशब्दः श्रोत्रेण गृहीतोऽगृहीत इति यावत् जापः (?) यः परामर्शः शब्दाशब्दविचारणम् तद् वाग्वज्र इति प्रोक्तम्, स वाग्जाप इत्युच्यते ।

चित्तसमयोऽक्षोभ्यः तस्य बोधिः हूङ्कारः तस्य स्थितः वज्रस्वभावः तस्य विचारणं यथाभूतचित्ताचित्तपरामर्शः । चित्तवज्र इति प्रोक्तं स चित्तजाप इत्युच्यते ।

एवं कायवाक्चित्तद्वारेण वज्रजापमुक्त्वा मुख्यं वज्रजापं दर्शयन्नाह । अर्थानुगमेत्यादि । ओंकारादीनामर्थः प्रवेशादि तदनुगमेन तदनुसारेण यः

कृतो जापः स अर्थानुगमजापः तेन हेतुना निःस्वभावेन निर्गतस्वभावेननाहतेन चारुणा निरन्तरं प्रस्फुरद्रूपेण त्र्यध्वत्वादभेद्यः त्रिकाल्यवर्ती तथागतानां निवारणाय विज्ञानं सर्वतथागतानामनाहतरूपेणाधिगमः। स रत्नजाप इत्युच्यते।

पुनर्व्युत्थानं दर्शयन्नाह। स्फरणमित्यादि। बुद्धक्षेत्रात् हृत्पुण्डरीकात् समन्ततः चक्षुराद्यायतयनेषु कायमेघेनानाहतेन गमनागमनवज्रार्थं प्रवेश-स्थित्युत्थानात्मकं स्फरणं यत् तदमोघजाप उच्यते।

एवं मानसजापमुक्त्वा वाग्जापं दर्शयन्नाह। शृणोतीति। मन्त्राः सर्पादयः तेषामक्षरपदं ओंकारादितः स्ववज्रं स्वजिह्वा तेनोद्घृष्टं शब्दितं मण्डलं शरीरं तत् स्ववज्रोद्घृष्टमण्डलं शृणोति स्वयं परो वा। क्रोधानां यमान्तका-दीनां मन्त्राः तेषां समयः उच्चारणाविधिः तत्परिज्ञानेन जापः क्रोधजाप उच्यते।

कामा रूपादयो विषयाः तदर्थं विह्वलीभूतान् तदन्वेषणपरान् सर्व-सत्त्वहितकामाः स्वार्थैकनिष्ठत्वात् तान् सत्त्वान् मोहो वैरोचनः तस्य पदं मोहविशुद्धिः तस्मिन् संस्थाप्य या चिन्ता स मोहजाप इति स्मृतः।

रागः स्त्रीपुरुषाणामन्योन्यस्यासक्तिः संहतत्वाद् वज्रं तदुद्भवान् तदुत्थापितो वाचं वाणीं कायवाक्चित्तसंस्थितां कायादिसौन्दर्यपतितां वाचं श्रुत्वा सर्वान् तान् रागिणः रागोदधिरमिताभः तस्य पदं रागपरिशुद्धिः तस्मिन् स्थापयित्वा या भावना योगिनः स रागजाप इति स्मृतः॥

द्वेषः सत्त्वाभिद्रोहः तदेव वज्रं तदन्तर्गतं चित्तं कायवाक्चित्तसंस्थितं कायादिविषयं ज्ञात्वा सत्त्वान्वेषिणः द्वेषः अक्षोभ्यः तस्यालयं प्रभास्वरं तस्मिन् संस्थाप्य कृतं यत् परिज्ञानं स द्वेषजापः त्रिवज्रसमयो महावज्रधरः तस्य तत्त्वं प्रभास्वरं समयवज्रिणां तथागतानां मध्यं हृदयभूतं तदेव समय-वज्राणां साधकानां नपुंसकजागो निःस्वभावजाप इत्युच्यते। सन्ध्याभाषा॥

वज्रो महावज्रधरः सोऽधिपतिर्येषां ते वज्राधिपतयः ते सर्वे द्विप्रकाराः साधकाः।

न रागो न विरागश्च मध्यमा नोपलभ्यते

इति रागतत्त्वम्। तस्यार्थः। यथाभूतपरिज्ञानं तज्जानन्ति रागतत्त्वार्थसाधकाः।

रागजापं च कामगुणोपभोगजा सर्वसत्त्वहितकारिणीं बोधिं महावज्रधरपदं कुर्वन्ति निष्पादयन्ति ।

रागजां बोधिं न केवलं पुरुषा एव साधयन्ति । किन्तु स्त्रियोऽपीत्याह । लोचनेत्यादि । लोचनाद्याः पद्ममित्यादयः महाविद्यासु शिक्षिता मुद्राः कामरूपादयः तेषामर्थस्तद्विशुद्धिः तत्पराः तद्भावनैकनिष्ठाः यथेच्छतः यथासुखं सेव्यमानैरभ्यस्यमानैः कामभोगैर्विषयैः सिध्यन्ति वज्रधरपदमासादयन्ति । यथारुतम् ॥

मोहसमयसंभूता इत्यादि । मोहसमयो वैरोचनः तत्संभूतास्तत्प्रादुर्भूता विद्याराजान उष्णीषादयः वज्रिणः क्षितिगर्भादयः नपुंसकपदे सिद्धाः नपुंसकपदमोङ्कारः ततो निष्पन्नं उत्तमां सिद्धिं बोधिं ददन्ति प्रयच्छन्ति ।

क्रोधाः यमान्तकादयः द्वेषालयो हूङ्कारः तस्मिन् जाता तस्मिन्निष्पन्नाः मारणतत्पराः दुष्टदमनकर्माणः मारणार्थेन रौद्रकर्मणा सिद्धयन्ति अभिप्रेतार्थं साधयन्त्यग्रधर्मिण अभ्युद्धतस्वभावस्य साधकस्य । नेयार्थं ॥

मोहसमयोऽविद्या ततः संभूताः गृहीतोपादानस्कन्धाः विद्याराजानो वज्रिणः स्त्रीपुरुषाः नपुंसकमविद्या तस्याः पदं प्रभास्वरं तस्मिन् तत्साक्ष्यकरणेन सिद्धा निष्पन्नाः उत्तमां विशिष्टां सिद्धिं महामुद्रासिद्धिं ददन्ति साधकेभ्यः प्रयच्छन्ति ।

क्रोधा उपायप्रकृतयः द्वेषालयः प्रज्ञा तस्मिन् जाताः तदुद्भवा नित्यं सर्वकालं मारणतत्पराः विहेठनात्मिका एवंविधाः प्रकृतयः मारणार्थाः मारगं स्कन्धादीनां निःस्वभावीकरणं तस्यार्थः सत्यद्वयाद्वैधीभावेन । वज्रधरत्वोत्पत्तिः तेन मारणार्थेन स्वधर्मो वज्रोपमसमाधिः स यस्यास्ति तस्याग्रधर्मिणो रत्नपुद्गलस्य सिद्धयन्ते प्रकृतयः वशीभवन्ति ।

महापुरुषसमयो महावज्रधर इत्याहेति संगीतिकारवचनम् । नीतार्थः ॥

पुनरपि भावनान्तरमाह । हृदीत्यादि । ज्ञानवज्रिणः ज्ञानसत्त्वस्य हृदये मध्यगतं हृदयमध्यगतं चक्रं वैरोचनचिह्नम् । कीदृक् ? स्वच्छमण्डलं चन्द्रमण्डलं तन्मध्यस्थं भावयेत् । मध्ये चक्रमध्ये । चक्रार्थभावनेति चक्रेणार्थं साध्यत इति चक्रार्थः साध्यः तस्य भावना कर्तव्या ।

एतदुक्तं भवति वैरोचनयोगवान् स्वकीयज्ञानसत्त्वस्य हृदये चन्द्रमण्डलो-

परि चक्रं विभाव्य साध्यमाकृष्य तस्मिन् प्रवेश्य संस्थाप्य यथावच्छान्तिं कुर्यादिति। एवमक्षोभ्ययोगवान् ज्ञानवज्रिणो ज्ञानसत्त्वस्य हृदये यन्त्र-मण्डलमध्यस्थं सूर्यमण्डलगतं वज्रं विभाव्य तस्मिन् वज्रमन्त्रार्थभावना। वज्रमन्त्रो हूङ्कारः तेनार्थ्यते पीड्यत इति वज्रमन्त्रार्थः साध्यः तस्य भावना कर्तव्या॥

रत्नसंभवयोगवान् रत्नज्ञानिनः ज्ञानसत्त्वस्य हृदये रत्नमण्डलमध्यस्थं रत्नोपरि स्थितं रत्नं विभाव्य तस्मिन् रत्नमन्त्रार्थभावना। रत्नमन्त्रः स्वाकारः तेनार्थ्यते पुष्ण्यते इति रत्नमन्त्रार्थः साध्यः। तस्य भावना सा तथा॥

अमिताभयोगवान् पद्मज्ञानिनः स्वहृद्गतज्ञानसत्त्वस्य हृदये धर्ममण्डल-मध्यस्थं पद्मं विभाव्य तस्मिन् पद्मे मन्त्रार्थभावना पद्ममन्त्रः। आःकारः तेनार्थ्यते वशीक्रियत इति पद्ममन्त्रार्थः साध्यः तस्य भावना कर्तव्या।

अमोघसिद्धियोगवान् खड्गज्ञानिनः स्वज्ञानसत्त्वस्य हृदये समयमण्डल-मध्यस्थं विश्ववज्रोपरिस्थितं खड्गं विभाव्य तस्मिन् खड्गमन्त्रार्थभावना खड्गमन्त्रः हाकारः तेनार्थ्यते सर्वाकारणेन साध्यते इति खड्गमन्त्रार्थः साध्यः तस्य भावना कर्तव्या।

अत्रैव विधानशेषमाह। सर्वमण्डलानि चक्रमण्डलादीनि तेषां पार्श्वेषु चतुर्षु पञ्चबुद्धान् वैरोचनादीन् यथाक्रमेण निवेश्य ध्यायात्। पञ्चरश्मिप्रभेदेन कर्मानुरूपवर्णेन स्फरन् ध्यायात्। ततः किमित्याह। बोधिराकाङ्क्षितफल-सिद्धिरवाप्यते।

इदानीं क्रमभेदेन स्फरणमाह। स्फरणमित्यादि। सर्वमन्त्राणां सर्वसाध-कानां स्फरणं देवतानिर्माणं द्विविधभेदेन निष्पन्नानिष्पन्नभेदेन कीर्तितम्। उत्पत्तिक्रमसमाधि[म्] आह। त्रिकायेत्यादि। कायादिवज्रभेदेन संहार-स्फरणं न्यसेत् देवता स्फरणसंहरणं कुर्यात्।

तदेव स्पष्टयन्नाह। कायस्वभावमित्यादि। कायस्वभावे कायेन विरोचन-स्वरूपेण चित्तमात्मनः चित्तस्वरूपतः अक्षोभ्यस्वभावेन वाचमात्मनो वाक्समूहं वचः स्वरूपेण तत्स्वभावेन पूज्यं ज्ञात्वा पूजामिष्टार्थसंसिद्धिमा-प्नुयात् अधिगच्छेत्॥

महामण्डलानि कायवाक्चित्तमण्डलानि तेषां चक्रं समुदायः तेन महा-

मण्डलचक्रेण पञ्चवज्रो महावज्रधरः तस्य विभावना कर्तव्या। मध्येत्यादि। अनन्तरोक्तस्य कायवज्रिणः समयसत्त्वस्य मध्ये हृदयेऽधिपतिं ज्ञानसत्त्वं स्वविम्बं प्रकृतिविम्बं ध्यात्वा ज्ञानसत्त्वहृदये स्वमन्त्रवज्रस्य समाधिसत्त्वस्य विम्बं मूर्तिं ध्यात्वा। पुनर्मण्डलानां चतुष्टयं वारुणादिमण्डलचतुष्टयं चतुर्वर्णेन सितादिवर्णेन संकल्प्य ध्यात्वा हृदि वारुणादिमण्डलमध्ये मन्त्रा ओङ्कारादयः तेषां प्रवेशादयः तेषां भावना परिज्ञानं कर्तव्यम्।

ध्यानवज्रिणो योगिनः वज्रचतुष्टयं वारूणादिमण्डलचतुष्टयं कर्म शान्तिकादि करोति निष्पादयति। एष हि विधिः सर्वयोगीश्वराणां परमशाश्वतं सर्वतथागताम्नायगतं रहस्यम् आदिकर्मिकाणामसाधारणं तत्त्वम्।

एतदेव वज्रचतुष्टयं कर्मभेदेन निर्दिशन्नाह शान्तिक इत्यादि। शान्तिकेषु ज्वराद्यपहरणलक्षणे कर्मणि लोचनाकारं शुक्लवर्णं शुद्धस्वभावं वारुणमण्डलं ध्यायात्। पौष्टिके अर्थवृद्ध्यादिके वैरोचनपदमिति योगतः तप्तकाञ्चनवत्। विरोचते दीप्यते इति वैरोचनो रत्नकेतुः तस्य पदं पीताभासं द्वन्द्वात् विनिर्गतं माहेन्द्रमण्डलं तथा वश्ये पद्मवज्रिणमिति योगः। वश्ये अनवतीर्णानामनुरक्तिकरणलक्षणे पद्मवज्रिणं रक्तरश्मिस्वभावं दक्षिणद्वाराद् विनिर्गतमग्निमण्डलं ध्यायात्। अभिचारुके मारणादिरौद्रकर्मणि वज्रक्रोधं कृष्णरश्मिस्वभावं वामद्वाराद् विनिर्गतं मण्डलं ध्यायेत्।

इदं तदित्यादि। यदनन्तरोक्तं मण्डलचतुष्टयं तत् सर्ववज्राणां सर्वसाधकानां त्रिकायसंभवं महावज्रधरप्रकाशितं गुह्यं रहस्यं सर्वमन्त्राणां सर्वदेवतानां संवन्धिभूतं क्रियानाटकं शान्तिकादिकर्मकलापः, तेन लक्षितं चिह्नितं गुह्यमिति योगः।

चतुर्णां कर्मणां मध्ये अभिचारस्य दुष्करत्वप्रदर्शनार्थं तद्विवक्षया तस्यैव विषयं दर्शयन्नाह। अभक्तिवादिन इति। अभक्तिरभजनं निन्दारत्नत्रयमधिकृत्य तद्वादिनः सत्त्वा अनास्तिका आचार्यगुरवः वज्रिणः वज्राचार्याः। तेषां निन्दकाश्च। अन्येषामपि पञ्चानन्तर्यादिकारिणामपि दृष्टानामिदं वक्ष्यमाणं प्रचोदनम्। अमुकं मारयेदिति प्रचोदनालक्षणं कर्म कार्यं करणीयम्।

महाज्ञानचक्रवज्रः कुलद्वयात्मको महावज्रधर इत्याह एवभाषत।

त्रैधातुकेत्यादि। त्रैधातुकस्थितान् सत्त्वान् कामरूपारूप्यपर्यापन्नान्

अण्डजादिसत्त्वान् बुद्धकाये बुद्धकायान् तथागतगर्भान् विभावयेत् अधिमुञ्चेत् साधकः रिपूणां साध्यैः सप्तभिः घाटितान् सत्त्वान् कृत्वा ध्यात्वा ततः कर्म समारभेत् इति । अनन्तरोक्तक्रमेणोपचितकिल्विषान् कृत्वा संपुटोद्धाटन-पूर्वकं निगृह्णीयात् ।

खधातुमध्यगतमित्यादि । आदौ तावत् साधकः आत्मानं खधातुमध्यगतं प्रभास्वरप्रविष्टं कृत्वा तदन्तरमात्मानं सूर्यमण्डलाकारेण परिणतं ध्यायात् । तदुपरि दीर्घहूङ्कारेण निष्पन्नं वज्रं पञ्चशूलं करालवज्रं ध्यात्वा तत्परावृत्त्या चतुर्मुखं दंष्ट्राकरालवदनं इन्द्रनीलप्रभं यद्भुजं सर्वाकारवरोपेत इति सर्व-क्रोधाकारविशेषभूतं प्रत्यालीढस्थितं चक्रमध्यस्थं यथोपदेशं वज्रसत्त्वं विभावयेत् ।

त्र्यध्वसमयोऽनन्तरोक्तो वज्रधरः तत्संभूतं बुद्धवज्रं वैरोचनादिदेवता-व्यूहं विभावयेत् । इदमनन्तरोक्तं बुद्धचक्रमहावज्रं वज्रसत्त्वस्य दक्षिणपाणौ दक्षिणपार्श्वे ध्येयमर्थायातत्वात् ।

देवीचक्रं पञ्चकुलात्मकं वामपार्श्वे कार्यमित्याम्नायः । सत्त्वाद्दशदिग्व्य-वस्थितसर्वतथागतान् बुद्धकायप्रभेदतः वैरोचनादिकुलभेदेन संहृत्य पिण्ड-योगेन यथास्वं महामुद्रारूपेणैकीकृत्य तां देवताव्यूहं स्वकाये रूपस्कन्धादि-स्वरूपेण प्रवेशयेत् संपुटयेत् ।

पुनः प्रवेश्यानन्तरं ज्ञानवज्रिणां ज्ञानदेहस्थितानां स्फरणं निष्क्रमणं कार्यं करणीयम् । कीदृशमित्याह । क्रुद्धानित्यादि क्रुद्धादिस्वरूपान् विचिन्त्य स्फरेदिति योगः । क्रुद्धान् मनसा क्रोधाकुलान् कायैरत आह । विकटोत्कट-भीषणानिति । विकटत्वं भ्रूभङ्गरक्तनेत्रदंष्ट्राकरालास्यसमन्वितत्वात् । उत्कटत्वं महाकायत्वात् । भीषणत्वं सर्पमेखलादिभूषितत्वात् ।

नानाप्रहरणहस्ताग्रान् परशुमुद्गरादिव्यग्रहस्तत्वात् । मारणो महा-वज्रधरः तस्याम्नायः आज्ञाविशेषः । तच्चित्तकान् महादुष्टरत्नत्रयाद्युपकार-भूषितान् । घातयन्तस्तर्जयन्तः वज्रसत्त्वमपि स्वयमिति ।

यदि वज्रधरोऽपि एवं दुष्टः स्यात् तमपि हिंसति किं पुनरन्यमिति मायोपमत्वासामर्थ्यं दर्शितम् । कौकृत्यनिरासार्थमाह । बुद्ध इत्यादि । बुद्धो महावज्रधरः धर्मादिकायधरोपदेशदानात् त्रिकायवरदः । त्रिवज्राः सत्त्वाः तेषामालयमण्डलं त्रैधातुकं तदात्मकत्वात् । त्रिवज्रालयमण्डलः । मोहात्मा

प्रमादपरवशत्वात् । मूढ इति मोहात्मा सिद्धिमभिप्रेतार्थं साधकस्य ददाति । अन्यस्मिन् सिद्धिदाने संशयविरतिं न क्रियते ।

इदं रौद्रकर्म सप्तदिवसानि कर्तव्यम् । अन्यथा सप्तदिवसादर्वाग् बुद्धस्यापि न सिध्यति । अत्रायं प्रयोगः । अनन्तरोक्तक्रमेण महावज्रधरमात्मानं निष्पाद्य यथोक्तक्रोधदेवतास्फरणं कृत्वा तन्मध्यस्थितस्तम्भमाज्ञाप्य तेन पाशवद्धगलं अङ्कुशेनाकृष्यमाणं वायुमण्डलोपरिस्थिताग्नेयमण्डले मुक्तकेशं तैलाभ्यक्तदेहं उद्घाटितसंपुटमशरणं संजातकौकृत्यं साध्यं पुरतो विचिन्त्य क्रोधदेवताभिर्नानाप्रहरणैर्भिद्यमानं निष्क्रान्तप्राणं बुद्धक्षेत्रोत्पन्नं विचिन्तयेदिति।

वज्रसमयाः क्रोधाः तेषां ज्ञानमेवं विहेठयतेति योजनं वज्रसमयज्ञानं तदेव [चक्रं] तदाख्यः समाधिरयम् ।

एवमक्षोभ्ययोगिनस्तावदाज्ञाचक्रं संप्रदर्श्य वैरोचनयोगिनोऽपि दर्शयन्नाह । खधात्वित्यादि । यथोक्तक्रमेणात्मानं वैरोचनं निष्पाद्य तदनन्तरं त्र्यध्वसमयसंभूतं वैरोचनपरावृत्ति यं वज्रसत्त्वं महायशं क्रुद्धं विभाव्य तस्य हस्ते वज्रमग्निस्फुलिङ्गाकुलं करालवज्रं ध्यायात् ।

सत्त्वान् दशदिग्व्यवस्थिततथागतान् वज्रकायप्रभेदतः स्त्रीपुरुषभेदेन सम्पन्नान् स्वदेहविनिर्गतरश्मिपुञ्जेन सभाजयित्वा संहृत्याकृष्य स्वकाये तान् तथागतान् प्रवेशयेत् ॥

सर्ववज्राणां स्वदेहस्थितमाण्डलेयानां स्फरणं निश्चारणं कार्यं ज्ञानाग्रवन्धुना साधकेन । ततस्तेषामाज्ञादानक्रमं दर्शयति । शृण्वन्त्वित्यादि । सर्वबुद्धात्मा सर्वतथागतसूनवः कायवाक्चित्तवज्रिणः त्रिवज्रात्मानः शृण्वन्तु ।

किमित्याह । अहमित्यादि । [आज्ञाचक्र]निर्वर्तकः सोऽहम् । अनेन स्वदेहस्थितेनादीप्तवपुषा ज्वालावलीढेन वज्रेण त्रिकायजान् कायत्रयैकसंभूतान् स्फालयामि चूर्णीकरोमि । अतएव लङ्घयेद् यदि समयं यः कश्चिदत्र समाज्ञानं कुर्यात् स शीर्यते विनश्यति । नात्र संशय इति ।

स्वाधिपत्यं प्रकाशयति । वज्रसमयो वैरोचनः । तस्माद् भूतो ज्ञानवज्रः वज्रसत्त्वः तन्नामकोऽयं समाधिः । एवं रत्नसंभवादीनामपि परावृत्तिर्योज्या ।

तत्परिवाराणामप्याह । खवज्रेत्यादि । बुद्धमण्डलवज्रिणमात्मानं खवज्र-

मध्यगतं प्रभास्वरनिविष्टं चिन्तयेत् । तस्मात् खवज्राख्यं स्वात्मानं यमान्तकं समयचक्रं सपरिवारं प्रकल्पयेत् ।

बुद्धान् वैरोचनादीन् बोधिसत्त्वान् मैत्रेयादींश्च त्रिकायमण्डले कायवाक्चित्तेषु प्रविष्टान् प्रकल्पयेत् । पुनस्तु पुनरपि बुद्धान् सौम्यभावस्थितान् यमान्तकाकारसन्निभान् स्फारयेत् ।

सत्त्वान् स्फरितांस्तथागतान् त्र्यध्वसंभूतान् त्रिकायात्मकान् पुनरेवं भावयेत् । रिपूणां रत्नत्रयाद्यपकारप्रवृत्तानां दुष्टचेतसां कुकृत्यकरणोपगतचित्तानां घातकानां भावयेत् । क्रुद्धः इदं वज्रास्तथागतास्तेषामाज्ञा दुष्टघातनं प्रति चोदनं तदेव प्रधानत्वान्मण्डं सारं लाति गृह्णाति स्वीकरोतीति मण्डलम् । कि तत् ? मण्डलाधिपतिरेव ।

सर्वसमयो महावज्रधरः तत्संभवो यमारिस्तेन समानां एकरूपा[णां] त्रिकायवज्राः परिवारक्रोधा यस्मिन् समाधौ स तथा ।

आज्ञाचक्रस्य सर्वदेवतासाधारणत्वं कथयन्नाह । कायेत्यादि । कायवाक्चित्तैः वैरोचनादिभिः पञ्चभिः तद्देवीभिश्च आज्ञाचक्रं प्रयोजनीयम् । स्वमन्त्राः स्वकुल प्रतिवद्धाः मैत्रोयादयः,तेषामर्थो यथावत्सम्पादितमहामुद्रारूपः तस्य गुणः तत्परावृत्तिनिष्पन्नक्रोधरूपेण दुष्टदमनं [स]मय उष्णीष उच्चभागस्थितक्रोधराजः तेन समं समतां यान्तीति उष्णीषसमयाः सर्वक्रोधाः तैरप्याज्ञाचक्रं प्रयोजयेत् ।

आज्ञाचक्रस्य प्रयोजनानन्तरं दर्शयन्नाह । रक्षार्थमित्यादि । सर्वमन्त्राणां इन्द्रादिदिक्कालानां विघ्नकारिणां रक्षार्थं निवारणार्थं ज्ञानाग्रवज्रिणा साधकेन कार्यमिदमाज्ञाचक्रम् । इदं यदनन्तरोक्तं विघ्ननिरसनं किमर्थं क्रियत इत्याह । तत्सर्ववज्राणां सर्वसाधकानां बोधिरक्षार्थं चित्तविक्षेपकारिभ्यः तद्रक्षार्थमित्याज्ञाचक्रस्येव प्रयोजनं दर्शितम् । यथारुतम् ॥

इदानीं निष्पन्नक्रमस्थानामपि दुष्टग्रहोपायमाह । खवज्रेत्यादि । दुष्टस्य निरोधात् दीप्यत इति वैरोचनः साध्यः । तस्य कायाग्रसंभवं त्रिकायसमयं कायवाक्चित्तात्मकं धर्मं खवज्रमध्यगतं शून्यीभूतं ध्यात्वा आसनं साध्यमाधारभूतं प्रकल्पयेत् ।

तमेवाकाशधातुं सर्वबुद्धैः पञ्चरश्मिभिः परिपूर्णं व्याप्यं विभावयेत् ।

आत्मना तु स्वमन्त्राक्षरं वचनं पदं देहं ज्ञानं चित्ताकारं मायोपमं प्रभावयेत् ।

पुनस्तदनन्तरं बुद्धाननन्तरोक्तान् पञ्चरश्मीन् चित्तमात्रे प्रभावितां स्वमहामुद्रां संहरेत् प्रवेशयेत् । एतत् समस्तं चित्तवज्रमिति कृत्वा वज्रज्ञानमपि ज्ञात्वा त्रिकाये स्वकायवाक्चित्ते प्रवेशयेत् । अनेनाभिप्रेतार्थः संपद्यते ।

वज्रः दुर्भेद्यः साध्यः तत्प्रभेदको रत्नमन्त्रः प्रयोगविशेषः तस्य प्रद्योतनकर[ः] प्रकाशकरो नाम समाधिः । सन्ध्याभाषा ।

स्तम्भनप्रयोगमाह । प्रथमं तावदात्मानं मायामयं निष्पाद्य गगनमध्ये स्थापयेत् । बुद्धान् आकाशपवनाग्निजलोर्वीस्वभावानक्षोभ्यादीनि उपर्युपरि अ[ा]नुपूर्व्या स्थापयित्वा जलस्योपरि चङ्क्रमेत् । यथारुतम् ।

निष्पन्नक्रमसमाधिस्थस्य समयादकप्रयोगः सत्यद्वयैकीकरणं तेन ज्ञानमयदेहेन मूर्ध्नि जलपूर्णपादप्रभावनं चंक्रमणं कर्तव्यम् ।

इत्याह भगवान् स्वभावशुद्धः षष्ठः । वज्रा द्विविधयोगिनः तैरुदधौ समुद्रादौ पादाक्रान्तं चंक्रमणं यस्मिन् समाधौ स तथोक्तः । सन्ध्याभाषा ।

मध्ये वदनकुहरे माहेन्द्रं मण्डलं लङ्कारोद्भवं पीतवर्णं वज्रपदाङ्कितं ध्यात्वा तदुपरि क्रोधं दीर्घहूङ्कारजनितं ज्वालावज्रं न्यसेत् । मूर्ध्नि साध्यशिरसि कर्मवज्रं विश्ववज्रं तदेव पदं तदाक्रान्तं तस्मिन् स्थितममृतकुण्डलिं प्रभावयेत् ।

सर्वतीर्थ्याः क्षपणकादयः परप्रवादिनः प्रत्यर्थिकाः तेषां यन्त्रः कायादिस्तम्भनं तस्य संभवो यस्मिन् समाधौ स तथा ।

क्रोधेत्यादि । साधकः स्वयं महावज्रधरः पररूपपरावृत्त्या गृहीतान्यतमक्रोधरूपः त्रिवज्राग्रान् स्वपार्षदा पीतकिञ्जल्कसन्निभान् पद्मराजपिञ्जरां गिरिराजमिव सुमेरुसदृशप्रमाणं चतुरङ्गसेनोपरि ध्यात्वा चिन्तयित्वा प्रभावयेत् सर्वसैन्यं पातालगतं पश्येत् । बुद्धाः स्तम्भनकुशलाः तेषामपि सैन्यं स्तम्भयेत् । किमन्यत् ? अत्र सन्देहो न क्रियते ।

इत्याह भगवान् सर्वतथागतः कायवाक्चित्तसंभवः षष्ठः । सर्वसैन्यं बुद्धसैन्यं तस्य स्तम्भनं यस्मिन् स तथोक्तम् ।

रिपुसंत्रासनेत्यादि । रिपूणां सद्धर्मप्रतिक्षेपकादीनां संत्रासनसमये संत्रासनकाले इदमुच्यमानं ध्यानं प्रकल्पयेत् कुर्वीत । बुद्धोऽप्यादिकर्मिकोऽपि यदि चेदिमं प्रयोगमतिक्रामेत् अभ्यसेत् स्फुटति लोके प्रकाशते । नात्र सन्देहः ।

आहेति प्रयोगसन्दर्शनम् ।

हूङ्कारपरावृत्तिनिष्पन्नं करालवज्रं प्रमाणतः संस्थानतः पञ्चशूलं वज्रकीलकृतमुपरिष्टात् चक्षुराद्यवयवोपेतं नाभेरधस्तादेकसूचिकमृतकुण्डलिरूपं ध्यात्वा-साधकः हृदये साध्यहृदये तेन कीलेनेदं खण्डनं निकृन्तनं प्रकल्पयेत् निष्पादयेत् । नबुद्धास्तन्त्रमन्त्रकुशलाः तेषां सैन्यं वृद्धं क्रुद्धं प्रत्यर्थिभूतं नाशयेदनुशासयेत् । नात्र संशयः ।

रिपुः शत्रुः तस्य मोहः कल्याणाध्याशयेऽपि समतायां प्रवृत्तिः । तस्यापकारो निरसनं यस्मिन् स तथोक्तः समाधिः ।

नार्याद्युपद्रुतानां शान्तिप्रयोगमाह । नगर इत्यादि । नगरे राजधान्यां ग्रामे जनपदैकदेशे विषये च जनपदे प्रयोजयेत् । वक्ष्यमाणकं प्रयोगं कुर्यात् अनेनेत्यादिना प्रयोगसामर्थ्यं दर्शयति । प्रथमं तावत् साधकाः सत्त्वेषु महाकरुणामालम्ब्य नगराद्युपर्यन्तरीक्षगतं तालस्कन्धप्रमाणं महावज्रं पञ्चरश्म्युपेतं भावयेत् । तन्निम्नतो रश्मिनिवहं कल्पोद्दाहमिव युगान्ताग्निमिव सत्त्वानां सर्वकिल्विषदाहकं ध्यात्वा पुनः पश्चात् संहारं तस्मिन् वज्रे सत्त्वानां प्रवेशमादिशेत् कुर्यात् ।

स्फरणं तस्माद् वज्रात् निर्गमनं कार्यमनुष्ठेयम् । कथं रत्नं पद्मरागादि चिन्तामणिः मनोरथमणिः प्रभा स्फटिकमणेरिव स्वच्छो देहवर्णः तै रत्नचिन्तामणिप्रभैः उपलक्षितान् धर्ममेघान् अनन्तरोक्तक्रमेण शोधितदेहान् सत्त्वराशीन् प्रभावयेत् स्वस्थाने निवेशयेत् वै पश्चात् अभिषेकं समादिशेत् ।

अनेन क्रमेण गगनोपरि वैरोचननव्यूहं स्वमुद्रासमापन्नं ध्यात्वा तद्विनिर्गतबोधिचित्तधाराप्रवाहैः सत्त्वानभिषिञ्चेदित्याम्नायः । अनेनानन्तरोक्तेन शान्त्यर्थमुद्दिष्टेन ध्यानवज्रेण दुष्पूरोऽपि प्रपूर्यते पूर्णाङ्गो भवति । स एवं ध्यानफलेन पुष्टकायाश्चिन्तामणिः रत्नसंभवः तस्य श्री [:] सम्पत् स यस्यास्ति स चिन्तामणिश्रीमान् दानवज्र [:] दानातिशयस्तं प्रभावयति प्रकटयतीति

दानवज्रप्रभावकः । तां सत्त्वाधारभूतां पृथिवी वैरोचनानि ता अक्षोभ्यवृन्दः स्वाधिष्ठितां स्फरेत् ध्यायात् ।

तत् किमित्याह । त्रिकल्पासंख्येयमधिकालं तन्नगरादिस्थानं सर्वबुद्धैरधिष्ठयते परिपाल्यते इदमनन्तरोक्तं सर्वबुद्धानामनाविलमविसंवादितं कायगुह्यं कायरक्षणम् ॥

सर्वरोगाः ज्वरादयः । तेषामपनयनं प्रशमनं तदनन्तरं वज्रवत् कायस्य संभवो यस्मिन् तन्नामकः समाधिः ।

ध्यानवज्रेणेत्यादिना आदिकर्मिकाणां कुशलक्रियाङ्गभूतं रक्षाविधानमाह । ध्यानजेन दुष्टकीलेन समादानं चतुःसन्ध्याधिष्ठानं यत्र स्थाने यत्र तत्र मनोऽनुकूलस्थाने समारभेदनेन वक्ष्यमाणेन ध्यानं रक्षाविधानं तत्पूर्वको योगः समाधिः तेन ध्यानयोगेन तिष्ठन् वज्रसत्त्वादियोगमभ्यस्यन् बुद्धैः स्वदेवताभिरधिष्ठयते एकतामापद्यते ।

तद्ध्यानकीलं दर्शयन्नाह । वज्रेत्यादि । वज्रः अमृतमहाराजोऽमृतकुण्डलिस्तं वज्रकीलं नाभेरूर्ध्वं क्रोधरूपमधस्तात् शूलरूपं प्रभावयेत् । दशदिशः पूर्वादयः तासां मण्डलाग्राः अधिपाः लोकपालाः तैः सार्धमन्येषामपि विघ्नानां शिरसि स्फुलिङ्गं ज्वालासन्निभं कीलं निखनेत् आरोपयेत् ।

जगत् साधकादयः तां विकृतिं चित्तविक्षेपादिना नयन्ति प्रापयन्तीति व/ जगद्विनया विघ्नाः तेषां शान्तिर्निरसनं तदेवाभेद्यत्वात् वज्रं तद् यस्मिन् समाधौ स तथा ।

खवज्रमध्यगतं धर्मोदयस्थं उत्तमं शान्तमण्डलं चिन्तेत् ध्यायात् । तस्मिन् ओङ्कारनिष्पन्नं वैरोचनविम्बं यथावद् ध्यात्वा तस्य हृदये अर्थिनः साध्यं न्यसेत् स्थापयेत् ।

तदनन्तरं खधातुं गगनकुहरं लोचना[न्य]ग्रतः येषां ते लोचनाग्रा वैरोचनसमूहाः तैर्लोचनाग्रैर्महासुखसमापन्नैः परिपूर्णं व्याप्तं विभावयेत् । सर्वान् समापत्तिसमापन्नान् संह्यत्यैकीकृत्य तेन रश्मिपिण्डेनामृतौघेनातुरस्य शिरसि पातयित्वा सर्वकिल्विषाणि घातयेत् ।

ततः स्वहृदयादवतार्यातुरं विगतकल्मषं पुरतश्चन्द्रमण्डलेऽवस्थाप्य रोमकूपाग्रविवरैः स्वकुलिशविवरात् बुद्धमेघान् प्राग्रश्मिरूपेण स्वमूर्ध्नि विवरेण प्रविष्टान् स्फरेत् निश्चारयेद् व्रती । कथम् ? तैर्वैरोचनव्यूहः

पुनर्गगनकुहरमावृणोति छादयतीति निरुक्त्या व्रत इत्युक्तः । तदा तस्मिन् काले तस्य पुरो निषण्णस्याभिषेकं पूर्ववत् । स्वमुद्रासमापन्ना बुद्धमेघा बोधिचित्तधाराभिरभिषेकं ददन्ति ।

अनेन ध्यानविशेषेण सं सुखम् अयः अतिक्रान्तः । समयो दुःखसमूहः अभेद्यो दुस्तरः समयः दुःखसमूहो यस्मिन् स वज्रसमयः । आतुरः क्षणादचिरात् श्रीमान् कल्याङ्गः पुष्टशरीरश्च भवति जायते ॥

बुद्धसमयो मेघाः वैरोचनलोचनासमूहाः तेषां व्यूहः समापत्तिर्यस्मिन् समाधौ तन्नामकः ।

खवज्रेत्यादिना समाधिद्वयं वचनेन लेशतो दर्शयति । धर्मोदयान्तस्थमाहेन्द्रमण्डलं ध्यायात् । रत्नसंभवनिष्पत्तये विम्वं धर्मधरं ध्यात्वेति वचनात् । अमिताभनिष्पत्तये अग्निमण्डलं ध्यायात् । हृदये रत्नसंभवामिताभहृदये अर्थिनं यथासंभवं साध्यद्वयं न्यसेत् । खधातुभवनं रम्यं पाण्डराख्यैः प्रपूरयेत् । इत्यमिताभसमाधिमपेक्ष्य वचनम् । रत्नसंभवसमाधौ तु मामकीव्यूहैः पीतवर्णैरित्युक्तम् । रत्नं सुवर्णं चिन्तामणिः पद्मरागः तयोः प्रभा रत्नचिन्तामणिप्रभा तं रश्मिमण्डलेन रश्मिसारप्रभावेन संहरेदेकीकुर्यात् ।

इदं संहृतं बोधिचित्तद्वयं अर्थिना साध्यस्य कायवाक्चित्तनिलये देहे निपातयेत् । पूर्ववत् । रोमकूपाग्रविवरात् रत्नसंभवमेघान् स्फरेत् व्रती अमिताभयोगी ।

धर्ममेघान् भावयेत् स्फरेत् । अभिषेकं समादिशेदिति पूर्वनिषण्णस्य रत्नमेघैर्धर्ममेघैश्चाभिषेकं कारयेत् । अनेनानन्तरोक्तेन ध्यानप्रपञ्चेन दुष्पूरोऽपि प्रपूर्यत इति पुष्टचर्थं वचनम् । स हीत्यादिरस्यार्थः । स हि साध्यः साधकस्याभिलषितार्थप्रदानात् चिन्तामणिप्रख्यः राजैश्वर्यादिसमन्वितत्वात् । श्रीमान् दानवज्रमविच्छिन्नदानं तत्प्रभासयति द्योतयतीति दानवज्रप्रभासकः ।

धर्मोऽमिताभः तस्य मेघः समूहः तेषां व्यूहः समापत्तिः स यस्मिन् समाधौ स तथा ॥

रत्नमेघेत्याद्यप्यतो निष्कृष्य खधातुमध्यगतमिति गतार्थम् । वज्राङ्कितचन्द्रार्धं वायव्यमण्डलं ध्यात्वा तस्मिन् खवज्रः अक्षोभ्यः धर्मः अमिताभः स अग्रे पुरस्ताद् यस्य स धर्माग्रोऽमोघसिद्धिः विम्वखवज्रधर्माग्रमक्षोभ्या-

मोघसिद्धिमहामुद्रां ध्यात्वा तयोरमोघसिद्धिहृदये अर्थिनं सर्वजनवश्यता-कामं न्यसेत् ।

बुद्धैर्वैरोचनादिभिः बोधिसत्त्वैश्च मैत्रेयादिभिश्च स्वकुलमुद्रासहितैश्च काम-मण्डलं परिपूर्णं ध्यायात् । पञ्चतथागतवर्णभेदेन तेजः पञ्चाकारबोधिचित्तधारां तत्र साध्ये निपातयेत् ।

स एवंविधः साध्यः तत्क्षणादेवाचिरादेव सर्वतथागतमनोज्ञो भवति । मञ्जुश्रीतुल्यः सदृशः सम्यक् काशते दीप्यत इति संकाशः पदं राज्यादिकम् । तत्र कर्मकृत् व्यापारकृत् । स साध्यो भवति । पूर्ववत् ।

पुरस्तात् निषण्णस्य प्रकृष्टात्मनः आत्तमनस्काः पञ्चकुलबुद्धबोधिसत्त्वा अभिषेकमहोत्सवं प्रयच्छन्ति । ततः किमित्याह । वशमानयतीति सर्वजगदुदित उदय प्राप्तो दर्शनेनैव दृष्टिमात्रेण वशीकरोति ।

रत्नसमयन्तीति रत्नसमयाः राजामात्याः तेषां मेवाः समूहाः तैः कृतो व्यूहः सैवार्थमार्गस्य पर्युपासनं यस्मिन् तन्नामकः समाधिः ।

खवज्रधर्माग्रमित्यत्र यः स्थापितोऽक्षोभ्यः समाधिः तस्य कर्मशेषमाह खवज्रेत्यादि । अक्षोभ्ययोगवान् खवज्रं गगनकुहरं राक्षसैर्यक्षादिभिः क्रूरैः परवधोत्सैवैः प्रचण्डैः अप्रतिहतपराक्रमैः क्रोधदारुणैः क्रोधवशगैः शृगालैः जम्बुकादिभिः विविधैः पिशितासनैः सत्त्वैः काकैः गृध्रैः श्वानैः पूर्णं प्रभावयेत् ।

ततः आग्नेयमण्डलस्थं रिपुं शत्रुं उद्घाटितसंपुटं भावयेत् । सर्वबुद्धानां सर्वसत्त्वानां सोपकारीति ध्यात्वा योगमिमं प्रयोजयेत् ॥

साध्यस्यान्त्रादिकं सर्वं राक्षसादिभिराकृष्टं गृहीत्वा भक्षितं प्रभावयेत् । पुनः नानाप्रहरणधरैराक्रान्तं खण्डशश्छिद्यमानं भावयेत् ।

ततः बुद्धो बुद्धयानी वज्रधरः आदिकर्मिकः यद्यनेन प्रयोगेण प्रभाव्यते चिन्त्यते पक्षाभ्यन्तरं पक्षादर्वाक् पूर्णेन पक्षेण वा म्रियते नश्यति । नात्र संशयः॥

वज्रमेघोऽक्षोभ्यः तस्य समया राक्षसादयः तेषां व्यूहो विजृम्भितं यस्मिन् समाधौ स तन्नामकः समाधिः ।

पुनरप्युक्तानामेव देवतानां मुखभुजवर्णप्रहरणव्यवस्थामाह । त्रिमुखे-त्यादिना वैरोचनभावमाह । कमुदकं तस्याण्डमभ्रं शरदि काण्डं शरत्काण्डं तत्समप्रभं ध्यायात् । सितं कृष्णं महारक्तं मुखत्रयं धारयन्तं तत्र सितं

मध्यमुखं कृष्णं दक्षिणं महारक्तं कुसुम्भपुष्पं तद्वर्णं वाममुखं जटामकुटमण्डित-मिति वैरोचनस्य मुखवर्णनियमः ।

तद्वद् वज्रिणं अक्षोभ्यं कृष्णरक्तसिताननं ध्यायात् । लोकधातुसमाकुलं स्वच्छमण्डलचक्रपरिवृतं एवं रागिणममिताभं त्रिमुखं जटामकुटभूषितम् । एवं देवतात्रयं भावयेत् । ध्रुवमुक्तकर्मसु सिध्यते।

एषां वैरोचनादीनां दक्षिणमूलकरे वज्रचक्रपद्मानि भावयेत् । वज्रं मुद्रारूपं षड्भुजं भावयेत् । नानाप्रहरणमिति साधनोक्तक्रमेण यथास्वचिह्न-धरम् । शुभमिष्टार्थसंपादनात् । एवं रत्नसंभवादीनामपि मूलस्वचिह्नं भाव्यम् ।

लोचनां वैरोचनमुद्रां वैरोचनवत् त्रिमुखां चिन्तेत् । सर्वसत्त्वहितैषिणीं सर्वसत्त्वशान्तिकारिणीम् ।

खवज्रः अक्षोभ्यः तं नयत्यात्मसमीपमिति खवज्रनेत्रीं मामकीं महा-राज्ञीमग्रमहिषीं त्रिमुखां अक्षोभ्यवत् विभावयेत् ।

वाग्वज्रोऽमिताभः तं नयतीति वाग्वज्रनेत्रीं पाण्डरवासिनीममिताभवत् ध्यायात् । वज्राङ्कितमुत्पलं तद्धारयतीति वज्रोत्पलधरां विद्याममोघसिद्धि-मुद्रां तारां मुखादिना अमोघसिद्धिवत् ध्यायात् ।

यमान्तकमित्यारभ्य यावद् ध्यानमण्डलमिति सुगमम् । ध्यानमण्डलमा-ज्ञाचक्रम् ।

तेजोराशिः जयोष्णीषादयः क्रोधाः ये चान्ये मन्त्रचक्रिणः मैत्रेयादयः। एभिः समये कुले संभुज्यन्त इति समयसंभोगाः वज्रादिचिह्नानि तैर्भावनीयाः प्रति प्रति पृथक् पृथक् ।

मन्त्राणां देवतानां समाधीनि । अमृतान्यप्रमाणानि समुदाहृताः कथिताः।

अतएवैकैकस्य तु क्रोधस्य यमान्तकादीनामेकैकस्य तु चेटचेटीभूतभूक्त्या-दिप्रकारेण समाधयः । तत ऊर्ध्वं आकाशधातुरप्यधिकतरा भवतीति समाधे-रसंख्येयता कथिता ।

इदानीं निष्पन्नदेवतानिष्पत्तिं दर्शयन्नाह खधात्वित्यादि । खधातुः प्रभास्वरः तद्वद्भूतं स्वच्छमण्डलमाभासत्रयं उत्तमं चन्द्रवज्राद्यनपेक्षत्वात् । तेन बुद्धविम्वं महावज्रधररूपं प्रभावित्वा निष्पाद्य ततो वैरोचनं प्रभावयेत् स्फरेत् ।

कथम् ? स्वच्छं चन्द्रनिभं नीहारादिदोषरहितत्वात्, शशिविम्बोपमं शान्तं सौम्यरसोपेतं नानारश्मिसमप्रभं पञ्चरश्मिकृतप्रभामण्डलं आदर्शो दर्पणः तत्संभूतं तद्गतं त्रिधातुकास्यमण्डनं त्रैधातुकं मण्डनमिव महापुरुषलक्षणोपेतत्वात्। सर्वालङ्काररचितं एवमात्मानं ध्यात्वा ज्ञात्वा वोधिमप्रतिष्ठितनिर्वाणं स पश्यति लभते।

अनेन ध्यानवज्रप्रभावनैरिति योगः। बुद्धमाहात्म्यं बुद्धैश्वर्यं सर्वलोकवशङ्करं श्रावकाद्यवनतिकरं इहैव जन्मनि अस्मिन्नेव देहे स्थित्वा प्राप्यते ॥

वैरोचनस्य निष्पन्नक्रमेण संभवो यस्मिन् समाधौ स तथा।

खधात्वित्यादि। वज्रमण्डलमाभासत्रयं वुद्धविम्वमित्यादि पूर्ववत्।

स्वच्छकायः षष्ठः तत्तुल्यः ईषदस्त्रान्वितत्वात् क्रूरम्। शान्तं वज्रत्वं वुद्धत्वं लघु क्षिप्रं प्राप्नुयात्।

सर्वसमया माण्डलेयाः ते संभवन्ति यस्मिन् सर्वसमयसंभवः चारुवज्रोऽक्षोभ्यः यस्मिन् समाधौ स तथोक्तः।

खवज्रेत्यादि। धर्ममण्डलमाभासत्रयम्। वुद्धविम्वमित्यादि पूर्ववत्। त्रिकायाभेद्यो महावज्रधरः। तत्संभवं तदुद्भूतं धर्ममाहात्म्यं वागीश्वरत्वं प्राप्यते लभते। ज्ञानोदधिविभूषणं निष्पन्नक्रमसमाधिस्थः।

धर्मसत्त्वोऽमिताभः स संभवति यस्मा[त्] सद्धर्मसत्त्वसमुद्भवो महावज्रधरः। तस्य समयसंभवः परिनिष्पन्नक्रमं तदेव वज्रं यस्मिन् समाधौ स तथा।

खधात्वित्यादि। चन्द्रोपलक्षितं मण्डलमाभासत्रयम्। बुद्धविम्वमित्यादि। पूर्ववत्। पाणौ दक्षिणप्रधानकरे रत्नं चक्रं रत्नं त्रैधातुकवशङ्करं तस्य स्वभावकथनम्। सर्वशुद्धिकरं ज्ञानमिति। चक्रस्य स्वसाधकजनस्य चिन्तामणिप्रभं चिन्तामणिप्रख्यम्।

लोचनासमयः लोचना महामुद्रा तस्या हस्ताग्रं हस्तसारं चक्रं तद् यस्यां समाधौ विद्यते सा तथा।

खवज्रेत्यादि। चन्द्रमण्डलमिति शून्यतात्रयम्। बुद्धविम्वमिति पूर्ववत्। खवज्राग्री मामकी। खं अक्षोभ्यः तस्य समयाग्री भार्या। तस्या दक्षिणकरे रक्तानुविद्धनीलोत्पलम्। त्रैधातुकेत्यादि तस्यैव विशेषणम्। सिद्धिवज्रिणां साधकानां रहस्यभूतम्।

खं प्रभास्वरः सा भा प्रभवो यस्या सा खमाता अक्षोभ्यः । रत्नरश्मिमेघा रत्नरश्मिसमूहः स वज्रस्वभावो यस्य रत्नरश्मिर्मेघवज्रो रत्नकेतुः तयोः ह्लादनं मामकी यस्मिन् समाधौ स तन्नामकः ।

खवज्रेत्यादि । धर्ममण्डलं ज्ञानत्रयं बुद्धबिम्बमित्यादि पूर्ववत् । मायया लक्ष्यत इति मायालक्ष्यः प्रभास्वरं तदेव प्रधानत्वादग्रम् । तस्मात् संभूतां मायालक्ष्याग्रसंभूताम् । नागरक्तधरोऽमिताभः तस्य प्रियामिष्टाम् । तस्य तत्त्वं परमार्थतत्त्वं तदेवाभिसंबोधिः तस्य दर्शनवज्रं पाण्डरवासिनी यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि । सिद्धिमण्डलं प्रज्ञोपायोपलब्धकम् । बुद्धबिम्बमित्यादि पूर्ववत् ।

समयोऽमोघसिद्धिः । तारा तस्य भार्याग्रा प्रधानगुणोपेता सा यस्मिन् समाधौ स तथा ।

इदानीं क्रोधसमाधिमाह । खवज्रेत्यादि । सूर्यमण्डलोपलक्षितमालोका-भासादिकं बुद्धबिम्बमित्यादि पूर्ववत् । भयस्य मण्डं सारः तान् लातीति भयमण्डलम् दक्षिणप्रधानकरेण गृहीतखड्गं तस्य मकुटे वैरोचनस्थितिं ध्यात्वा तुष्यन्ति नन्दन्ति वज्रिणः साधकः सर्वेषामनापकारिप्रभृतयः (?)। ते क्रोधा येषां सर्वक्रोधानां ज्ञानवज्रिणां साधकानां समयः अलक्षणीयो मार्गः । यमान्तकः स्फरणः महावज्रधरः तेन विश्राम्यते निष्पाद्यत इति ।

यमान्तकस्फरणावभासो यमान्तकः तस्य व्यूहः चिन्ता यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि पूर्ववत् । अपराजितवज्रव्यूहो निष्पत्तिः यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि पूर्ववत् । हयः हयग्रीवः । तस्योत्पत्तिव्यूह उत्पत्तिरचना यस्मिन् समाधौ स तथा ॥

खवज्रेत्यादि पूर्ववत् । अमृतमयः अमृतकुण्डलिः वज्रमुत्पत्तिविशेषो यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि पूर्ववत् । ध्यानवज्रसंबोधिरक्षोभ्यः तस्मिन् रतिः शिव-साधकत्वेन यस्मिन् समाधौ स तथा ॥

खवज्रेत्यादि पूर्ववत् । त्रिवज्रालयः प्रभास्वरः । स एव मण्डं लातीति

गृह्णातीति वज्रालयमण्डलः । त्रिविधानि वज्रनेत्राणि यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि पूर्ववत् । कृष्णोदधिः क्रोधसमुद्रः तस्य प्रहरणं दण्डवज्र-स्वभावो यस्य तं दण्डवज्रिणम् । वज्राङ्कितो दण्डः दण्डवज्रः समयाग्रः अलङ्घनीयत्वात् । स यस्यां सा वज्रदण्डसमयाग्रवती तन्नामकः समाधिः ।

खवज्रमाभासत्रयम् । तस्य धातुः प्रभास्वरं तदेव पदमाक्रान्तं यस्मिन् समाधौ स तथा ।

खवज्रेत्यादि । विद्या लौकिकसिद्धयः । तासां चक्रं समूहं यस्य तद्विद्या-चक्रं प्रभावयेत् । वज्रज्वालापरिवृतं चक्ररश्म्यालिङ्गितदेहम् । उष्णीषाः गगनचराः तेषां चक्रं समूहः । तेन समागम्यते पूज्यत इति उष्णीषचक्रसमयः । विद्याधरसमयः तेन युक्तं चलचक्रं यस्मिन् समाधौ स तथा ।। यथारुतम् ।।

खधातावित्यादि । मेघवर्णं शरीरं यस्य स मेघवज्री । वज्रसुम्भः प्रभाव्यते निष्पाद्यते यस्मिन् समाधौ स तथा ।

एवं द्विविधक्रमेण समाधिद्वयं निर्दिश्य तथैवोपसंहरन्नाह निरोध इत्यादि । निरोधो मरणादिकं क्रोधचक्रेन यमान्तकादिसमाधिना क्रियते, केन ? बुद्ध-चक्रनिषेविना । देवताचक्र आलम्वकेन । तदपि कथं कर्तव्यमित्याह समाधी-त्यादि । तथतालम्वनपूर्वकं चन्द्रमण्डलालम्वनं वज्रं तदुपरि वीजविन्यासपूर्वं वज्राद्यालम्वनम् । तत्परावृत्त्या महावज्रधरादिदेवतालम्वनमित्येतानि समाधि-वज्रज्ञानानि सिध्यन्ति फलन्ति । वज्रमण्डलात् आज्ञाचक्रालम्वनात् । नेयार्थः ।

बुद्धा वैरोचनादयः तेषां चक्रं समूहः । बुद्धचक्रमिति कल्पनां निषेवितुं स्वभावो येषां ते बुद्धचक्रनिषेविनो रूपस्कन्धादयः । तेषां निरोधः परमार्थ-सत्यानुप्रवेशः । क्रोधाः प्राकृतदेहावैमुख्यं तदेव चक्रमायुधं यस्य सः । क्रोध-चक्रनिष्पन्नक्रमसमाधिस्थः । तेन कायव्युत्थानदर्शनं समाधिवज्रज्ञानानीति समाध्यात्मिकानि वज्रज्ञानानि वज्रमण्डलात् परमार्थमण्डलात् व्युत्थितस्य सिध्यन्ति । नीतार्थः ।

वज्राः तथागताः समयालोचनादयः व्यूहाः क्रोधाः तेषां निष्पत्त्यर्थं तत्त्वार्थभावना परमार्थसत्यालम्वनं तत्पूर्वकं संबोधिर्महामुद्रानिष्पत्तिः । तत्प्रतिपादको ग्रन्थसमूहः ।।

।। प्रदीपोद्द्योतनटीकायां त्रयोदशपटले षट्कोटिव्याख्या ।।

—०—

## ॥ चतुर्दशः पटलः ॥

इदानीं चतुर्विधमन्त्रवादानुसारेण शान्तिकादिकर्मप्रसरोऽनुष्ठेय इति दर्शनाय चतुर्दशपटल उपक्षिप्यते। तत्र तावत् कर्मप्रसरानुपूर्वी **व्याख्यातन्त्रादवतार्यते**।

शान्तिकं पौष्टिकं चैव शुक्लपक्षे तु कारयेत्।
वश्याभिचारकर्मादि कृष्णपक्षे समारभेत्॥
उत्तराभिमुखः शान्ति पौष्टिकं प्राङमुखस्तथा।
याम्यां तु रौद्रकर्माणि वश्याकर्षणं पश्चिमे॥
आग्नेय्यां मारणं चैवमैशान्यां द्वेषणक्रियाम्।
वायव्यां स्थानचलनमैशान्यां स्तम्भनं भवेत्॥
शान्तिके शुक्लवर्णं तु पीतवर्णं तु पौष्टिके।
वश्याकर्षणयो रक्तं कृष्णवर्णं तु मारणे॥
शान्तिकं मैत्रचित्तेन हर्षचित्तेन पौष्टिकम्।
रागचित्तेन वश्यं तु क्रोधचित्तेन मारणम्॥
प्रदोषे शान्तिकं कुर्यात् प्रत्यूषे पौष्टिकं तथा।
वश्याभिचारुकं कर्म मध्याह्ने चार्धरात्रिके॥

निष्पन्नक्रमसंस्थस्तु मध्याह्नवेलामाश्रित्य शान्तिकादि कर्म कुर्यादिति विशेषः। यथोक्तं भगवता **व्याख्यातन्त्रे**। वज्रपाणिराह। अध्यात्मिका वेला इति भगवन् किमुच्यते ?

भगवानाह। अध्यात्मिका वेला नाम वज्रपाणे, महागुह्यातिगुह्यमिति सूक्ष्मं बोधिचित्ताधिष्ठितम्।

ज्ञानं मोक्षाय सत्त्वानां मन्त्राणां सिद्धिसाधने।
शान्तिपौष्टिककार्ये च तथा वश्याभिचारुके॥
अग्राह्यो भगवान् शान्तः चित्तधातुस्तथागतः॥

यथा पुष्पे भवेद् गन्धः तथा सत्त्वहृदि स्थितः ।
विहरेदर्धयामिकां वेलां परिपाट्या यथाक्रमम् ॥
अग्निवायव्यमाहेन्द्रवारुणे प्रतिमण्डले ।
रक्तां कृष्णां तथा पीतां सितां चैव समासतः ॥ इति ॥

अनेनैतदुक्तं भवति । वारुणमण्डलं हृत्पद्मस्थम् । तस्योदयकाले श्वेतवर्णो रश्मि विनिर्गत्यार्धयामं तिष्ठति । तदा महाशान्ति कुर्या[त्] । माहेन्द्रमण्डलं गुदपद्मस्थम् । तस्योदये पीतवर्णरश्मि विनिर्गत्यार्धयामं तिष्ठति । तदा पौष्टिकं कुर्यात् । अग्निमण्डलं कण्ठपद्मस्थम् । तस्योदये रक्तरश्मि निर्गत्यार्धयामं तिष्ठति । तदा वश्याकर्षणं कुर्यात् । वायव्यमण्डलं नाभिपद्मस्थम् । तस्योदये कृष्णश्यामवर्णरश्मि विनिर्गत्यार्धयामं तिष्ठति । तदा रौद्रकर्म कुर्यात् ।

इदानीं पटलोऽवतार्यते ॥ अथेत्यादि । सर्वतथागता अक्षोभ्यादयः । समयाः देव्यः । तेषामधिपतिर्महावज्रधरः । शान्तिः ज्वराद्युपशमनम् । तां समेतीति शान्तिसमयः । स एव विशिष्टत्वादयः । तन्नामकं समाधिमवस्थाविशेषं समापद्य गत्वा सर्वतथागताः साधकास्तैर्भार्यां धारयितव्यां धारणीं स्वकायवाक्चित्तवज्रेभ्यः समुदितेभ्यः निश्चारयामास आविश्चकार । ओमित्यादिको मन्त्रः सर्पसंज्ञकः । उक्तं च **वज्रोष्णीषे**

ओंकारसंयुक्तश्चादावन्ते स्वाहाभिसंयुतः ।
शान्तिकर्मणि सर्वोयं विज्ञेयो मन्त्रवादिभिः ॥

मन्त्रसंज्ञानिर्दिष्टो मन्त्रार्थो वक्तव्यः । तद्यथा । आकारोकारानुस्वाराणां त्रिवज्रात्मकत्वात् ओमिति पुण्यादाने । रुरु इति मन्त्रदेवतालयं रुशब्दः स्फुरु उद्योतय । स्फुर स्फुरणे । ज्वल अत्यर्थं तेजस्विनी भव । समाशामापूर्य तिष्ठ । सिद्धमप्रतिहतं लोचनं चक्षुर्यस्याः सा सिद्धलोचना । इदमामन्त्रणम् । हे सर्वार्थसाधनि स्वाहेति शान्त्युद्दीपकं बीजम् । अत्र शान्त्युद्दीपनार्थं मन्त्रविदर्भणं कर्तव्यम् । कथम् ? स्वाहापूर्वममुकस्य शान्तिं कुरुष्वेति । अत्र मन्त्राक्षराणि पुष्पगन्धादयश्च श्वेतवर्णा एव ध्यातव्या ।

अस्यां धारण्यां गीतमात्रायामुदीरितमात्रायां सत्यां सर्वसम्पन्मनीषिणः सर्वसत्त्वा आरोग्यकामा बुद्धवज्रं वैरोचनमनुस्मरन्तः सन्तुष्टाः आत्तमनस्का हर्षचित्तैकाग्रतामापेदे प्रपेदिरे प्राप्नुवन्ति स्म ।

बुद्धाः साधकाः संमताः तेषां शान्तिजननी । केवलं शान्तिजननी चोदन-वर्णाशयभेदाश्च सर्वकर्मप्रसाधनी मृतसमुत्थापनात् मृतसंजीवनीति । मन्त्र-सामर्थ्यमाह । वज्रसमयो वैरोचनः । तं चोदयतीति वज्रसमयचोदनी धारणी इत्याह च महावज्रधर इति संगीतिकारवचनम् ।

अथेत्यादि भगवान् महावज्रधरः । त्रिकायः त्रैधातुकः । तं समेत्यनुयातीति त्रिकायसमयक्रोधः । स एव वज्रमभेद्यं यस्य त्रिकायसमयक्रोधवज्रो भगवान् । भावा विघ्नाः तेषामभावो भावाभावः । तस्य समयः अनतिक्रमणं तदेव वज्रं यस्मिन् तन्नामकं समाधिं समापद्यालम्ब्य सर्वदुष्टप्रणाशको वज्रधरः सर्ववज्रधरः तस्याग्रमहिषीं अग्रमहिषीमिव सर्वधारणीनां प्रधान-भूतां स्वकायवाक्चित्तवज्रेभ्यो निश्चारयामास ।

ओमित्यादि सर्पः । ओं उक्तार्थम् । शङ्करे शान्तिकरे । घुट्टिनीत्यामन्त्र-णम् । घुट्टि घातय प्रेरणम् । शम उपशमे दुष्टोपशमाच्छङ्करा । दुष्टोपशम-नानन्तरं शान्तिकरा घुट्ट दुष्टान् नाशय । घुट्टि प्रतिघाते । घुट्टिनी दुष्टप्रणा-शनि अत्यन्तप्रेरणाद् द्विरुक्तिः । घातय नाशय । हन हिंसायाम् । अत्र स्वाहापूर्वकममुकं रक्ष रक्षेति विदर्भयेत् ।

अथास्यामित्यादि । त्रिवज्राः सर्वसत्त्वाः तैरभिन्नं वज्रं शरीरं येषां ते त्रिवज्राभेद्यवज्रिणः साधकाः हर्षविकसितनयनेन्दीवराः वज्रचित्तमक्षोभ्यमनु-स्मरन् ध्यायन्ति स्म ।

रक्षा मार्यादिभ्यः सैव वज्रमभेद्यत्वात् । तस्य प्रयोगेषु रक्षाप्रधानेषु नित्यं सदा । त्रिकायसिद्धिकरी । अपि च महावज्रभयं विघ्नविनायकभयं तेनार्तानां पीडितानां नित्यं वलकरी विघ्नपराजयवलकरी स्मृता । धारणी । रत्नकुलीनानामपीयमेव धारणी । उभयकुलसाधारणत्वान्मामक्याः ।

अथेत्यादि । भगवान् महावज्रधरः महारागसमयोऽमिताभः । स येन समाधिना अवलोक्य वशीक्रियते तन्महारागसमयावलोकनं नाम समाधिं समापद्यामुखीकृत्य धर्मसमयकायाः पद्मकुलीना देव्यः तासां मध्ये अग्रभार्यां विशेषेण धारयितव्यां धारणीं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत् ।

ओमित्यादि । कटे अतितीक्ष्णपोषणोकढ(?)कृच्छ्रजीवने विकटे विशेषेण जीवने । निकटे साधकासन्ने कटंकटे अत्यर्थं जीवने । अत्र स्वाहाकार-पूर्वकममुकस्य पुष्टिं कुरु वौषडिति मन्त्रविदर्भणम् ।

अथेत्यादि । वज्रधर्माग्रचारिणः पद्मकुलाधिमोक्षकः वज्रधर्ममनुस्मरन् अभिताभमालम्वयन्तः ध्यानं चित्तैकाग्रतां समापेदे प्राप्नुवन्ति स्म । महा-धनधान्यवृद्धिकरी । धर्मो दानादिकः पुष्टिः कायपुष्टिः । वलं क्रियोत्साहः । एतत्सर्वं करोति जापमात्रेण पठितमात्रेण । किं पुनः साधितेति ? वाग्वज्रस्य वचनं यथाभिप्रेतसिद्धिमावहति, तथा साधकस्यापीति ।

अथेत्यादि । भगवान् वज्रधरः समन्तसमयोऽमोघसिद्धिः संभवति येन तन्नामकं समाधिं समापद्य इमां समयोऽमोघसिद्धिः तस्य सत्त्वाः अमोघ-कुलीना देवता तासां मध्येऽग्रभार्यां विशेषेण धारयितव्यां धारणीं स्वकाय-वाक्चित्तवज्रेभ्यो निश्चारयेत् ।

ओं गतार्थः । दुःखार्णवात् तारयतीति तारा । व्यथां त्रायत इति तुत्तारा । तुदव्यथने । त्रैट् पालने । शीघ्रकरणे त्वरा । तुर त्वरणे । एतत् पदत्रय-मामन्त्रणे । स्वाहापूर्वकममुकं वशमानय निर्गच्छेदिति मन्त्रविदर्भणं कार्यम् ।

अथेत्यादि । सर्वबुद्धोऽमोघसिद्धिः तदात्मजाः तदविमुक्ताः हर्षिताः सन्तुष्टमनस्काः वज्रकायममोघसिद्धिमनुस्मरन् ध्यायन्तः ज्ञानं चित्तैकाग्रता मापेदे प्राप्तवन्तः ।

बुद्धाः प्रधानपुरुषाः वज्राः कठिनहृदयाः महासैन्या राजानः सत्त्वधातुं सामान्यालोकं समन्ततः सर्वाकारेण दासवत् वशीकरोति । सर्वानुक्तान् साध्यावश्यत्वेन निश्चेष्टान् परमवशान् तत्क्षणात् सद्यः करोति । इत्याह भगवानिति संगीतिकारवचनम् ।

अथेत्यादि । भगवानित्यादिना । महावज्रधरमाह । विमलरश्मिः शुक्लरश्मिः तत्समूहो विमलरश्मिमेघः स वज्रवत् अभेद्यो यस्मिन् विमल-रश्मिमेघवज्रो वैरोचनः । भेदान् तन्निष्पादकं समाधिरपि तथोच्यते । तं समापद्येमं वज्रयमान्तकाख्यं वज्रक्रोधं मन्त्रात्मकं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत् ।

नमः समन्तकायवाक्चित्तवज्राणामिति मन्त्रोच्चारणकाले मन्त्रिभि-रुच्चारयितव्यम् । ओमित्यादिको मन्त्रः । ख ख खाहि खाहि यमान्तकस्य दुष्टभक्षणां प्रति प्रेरणं सर्वदुष्टसत्त्वदमक असिमुसलपरशुपाशहस्त चतुर्भुज चतुर्मुख षट्चरण [आ]गच्छागच्छ सर्वदुष्टप्राणापहारिणे महाविघ्नघातक विकृतानन सर्वभूतभयंकर अट्टाट्टहासनादिने व्याघ्रचर्मनिवसन् इत्यामन्त्रणम् ।

कुरु कुरु सर्वकर्माणि छिन्द छिन्द सर्वमन्त्रान् भिन्द भिन्द परमुद्राम् । आकर्ष-[य]ाकर्ष[य] सर्वभूतानि मथ मथ निर्मथ निर्मथ सर्वदुष्टान् । प्रवेशय प्रवेशय मण्डलमध्य इति प्रेरणम् । वैवस्वतजीवितान्तकरेति । वैवस्वतो यमः । तस्य जीवितविनाशं करोतीति वैवस्वतजीवितान्तकर मम सर्वकार्यं कुरु कुरु साधय साधय दह दह सर्वपापान् भस्मीकुरु । पच पच सर्वपापान् । मा विलम्ब विलम्ब मा कालक्षयं कुरु । समयो वज्रसत्त्वाज्ञातमनुस्मर । हूँ हूँ तर्जय विघ्नान् फट् फट् भेदय विघ्नान् स्फोटय स्फोटय विदारय विघ्नान् सर्वान् नाशय रिपून् कर कर, विघ्नान् छित्वा दशदिशि विकर । सर्वाशा-परिपूरक हे हे भगवन् इत्यामन्त्रणम् । किं चिरायसि ? किमर्थं विलम्बसे[१] ? मम सर्वार्थान् सर्वकार्याणि साधय निष्पादय । स्वाहापूर्वममुकमाकर्षय ह्रीरिति मन्त्रविदर्भणम् ।

अथास्मिन् मन्त्रराजे भाषितमात्रे सर्वबुद्धाः साधनत्वेन दम्यत्वेन ज्ञातत्वात् । बुद्धाः शक्रादयो लोकपालाः महायशाः भीताः भ्रान्ताः संत्रस्तमनसो व्याकुलचित्ता वज्रचित्तं महावज्रधरमनुस्मरन् शरणं गताः । वैरोचनयोगवान् निर्व्रणं स्त्रीकपालं चारुरूपं मनीषिणं मनोह्लादनकरमादाय तत्पृष्ठेऽलक्तकरसेन स्त्रीप्रतिकृतिमालिख्य हृत्प्रदेशे नामाक्षराणि विन्यसेत् । पादाक्रान्तगतं यमान्तकेन वामपादेन सूर्यमण्डलोपरि हूंकारोद्भूतवज्राङ्कुशाधिष्ठितेन तद्हृदि आलीढपदस्थेनाक्रम्य तेनाङ्कुशेन हृदि विध्वाभिप्रेतां स्त्रियमाकृष्यमाणां विचिन्त्य मन्त्रमेतदनुस्मरेत् क्रुद्ध उच्चारयेत् ।

ततः किमित्याह । लोचनामित्यादि । लोचनां ब्राह्मणकन्यां मामकीं क्षत्रियकन्यां महावज्रा राजामात्याः तेषां कुलोच्चयां कुलस्त्रियम् । त्रीन् वारान् त्रिसन्ध्यं नालामन्त्रं यथाशक्त्यावर्त्य क्षणात् सप्ताहाद् ध्रुवमाकृष्यते । पिण्डमाकर्षयति । पुरुषमाकर्षयितुकामः पुरुषकपालेऽनन्तरोक्तविधिना पुरुष-प्रतिकृतिमालिख्य प्रत्यालीढपदेनाक्रम्याकर्षयेदिति विशेषः ।

इत्याह भगवान् चित्तवज्रो महावज्रधरः ॥

अथेत्यादि । वैरोचनस्तथागतः । महावज्रधरः समयोऽमोघसिद्धिः तस्य रश्मयः मरकतवर्णाः प्रभाः तैर्गमनं व्याप्तं महामुद्रारूपं समाधिरप्य-

---

१. विलम्बसेत् MS,

भेदात् । तथा तं समापद्य अमृतसमयोऽमोघसिद्धिः तत्संभवक्रोधवज्रात्मकं क्रोधस्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत् ।

नमः समन्तेत्यादि विवृतार्थः । ओमित्यादिको मन्त्रः । अमृतकुण्डलीत्याम-मन्त्रणं ख ख खाहि खाहि तिष्ठ तिष्ठ वन्ध वन्ध हन हन दह दह गर्ज गर्ज विस्फोटय विस्फोटय सर्वविघ्नविनायकान् महावज्रक्रोध महादंष्ट्रोत्कट भैरवाय असिमुसलपरशुपाशहस्ताय महागणपतिजीवितान्तकरायेति पाठो गृह्यते । स्वाहापूर्वममुकमुच्चाटय हूंमिति मन्त्रविदर्भणम् ।

अथेत्यादि । गतार्थः । वज्रकायोऽमोघसिद्धिः । तं ध्यायन्ति स्म ।

सर्वमन्त्रा उच्चाटनाधिकृता मन्त्राः तेषां प्रयोगेषु सत्स्वपि वज्र[ा]ः दुःखसाध्याः तेषामुच्चाटनकर्मणि कर्तव्ये विधिना कल्पोक्तेन बुद्धाः कर्म-प्रसरकुशलाः तेषां सैन्यं समूहः स्वयममोघसिद्धियोगवानुच्चाटयेत् स्थानाद् भ्रंशयेत् । अनेन क्रमेण राजिकालवनं तैलं विषं धत्तूररसं तर्जनिकारुधिरमेकी-कृत्य तेन श्मशानकर्पटे वायव्यमण्डलमर्धचन्द्राकृतिमुभयपार्श्वे वज्राङ्कित-मालिख्य तन्मध्ये साध्यनामाक्षरं विदर्भ्याविाहनपूर्वकं तमाक्रम्य पूर्ववत् श्मशाने निखनेत् नियतमुच्चाटयेदिति[1]।

अथेत्यादि । भगवान् रत्नं तत्त्वरत्नं केतुर्ध्वजो यस्य रत्नकेतुर्महावज्र-धरः तथागतः बुद्धरश्मिरत्नसंभवः स एवाभेद्यत्वाद् वज्रं तन्निष्पादकोऽपि समाधिरभेदात् । तन्नामकः तं समापद्यामुखीकृत्य वज्रापराजितं महाक्रोधं मन्त्रात्मकं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत् ।

नम इत्यादि गतार्थः । ओमित्यादि क्रोधमन्त्रः । तस्यायमर्थः । ओं उक्तार्थः । हूं तर्जने जिन अजप्यः आमन्त्रणे रिटिटेति विघ्नान् चूर्णय हूँ-फडिति गतार्थः । स्वाहापूर्वकममुकं राक्षसादिभ्यो विमोचय ह्रीरिति विदर्भणम् ।

अथेत्यादि । बुद्धाः साधकेन निषेध्यत्वेनाभिमतत्वात् । बुद्धाः वीर्यो-पेतत्वात् । महात्मजाः भीताः सन्त्रस्तमनसो बोधिचित्तं रत्नसंभवमनुस्मरन् ध्यायन्ति स्म ।

राक्षसाः पिशिताशनाः व्यालाः सिंहादयः क्रूराः प्रत्यर्थिकाः । एतेषु पीड़केषु महाभयसमाकुले अग्निसर्पादिभयसमाकुले स्थाने विधिवत् कल्पोक्त-

---

१. °मुच्चदियति MS

विधिना कर्म रक्षाकर्म करोति कुर्यात् । चित्तवज्रः महावज्रधरः तेन प्रयुज्यते प्रेर्यते इति चित्तवज्रप्रयोजितो रत्नसंभवः रत्नसंभवसमाधिमालम्ब्यापराजित-माज्ञापयेत्याभिप्रायः ।

अत्रायं विधिः । रत्नसंभवयोगवान् करतलद्वये दीर्घहूँकारपरावृत्त्या सूर्य-मण्डलद्वयं ध्यात्वा राक्षसादिग्रस्तसाध्यदेहानुपराजितमाज्ञाप्य राक्षसादिक-माकृष्य द्विसूर्यमध्यगतं ध्यात्वा सूर्यरश्मिभिर्दग्ध्वा भस्मीकुर्वन् मन्त्रमुच्चार-येत् । स्वस्थो भवति ।

अथेत्यादि । अमितायुनिष्पादकत्वात् अमितायुर्महावज्रधरः अमितः अमिताभः स संभवति यस्मिन् समाधौ तम् अमितसंभववज्रं नाम समाधि-मालम्ब्य पद्मोऽमिताभः तत्संभवो हयग्रीवः तन्महाक्रोधं मन्त्रात्मकं स्वकाय-वाक्चित्तवज्रेभ्यो निश्चारयेत् ।

नम इत्यादि विभक्तार्थः । ओमित्यादिको मन्त्रः । दुष्टसत्त्वानां काय-वाक्चित्ततर्जनात् । त्रिहूँ सर्वोपसर्गतरणं तरु तं लातीति तरुलः । वीति विकाराः तेषां रु भङ्गस्तदादानाद् विरुलः । स्थावरजङ्गमविषघातनात् सर्वविषघातकः । ज्वलितविस्फुलिङ्गप्रदीपाग्निकरसहित अट्टाट्टहासध्वनि-सहित केसरिसटाटोपः केसरी मृगेन्द्रः । सटाः स्कन्धालम्बिनः केशाः तद्वदाटोपो यस्य स तथा । वज्रखुरनिघातनचलितवसुधातल वज्रखुरप्रहारेण चलित-वसुधातल चलितपृथिवीतल निःश्वासमारुतोत्क्षिप्तधरणीधर निःश्वास-मारुतः घ्राणवातः तेनोत्क्षिप्ताः ऊर्ध्वं गताः धरणीधराः पर्वता यस्य स तथा । भीषणाट्टाट्टहास अपरिमितवलपराक्रमेति सुगमम् । एतान्यामन्त्रणपदानि । आर्यगणभीतभूतगणः आर्यास्तथागताः तैर्गण्यत इत्यार्यगणः भीताः सन्त्रस्ता भूतगणा असुरादिगणा यस्मात् स भीतभूतगणः बुद्धचबुद्धचोऽभिप्रबोधनेन प्रेरणम् । हे हयग्रीव खाद सर्वदुष्टान् भक्षय परमन्त्रान् छिन्द छिन्द । सिद्धि मे दिश आदेशय सर्वज्वरपिशाचान् । सर्वग्रहेष्वप्रतिहतो भव । वज्रदंष्ट्र किं चिरायसि ? इमं दुष्टग्रहं दुष्टसर्पं वा धुन धुन कम्पय । मथ मथ विलोठय । मर्द मर्द नाशय बुद्धधर्मसङ्घैरनुज्ञातः कर्म कुर्विति प्रेरयति । यदा न करोति तदा स्वरूपमुक्त्वा हयग्रीवाय फट् वज्राय फट् वज्रमात्राय फट् वज्रनेत्राय फट् वज्रदंष्ट्राय फट् वज्रखुराय फट् वज्रखुरनिर्घातनाय फट् त्रैलोक्यभयङ्कराय फट् सर्वकर्मेष्वप्रतिहताय फट् ।

वज्रकुलसंत्रासनाय फट् । हूँ हूँ हूँ इति हयग्रीवं तर्जयति भगवान् । एवं तर्जयित्वा अन्ते स्वाहाशब्देन आश्वासयति । "स्वाहाकारस्तु मामक्याः सर्वसिद्धिप्रदायिकेति वज्रामृते वचनात् । अमुकस्य विषादिकमपहर हूँ इति मन्त्रविदर्भणम् ।

अथेत्यादि । धर्मवज्रोऽमिताभः तस्य महाः पूजाः तत्राग्रजाः प्रधानाः हयग्रीवादयः तद्दमनीयविघ्ना वज्रराजोऽमिताभः तमनुस्मरन् ध्यायन्तः एकाग्रतां प्राप्नुवन्ति स्म ।

खधातुं गगनकुहरं विषसम्पूर्णं कथं वज्रमभेद्यं हालाहलविषं विषविशेषः । तदपि चेत् ? तत्सर्वं निर्विषं करोति । क्रोधराजप्रचोदनैः प्रेरणैः । अत्रायमुपदेशः । साध्यं त्रिसत्यात्मकं निश्चित्य तस्य हृच्चन्द्रे स्थितस्य समाधिसत्त्वस्य रश्मिभिः साध्यदेहमापूर्य विषं प्रज्वालयेत् । ततो दक्षिणकरतले चन्द्रोपरि हंकारं सितवर्णं ध्यात्वा करपर्वाङ्गुलीषु ओं ह्रीं ख्रीं सः इति विन्यस्य मस्तकादारभ्य शुक्लरश्मिप्रेरितनिर्झरधाराकणेन नीलाकारं विषमधोगतं शून्यीभूतं ध्यायात् । मन्त्रोच्चारणपूर्वकं कररुहनिपातनापसर्जनात् विषमपनयति ।

अथेत्यादि । अवन्ध्यसिद्धिप्रदानादमोघसिद्धिः तथागतो महावज्रधरः । अमोघसमयोऽमोघसिद्धिः तस्य संभवः स एव केतुः ध्वजमभेद्यचिह्नं स यस्मिन् समाधौ तन्नामकं समाधिं समापद्य इमं नीलदण्डक्रोधराजं स्वकायादिभ्यो निश्चारयेत् ।

नम इत्यादि विभवतार्थम् । ओमित्यादिको मन्त्रः । एह्येहीत्याह्वानम् । भगवन्नीलवज्रदण्डेत्यामन्त्रणम् । तुरु तुरु हुलु हुलु इति त्वरणे । हाहा इति संबोधनम् । गुलु गुलु पीडय । गुलापय गुलापय परिवारेणापि पीडापय । क्रम क्रम इति प्रोत्साहनम् । क्रमु पदविक्षेपे भगवन्नित्यामन्त्रणम् । वायुवेगेन पवनवेगेन । भूतान् शीघ्रं दह दह भस्मीकुरु । दर दर पाटय । वह वह घातय । पच पच क्राथय । मथ मथ विलोठय । पातय पातय अधः कुरु । मट मट नाशय । मोटापय मोटापय परिवारान् नाशय । सर्वकर्माणि छिन्द छिन्द शत्रुप्रयुक्तान्युच्चाटनादीनि नाशय नाशय । भक्षय भक्षय मेदमस्य साध्यस्य रुधिरमस्य मेदमज्जावसारुधिरप्रिय एह्येहि भगवन् सर्वविघ्नानि सर्वाविद्यादीनि सर्वमन्त्राणि सर्वमूलकर्माणि कृत्रिमविषादीनि सर्वग्रहान् दन दन हन हन

भञ्ज भञ्ज मर्द मर्द। इदं यदीप्सितं तदिदमित्युच्यते। कार्यं साधय। हूमित्यनु-करणेन तर्जयति। नीलाय नीलवज्रदण्डाय तुरु तुरु त्वरितो भव विघ्नविनायक नाशय नाशय । हुरु हुरु सज्जीभव। दीप्तचण्डाय अधिकक्रोधार्थं सर्वशत्रूणां हृदयानि पीडय छिन्द छिन्द परविद्याछेदक परविद्यानां छिन्देति यावत् । हूँ तदुद्द्योतकं बीजम् । विद्यानां शिष्टक कारक समयं वज्रधरवचनं स्मर। मर्माणि निकृन्त । हूँ चोदना । हन हन दह दह तुरु तुरु हुरु हुरु फट् फट् हूँ हूँ कृतान्ताय यमाय देर्वाषिविद्रापकाय हन हन वज्रदण्डेन स्वाहा । स्वाहा-पूर्वममुकं मारय फट् फट् इति विदर्भणम् ।

अथेत्यादि । सर्वदुष्टाग्रसंभवा विघ्नरवाः । अन्यत् सुगमम् ।

जापेनाष्टशतेनाष्टशतजापेनायं क्रोधमन्त्रराजः सर्वदुष्टानां घातको भवति। विधिना कल्पोक्तविधिना । क्रम इति प्रयोगः चोदनम् मन्त्रार्थपरिज्ञानादिना देवताप्रेरणम् । अत्रायं विधिः श्मशानकर्पटे षोडशारं चक्रं तदुपरि विश्ववज्रं तद्वरटके आग्नेयमण्डलमेभिर्द्रव्यैः लिखेत् । राजिकालवणतैलविषधत्तूरकरसैः साध्यनामविदर्भितमावाहनपूर्वकं पुत्तलिकाहृदये प्रक्षिपेत् । तां चोभयतटव-ल्मीकमृदा साध्यपादपांशुना पञ्चामृतसमन्वितेन घटितां कपालसंपुटे स्थापयेत्। ततो मध्याह्ने अर्धरात्रे वा वामपादेनाक्रम्याष्टशतं जपेत् । म्रियते । यदि न नश्यति तदा कपालत्रयेण चूर्णिकां कृत्वा तदुपरि यन्त्रं संस्थाप्य चिति-काष्ठाग्निना तापयेत् । दाहज्वरेण गृह्यते । तदेव यन्त्रमग्नौ प्रक्षिपेत् । तदा सद्य एव म्रियते ॥

अथेत्यादि । वज्रधरपरावृत्त्या स्थितोऽक्षोभ्यस्तथागतः समन्तापतन्त्यो मेघश्रियो यस्य समन्तमेघश्रीम् । महाबलः तन्निष्पादकोऽपि समाधिरभेदात् तथोच्यते । तमामुखीकृत्य महाबलं स्वकायादिभ्यो निश्चारयेत् । नम इति गतार्थः । ओमित्यादिको मन्त्रः । उग्रं तीक्ष्णं शूलं यस्य पाणौ स तथा। ज्योतिरशनिः तद्वन्निनादो यस्य स तथा । स्वाहापूर्वं वर्षधारां पातय ह्लीरिति मन्त्रविदर्भणम् ।

अथेत्यादि गतार्थः ।

जपेत्यादि । अष्टशतजप्तेन प्रयोगेण तत्तत्प्रयोगेण वश्यादिकर्माणि साधयेत्। अनावृष्टिः [अति]वृष्टिः वृष्टचवग्रहं च शमयित्वा वर्षधारां पातयति। अत्रायं क्रमः । अभिचारुकद्रव्येण श्मशानकर्पटे अष्टदलपद्मदले नागाष्टकं

संलिख्य तेषां हृदये मस्तके च हूँ नँ हूँ इति मन्त्रेण विदर्भ्य कर्णिकामध्ये ओं आः हूँ वज्रधर आज्ञापयति सर्वनागा वर्षधारामुत्सृजन्ति ह्रीः स्वाहेति विन्यसेत्। पुनस्तद्वत् द्वितीयं यन्त्रमालिख्य संपुटं कृत्वावाहनपूर्वकं प्रतिकृतिहृदये प्रक्षिपेत्। अनेन विधिना प्रतिकृतिं कारयेत् । न ह्युभयतटमृत्तिकया पञ्चामृतसमन्वितयाभिचारुकद्रव्योपलिप्ता श्मशानाग्नौ मन्त्रमावर्तयंस्तापयेत् । वर्षधारां पातयन्ति नागाः ।।

अथेत्यादि । समन्ततो निर्घोषो वज्रगर्जनं यस्य स समन्तनिर्घोषवज्रः टक्किराजः तन्निष्पादकसमाधिरप्यभेदात् तथोक्तः । तमामुखीकृत्य सर्वतथागताः महर्धिकाः विघ्नाः तान् वघ्नातीति सर्वतथागतटक्किः । टक्किवन्धने धातुः । स एव प्रधानत्वाद् राजा । तं महाक्रोधं मन्त्रात्मकं स्वकायादिभ्यो निश्चारयामास । नम इत्यादि विभक्तार्थम् । टक्कि हूँ जः इति मन्त्रः उद्धारसंज्ञकः । तथा चोक्तम्

स्वाहा नास्ति न चौकारो यस्य स उद्धार उच्यते । इति ।

टक्कि दुष्टवन्धक इत्यामन्त्रणम् । हूँ दुष्टतर्जनम् । जः दुष्टानां निर्गमाय प्रेरणम् । अमुकमाकर्षय ह्रीरिति मन्त्रविदर्भणम् ।

अथेत्यादि । सर्वबुद्धा विघ्नाः साध्यत्वेन जातत्वात् । महात्मजाः महर्द्धयः। भीताः संत्रस्ताः । वज्रकायं महावज्रधरं ध्यायन्तः समयं टक्किराजाख्यम् आपेदे बुद्धया गतवन्तः ।

लिङ्गमित्यादि । लिङ्गं साध्यप्रतिकृतिं गिरिकया भूमावभिलिख्य हृद्देशे नाम विदर्भ्य विज्ञानावाहनपूर्वकं वज्रधरसमाधिस्थो योगी वज्राङ्कुशाधिष्ठितेन दक्षिणपादेनाक्रम्य त्रिवज्रमन्त्रचक्रं टक्किराजमन्त्रः । तेनाष्टशतादिजप्तेन सर्वे मन्त्रराजादयः तेषामाकर्षणं कार्यं भवेत् ।

अथेत्यादि । ज्ञानमालाम्त्रुवज्रम् अचलः तन्निष्पादकोऽपि समाधिरभेदात् तथोक्तः । तमामुखीकृत्य इदमचलवज्रसमयं मन्त्रात्मकं स्वकायादिभ्यो भगवान् निश्चारयामास ।

नम इत्यादि गतार्थम् । अचलेत्यादिको मन्त्रः । कवन्धश्चायं मन्त्रः ।

स्वाहास्ति नास्ति प्रणवः कवन्ध इति संज्ञितः ।
सर्वकर्मविधौ चायं वज्रोष्णीषे च भाषितः ।। इति ।

मन्त्रार्थः कथ्यते । विघ्नैर्न चाल्यत इत्यचलः विघ्नानामान्ध्योत्पादना काणः चण्डः क्रोधनः नट्टः शातनः छेदनः । नक्त सातने । वर्णविपर्ययो द्रष्टव्यः । मट्टः मत्तः । मदि हर्षे । अत्रापि वर्णविपर्यासः । मोट्टि बृहत्कायः । सट्टः अवसादको नाशकः । षड्डु अवसातने । तट्टः क्षयकरः । तमु उपक्षये । हन हन दह दह मोह मोह मोहकर हस हस वज्रहासं कुरु । सह सह मन्दरट् गर्ज गर्ज नह नह वन्ध वन्ध णह वन्धने । तिष्ठ तिष्ठ ममाज्ञा-करत्वे तिष्ठ । आविश याचकत्वेन साध्यदेहं प्रविश । महामन्त्रः अयमेव माला-मन्त्रः । तस्यार्थसंपादनात् । महामन्त्रपालकोऽचलः । धुन धुन कम्पय कम्पय । तिणि तिणि तीक्ष्णकटुकं तन्नयति तिणिः । खाद खाद विघ्नान् मारय मारय । दुष्टान् भक्ष भक्ष । सर्वं कुरु कुरु । किरि किरि साध्यदेहं विक्षेपय । दुष्टानां काये महावि[षम]वज्रस्फोटं स्फोटय उत्पादय । हूँ हूँ हूँ चोदनापदं त्रिवलितं त्रैधातुकं तदेव रङ्गं नृत्यस्थानं तस्मिन् नर्तकः । आं आं आ[न]यने । हां हां आमन्त्रणे । अचलचेट वज्रधरप्रेष्य स्फोटय स्फोटय पाटनं कुरु कुरु । हूँ हूँ असमन्तिका अनासन्नाः तेषां त्राट् स्फोटनम् । महावल शातय च्छेदय परमन्त्रान् परविद्याः । आं आज्ञापने हां आमन्त्रणे प्राप्य शुध्यतु लोकः पवित्रीभवतु । वज्री वज्रिणः तुष्यतु तुष्यन्तु । अप्रतिवलेभ्यः दशवलेभ्यो नमः । ज्वालय उद्दीपय त्राट् । स्फोटय । असह सर्वक्लेशान् । [न] सहन्तीत्यसहाः तथागताः तेषां नमः स्वाहा ।

अथेत्यादि । सर्वदेवाः ब्रह्मादयः सकिंकराः सप्रेष्याः । मन्त्रकायो महावज्रधरः । तमनुस्मरन्ति स्म ।

अनेनानन्तरोक्ते[न] मालामन्त्रेण ईश्वरादयो देवाः समयोल्लङ्घन-भयेन भीताः संपुटकायेन संपुटयन्त्रेणाकृष्यन्ते ।

अत्रायं प्रयोगः । भूर्जपत्रादौ गोरोचनादिना साध्यस्य प्रतिकृतिं नामाङ्किता-मालिख्य पुनरपरेण यन्त्रेणापिधाय वज्राङ्कुशाङ्कितप्रत्यालीढपदेनाक्रम्य त्रिसन्ध्यं जापेनाकर्षयति ।

अथेत्यादि । समयो वज्रधराज्ञा । तस्य विजृम्भितं प्रवृत्तिः तदेवाभेद्यत्वाद् वज्रम् । तन्नामकं समाधिं समापद्य सर्वे वज्रधराः समया आज्ञास्वभावाः यस्य सर्ववज्रधरसमयः दुष्टनिसूदनात् सुम्भनं महाक्रोधं स्वकायादिभ्यो निश्चारया-मास ।

ओमित्यादिको मन्त्र निरन्तसंज्ञकः।
प्रणवोऽस्ति न च स्वाहा स निरन्तो निगद्यते। इति॥

तत्रायमर्थः। सुम्भ निसूदक इत्यामन्त्रणम्। निसुम्भ निःशेषेण मारय। हूँ इति दीपकं बीजम्। गृह्ण गृह्ण पीडकान् पालयतो गृहाण। गृह्णापय गृह्णापय परिवारैः। हूँ चोदना। वज्रयोगेन वध्वा वज्राङ्कुशेन हृदि विद्धवानेयः होः भगवन् विद्याराज इति। सुम्भमाश्वासयति। हूँ फडिति मारणे चोदयति।

अथेत्यादि ग[तार्थ]म्। वज्रसत्त्वः स्वज्ञानसत्त्वः तस्य पदं रश्मयः तेनाक्रान्तमालिङ्गितम्। सर्वतायागताधिपं साध्यज्ञानसत्त्वं वज्रपाशेन वै वद्ध्वा कन्याकर्षणं क्रियते। कन्येत्युपलक्षणम्।

इदानीमध्यात्मपरायणानामप्याकर्षणादिक्रम[म]ाक्षिपन्नाह। अथेत्यादि। भगवान् महावज्रधरः महावज्रसमयाः साधकाः तेषां तत्त्वमाकर्षणादिना सत्त्वार्थ करणं तस्योत्पत्तिः प्रकाशनं तद् वज्रमभेद्यं यस्मिन् समाधौ तन्नामकं समाधिमालम्ब्य महासमयाः घटमानाः तेषां त्रिवज्रकायवाक्चित्तं तस्मिन् गुह्यं गोप्यमप्रकाश्यत्त्वात्। वाक्समयो प्रव्याहारस्तस्य तत्त्वमनन्यथात्वं तस्य पदं प्रतिष्ठाभूतम्। आकर्षणादि कर्म स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत्।

बुद्धवज्रा दुस्साध्याः तेषां त्रिकायेषु कायवाक्चित्तेषु वज्रसत्त्वः स्थिर-चित्तः साधकः तेन विभावना ध्यानविशेषः कर्तव्यः। पाशवज्राङ्कुशधरैः साध्यकायादिषु यथाक्रमं पाशाद्याकारैः रश्मिपुञ्जैः प्रविष्टैर्विभावना तदेत-दुत्तमं प्रधानं बुद्धाकर्षणं पिण्डाकर्षणम्।

बुद्धः अध्येषकः तस्य वाक्कायो वचनसमूहः तेन महच्चक्रं मण्डलं यस्य स महाचक्रमण्डलाधिपतिः तस्य चित्ताकृष्टचर्थं वज्राङ्कुशस्य प्रयोगतः प्रेरणतः वज्रसत्त्वो महाराजा तस्मिन् चित्तवज्रः ध्रुवमेकान्तमाकृष्यते सदा सद्य एव।

चक्रपद्ममहावज्रैरिति मोहरागद्वेषरचितैः। त्रिवज्राभेद्यभावनैरिति वैरोचनादियोगिभिः। वज्राङ्कुशं वज्राद्यङ्कुशं तत्प्रभेदेन तेन साध्यस्य हृद्या-सक्तेन सर्वमन्त्राकर्षणं सर्वसाध्याकर्षणमुत्तमम्। इदं स्वचिह्नेनाप्याकृष्टिः।

महावज्रसत्त्वयोगी स्वमन्त्रपुरुषं स्वदेवतां सर्ववज्रमयं शिवं शोभनं ध्यात्वा श्रेष्ठां मानुषीं तत्स्थितां ध्यात्वा हृद्वज्राङ्कुशयोगतः हृद्यासक्त-वज्राङ्कुशेनाकृष्यमाणां वातमण्डलसंयोगात् वात्यया प्रेर्यमाणं ध्यात्वा ध्रुव-

माकृष्यते। तेनैव वैरोचनयोगी वैरोचनमहाविधिं चन्द्रमण्डलाकारपरिणतं ध्यात्वा शक्रभवनादमृतकुण्डलिना शचीं शक्रभार्यामाच्छिद्य तत्रारोप्यानीयमानां ध्यात्वा [त]दमृतकुण्डलिमन्त्रं पञ्चाशद्वारानुच्चारयन्नानयेदिति।

वज्रमण्डलकं टक्किराजं वज्राङ्कुशं ध्यात्वा तदारूढां सुरकन्यां तेनैव हृद्याकृष्यमाणां वात्याप्रेरितामाकर्षयेदिति।

क्रोधवज्रः अक्षोभ्यस्तस्य समयः आज्ञा यस्मिन् तं क्रोधवज्रसमयं वज्रपातालवासिनं सुम्भराजं संचोद्य शूलवज्राङ्कुशपाशैः तेन शूलेन हृदि विध्द्वा वज्राङ्कुशेनाकृष्य पाशेन वद्ध्वाकृष्यमाणां वातचक्रारूढां ध्यात्वा असुरकन्यामाकर्षयेदिति।

गैरिकादिकं वर्णकं वज्राङ्कुशप्रयोगतः वज्राङ्कुशाकारं चन्द्रग्रहणे मुखे वज्रे धर्मोदये वा प्रक्षिप्य यावद् ग्रहणान्मोक्षः तावत् साधयेत् समापत्तिं कुर्यात् ततः तदपनीय संरक्ष्य ब्रह्मादीनामन्यतमस्य नाम लिखेत् स नियत-मागच्छति। वाग्वज्रस्याप्रतिहतवचनं तथा।

सर्वाकारेत्यादि। आत्मानं सर्वाकारवचोपेतं सर्वलक्षणान्वितं मञ्जुश्रियं विभाव्य पुनर्यमान्तकं स्फरित्वा तत्परावृत्त्या वज्राङ्कुशं विभावयेत्। ततः कल्पोद्दाहमहाचक्रमग्निमण्डलं ज्वलत्स्फुलिङ्गं ध्यात्वा तस्मि[न्] अभिमत-यक्षीमङ्कुशेनाकृष्यारोप्य वायुनेर्यमाणामात्मसमीपमानीयोपभुंक्ते।

इत्याह चेत्युपसंहरति।

मुद्राभेदेन द्विविधमहामुद्राभेदेन सर्वेषां देवतानां मन्त्रणं मन्त्रः जपः वाग्जापो वज्रजाप इति द्विविधजापभेदेन सर्वथा निरवशेषेण आकर्षणप्रयोगः प्रोक्तः कथितश्चेद् यदि द्विविधप्रकारेण न साधयेत् स नाशमाप्नुयात् नाश-मसिद्धिमवाप्नुयादिति।

वज्रेत्यादि। वज्रसत्त्वः षष्ठः स एष महाराजः पञ्चानामाश्रयत्वात् मुहुर्मुहुः पुनः पुनश्चोदनीयः आलम्बितव्यः। कस्मात्? स एष सर्वमन्त्राणां सर्वतथागतानां ध्रुवः शाश्वतः राजा उद्दीपकः। तस्मात् सर्वकर्मसु सर्वावस्थासु आलम्बितव्यः।

अथेत्यादि। भगवान् महावज्रधरः। गगनशाश्वतआकाशवदनादि-निधनः समन्तात् सर्वतो विजृम्भितं प्रस्फुरद्रूपं विश्ववज्रं यस्मिन् समन्त-विजृम्भितवज्रोऽमोघसिद्धिः। तन्निष्पादकोऽपि समाधिरभेदात् तथोक्तः।

तत्संज्ञकं समाधिमवस्थाविशेषं समापद्याकलय्येमां वक्ष्यमाणरूपां वज्रस्वभावा-मेकजटाम् एका वेणी यस्यास्तां वज्रैकजटा मन्त्रात्मिका महासमयापराजिता वागमोघसिद्धिः तस्य वज्रा तन्माण्डलेयाः तेषामग्रीं प्रधानां स्वकायादिभ्यो निश्चारयामास ।

ओमित्यादिको मन्त्रः । शूलिनी शूलवती । शूलिनि इत्यामन्त्रणम् ।

अथेत्यादि । अस्यां विद्यायां विनिसृतमात्रायां भगवन्मुखारविन्दात् निष्क्रान्तायां नागकन्या मर्हर्धिकाः कामाग्निना दह्यमाना विवस्त्रात्मा परवशाः बुद्धबोधिममोघसिद्धिं ध्यायन्ति ।

अनया मन्त्रविद्यया विधिप्रयुक्तया सर्वे पन्नगाः आगच्छन्ति । अत्रायं विधिः । गैरिकया पुरुषकपाले वायव्यमण्ड[लं] पूर्वोक्तक्रमेणालिख्य तन्मध्ये वासुकिप्रभृत्यन्यतमनागप्रतिमामालिख्य तद्वृत्तिनाम विदर्भ्य वज्राङ्कुशाङ्कितेन वामपादेनाक्रम्य विदर्भणसहितं मन्त्रमुच्चारयन्नाकर्षयति नागान् । अनेनैव विधानेन स्त्रीकपाले नागकन्यामालिख्याकर्षयति । अत आह । नागकन्यां विशालाक्षीं समाकृष्योपभुञ्जयेदिति ।

अथेत्यादिना । भगवान् महावज्रधरः गगनसमयोऽमिताभः संभवति यस्मिन् स गगन[समय]संभवः । तन्न[ाम]कं समाधिमामुखीकृत्य इमां महा-महाधर्मोऽमिताभः तस्य समया तत्कुलीना तेषु वज्रभ्रुकुटिमभेद्यभ्रूभङ्गवतीं स्वकायादिभ्यो निश्चारयामास ।

ओमित्यादिको मन्त्रः । सर्वभयं चौरादिकृतं नाशयतीति भयनाशनि शत्रून् वित्राशयतीति त्रासनि त्रासमूर्तिमन्त्रसरूपे त्रासयेत्याज्ञापयति विद्युद्व-च्चञ्चलरूपत्वात् । भृकुटितटि मेघवद्गर्जनत्वात् । वैरटि सकलकलिमलाप-गतत्वात् श्वेते रागविशुद्धया विशुद्ध[त्व]ात् । श्वेतोऽमिताभः स यस्य जटायां शिरसि विद्यते सा श्वेतजटिनि । भयनाशनीत्यादीनि आमन्त्रणपदानि ।

अथेत्यादि । अस्यां विद्यायामुच्चरितमात्रायां सर्वविद्याधरात्मजाः विद्याधर्यः विद्याधरकन्याः कम्पिताः रागक्षोभिताः ज्ञानवज्रममिताभमनु-स्मरन् ध्यायन्ति स्म । भयमुत्कण्ठामापेदे प्राप्ता ।

विद्याधरस्य महाकन्यां रूपादिगुणसमन्वितां चलत्कनककुण्डलां दोलायमान-कर्णभूषणां समयाग्रेण विधिविशेषेणाकृष्यानीय मन्त्रविद्ययानन्तरोक्तयानयेत् ।

अत्रायं विधिः। स्त्रीकपाले वायव्यमण्डलं तन्मध्ये विद्याधरकन्यामालिख्य वज्राङ्कुशाधिष्ठितेन प्रत्यालीढेनाक्रम्य मन्त्रमुच्चारयन्नाकर्षयति।

निरोधेत्यादि। सर्वमन्त्राः सर्पादयः स्त्रीपुंनपुंसकभेदेन यस्मिन्निरुध्यन्ते संगृह्यन्त इति निरोधः। वज्रराजः त्र्यक्षरमन्त्रः। निरोधश्च वज्रराजश्चासौ निरोधवज्रराजः तेन निष्पन्नेन प्रवेशादिरूपेणानवरतं प्रवर्तमानेनाग्रचारुणा ईप्सितार्थसाधनात् शोभनेन। त्रिवज्रज्ञानाः अक्षोभ्यादयः तेभ्यः संभूताः अनन्तरोक्ता लोचनादियमान्तकादिमन्त्राः क्षणादचिरात् कृष्यन्ति आकृष्यन्ते सिद्धिमुपगच्छन्ति सर्वतः सर्वे मन्त्राः। सन्ध्याभाषा॥

मन्त्रपरायणानां विशेषविधिमाह। अथवेत्यादि। सर्वक्रोधा यमान्तकादयः तेषां मन्त्राः लक्षजापेन मन्त्रिणः साधकस्य कर्मकराः सर्वार्थसाधकाः प्रोक्ताः विजनेषु महाटव्यादिषु महत्सु पर्वतेषु।

अभिचारुकविषयं दर्शयन्नाह। आचार्येत्यादि। आचार्यनिन्दनपराः गुरुनिन्दकाः वज्राचार्यनिन्दकाश्च महायानाग्रनिन्दकाः वज्रयानप्रतिक्षेपकाः एते चान्ये [च] पापकारिणः मारणीयाः प्रयत्नेनाशिथिलवीर्येण। अथवा तेषां स्थानचालनमुच्चाटनं कर्तव्यम्।

अनेनैव कृतेन कर्मणा परमां बोधिमप्रतिष्ठितलक्षणां मन्त्रसिद्धिं चाप्नुयादिति। इत्याह च महावज्रधरः इति सङ्गीतिकारवचनम्।

तेषां वध्यानां संपुटोद्घाटनमाह। दशदिगित्यादि। दशदिक्पर्यापिन्नसत्त्वराशीनां कायवाक्चित्तघातनं मारणीयं भावनीयं साधकेन भाव्यम्। केषामित्याह रिपूणां दुष्टचेतसामिति। दुष्टचित्तानामाचार्यनिन्दकानां भावनीयमित्यनेन संबन्धः।

प्रयोगमाह। रुधिरेत्यादि। रक्तोष्णोदकविण्मूत्रैरेकीकृत्य तैर्वस्त्रं मार्जयित्वा तेनावगुण्ठितकायो भूत्वा। लिङ्गमाक्रम्येति। अभिचारुकद्रव्येण साध्यप्रतिकृतिं कृत्वा हृदये नाम विदर्भ्य विश्ववज्राङ्कितदक्षिणचरणेन प्रतिकृतिमाक्रम्याक्षोभ्ययोगवान् क्रोधराजं यमान्तकाद्यन्यतमक्रोधमन्त्रमष्टशतं जपेत्। बुद्धोऽपि कर्मप्रसरनिपुणोऽपि शीर्यते म्रियते।

सलिलार्द्रगतमिति। वस्त्रं केवलमुष्णोदकेनापि मापित्वा पूर्वोक्तविधिमाचरेत्। विण्मूत्रेणापि तेमयित्वा प्रयोगमारभेत्। तद्वत् भस्मोदकेन वस्त्रं रञ्जयित्वा मारणमारभेत्। दुःसाध्योऽपि म्रियते।

नग्न इत्यादि। यमान्तकादिक्रोध[ा]हङ्कारमालम्ब्य दंष्ट्राकरालत्वा-द्विकटः अत्युच्चदेहत्वात्। उत्कटो विनाशोद्यतत्वात्। संभ्रान्तः साधकः लिङ्गं पूर्ववन्निष्पन्नां प्रतिकृतिं पादेन विश्ववज्राङ्कितदक्षिणपादतलेनाक्रम्य खधातुम-प्यमूर्तमाकाशमपि किं पुनर्मूर्तमित्यतिशयोक्त्या ध्यानमाहात्म्यमाविष्क्रियते।

मातृगृह इत्यादिना प्रस्तुतस्य कर्मणः स्थानमाह। ब्रह्माणी वैष्णवी रुद्राणी इन्द्राणी कौवेरी वाराही चामुण्डा चेति सप्तलोकमातरः। तासां गृहे श्मशानशून्यागारचतुष्पथैकलिङ्गैकवृक्षेषु।

मानुषास्थिमयमित्यादि। जङ्घाप्रदेशे अस्थि अष्टाङ्गुलप्रमाणं संगृह्य श्मशानकर्पटे अभिचारुकद्रव्येण विश्ववज्रमालिख्य तद्वरटके साध्यनामालिख्य तच्चक्रमस्थिसुशिरे प्रक्षिप्य साध्यपादपांशुना पिधाय अष्टशतवारक्रोधमन्त्र-जप्तमरिद्वारे निखनेत्।

बुद्धाः प्राज्ञाः सत्त्वाः त्रिकायाः हीनमध्योत्कृष्टशब्दराशयः तेषामीप्सितार्थ-प्रदानाद् वरदः। ज्ञानं प्रत्युपकारचिन्ता। अज्ञानं निरपेक्षता। ताभ्यां वर्जितः। एवंविधोऽपि सन्नाचार्यनिन्दकत्वेन दूषितः स्यात् पक्षाभ्यन्तरेण पूर्णेन पक्षेण वा भ्रस्यते स्थानात् म्रियते वा।

कपालपरिपूर्णमव्रणमादाय विज्ञो विद्यान् तत्र कपाले मन्त्रपदं यथाभिप्रेतं कोपमन्त्रं साध्यनामसहितं लिखेत्। जपन् वा वज्रभाषयेति। वज्रभाषा क्रोधवाक् तया जपन् वाग्जापं कुर्यात्। तत्कपालमरिद्वारे ग्रामे वा निखनेत् प्रोच्चाटयेद् ध्रुवमिति।

तालपत्रेऽन्यत्र कर्पटादौ वा अभिचारुकद्रव्येण नामसहितं क्रोधमन्त्र-मालिख्य अरिगृहनिकटे द्वारे वा गोप्य निखन्य तमेव मन्त्रं चतुःसन्ध्यं क्रोध-वाचा पठेत्। एवं कृते शुष्यति पूर्वक्रमेण पश्चान्म्रियते।

महासमयो मारणादिकं तस्य हेतुर्वज्रः। महावज्रधरः एवमाहेति संगीतिकारः।

अथेत्यादि। भगवान् महावज्रधरः। यथा यथा दुष्टभावं गताः तथा तथा निषेध्यत्वं गताः साध्याः तेषां कायवाक्चित्तनिवन्धनं निश्चलीकरणं वज्रम-भेद्यस्वरूपं यस्मिन् तन्नामकं समाधिमामुखीकृत्य त्रैधातुकाः हीनमध्योत्कृष्टाः त्रिविधसाध्याः। तेषां कायादिपीडनार्थं वज्रमभेद्यकीलनं मन्त्रं स्वकायादिभ्यो निश्चारयामास।

ओमित्यादिको मन्त्रः निरन्तः घ घ घ घ घातकेत्यामन्त्रणम् । घातय सर्वदुष्टानिति प्रेरणम् । फट् फडिति तदीयकं बीजम् । कीलय कीलय निश्चली कुरु सर्वपापान् पापाध्याशयान् फट् भेदनम् । हूँ हूँ तत्त्वचोदनम् । वज्र-कीलेति कृत्येनामन्त्रणम् । वज्रधर आज्ञापयतीति वज्रधर एवात्मानं निर्दि-शति । कायवाक्चित्तवज्रमिति दुष्टानामित्यभिप्रायः । हूँ फट् फट् पुनरपि चोदना ।

अथेत्यादि । अस्मिन् कील[न]मन्त्रे निश्चारिते दुःसाध्यत्वात् वज्राः । महानुभावत्वान्महर्धिकाः शक्रादयः मन्त्रस्पर्शात् पूर्वं मूर्च्छिता भयमापन्नाः तदनन्तरं लब्धसंज्ञकाः भीताः खवज्रचित्तो महावज्रधरशरणं गताः ।

मानुषास्थीत्यादिनात्र विधिमाह । अभिचारुकद्रव्यैः साध्यप्रतिकृतिं कृत्वा कर्पटे विषादिना नामालिख्य पुत्तलिकाहृदये निधाय मानुषास्थिखदिरसारा-दीनामन्यतमकीलमूर्ध्वतः क्रोधरूपमयः शूलाकृतिं निर्माय मस्तकादारभ्य यावत्पादान्तं मन्त्रमावर्तयन् वज्रमुद्गरेणाकोट्टयेत् । अनेन कायवाक्चित्त-दुष्टानां विनाशनं भवति ।

ध्यानेन कीलनविधिमाह । वज्रसत्त्वेत्यादि । साधनोक्तक्रमेण बोधिचित्त-वज्रयोगवान् अक्षोभ्योत्सर्गानुप्रवेशेन स्फुलिङ्गाकुलसुप्रभमिति । ईषद्दंष्ट्रा-करालवदनं रक्तप्रभामण्डलमध्यगमात्मानं ध्यात्वा दशक्रोधानुत्सार्य दिग्विदिक्षु स्थापयित्वा त्रिवज्रकायपर्यन्तं त्र्यात्मकं विम्वं सुम्भरूपं ध्यात्वा प्रयोजयेत् ।

अनन्तरोक्तं कीलनविधिं ध्यानेन कुर्यात् । न केवलमक्षोभ्यरूपेणेत्याह । वैरोचनेत्यादि । वैरोचनाद्यालम्वनेनापीदं कीलनं कार्यमिति भूतार्थः ।

कुण्डलेत्यादिना ध्यानेन ध्यानविधौ कीलनं दर्शयति । कुण्डलामृतवज्रेण अमृतकुण्डलिना कीलरूपमापन्नेन दुष्टक्रूरनिकृन्तनं दुष्टानां क्रूरनिकृन्तनं निष्ठुरघातनं कर्तव्यम् । वज्रयोगेनाक्षोभ्ययोगेन बुद्धस्यापि वैरोचनामिताभ-योगिनोऽप्ययमेव विधिः ॥

महात्मनः यमान्तकस्याप्ययमेव कीलस्थानं दर्शयन्नाह । हृदयमित्यादि । अमृतकुण्डलिं हृदयादारभ्य यावत् पदतलं कीलरूपं ध्यायात् । तदेवं कील-नादूर्ध्वं समयममृतकुण्डलिरूपं ध्यायात् । इदं कीलविजृम्भितम् । इदमनन्त-रोक्तं कीलाकृतिनिरूपणम् ।

अनेन ध्यानप्रयोगेण बुद्धोऽपि कीलविधिज्ञोऽपि साधकः कील्यते निश्चलीक्रियते। वज्रसत्त्वो महाराजा कीलयेत् म्रियते लघ्विति। साधकः त्रैलोक्यधर्मराज्याभिषिक्तत्वान्महाराजा। दृढवीर्यत्वाद् वज्रसत्त्वः यद्येवं विधिना कीलयेत् तदा साध्यः लघु क्षिप्रं म्रियते।

वज्रपद्मसमागमेनापि कीलनविधिमाह। अथेत्यादि। भगवान् महावज्रधरः महावैरोचनस्वभावः कायः। महावैरोचनकायः साध्यदेहः। अस्मिन् विजृम्भितं कीलस्थविलसनं यस्मिन् समाधौ तं समापद्य [स्व]कायसमयः कायवलं तस्याक्षेपकं निकृन्तनं वज्रकीलमन्त्रं स्वकायादिभ्यो निश्चारयामास।

ओमित्यादिको निरन्तो मन्त्रः। छिन्द छिन्द साध्यकायम्। हन हन कायवलम्। दह दह काय[म्] दीप्तवज्रं च चक्रं च यस्या दीप्तवज्रचक्रेत्यामन्त्रणम्। हूँ फडिति चोदनम्।

अन्योन्येत्यादिना कीलन प्रयोगमाह। अक्षोभ्ययोगवान् मामकीं पुरतः संस्थाप्य अन्योन्यवेष्टनाकारमालिङ्गनादिकं तत् कृत्वा अङ्गुष्ठपदमीलनमिति। अङ्गुष्ठं स्वसाधनं पदं मुद्रा गुह्यं रतिस्थानत्वात्। द्वयोन्मीलनम् एकीकरणम्। कथं वैरोचनपदाक्रान्तमिति। वैरोचनपदं साध्यकायः तदाक्रम्यते कील्यते येन तद् वैरोचनपदाक्रान्तम्। एतदङ्गुष्ठपदमीलनस्यापि विशेषणम्। एतन्मन्त्रमावर्तयन् कुर्यात्।

हतमात्रे वज्रेण साध्यशिरसि प्रहतमात्रे महासत्त्वः महावलः सन्नपि त्रिकायवज्रसंभवः त्र्यात्मकः। उत्तिष्ठते स्थानाच्चलति चेत्, नाशपदं न भवेत्।

अथेत्यादि। लोकेश्वरस्वभाववाक् लोकेश्वरवाक् साध्यवचनं तस्य कीलने विजृम्भितं यस्मिन् समाधौ तं समापद्य वाक् साध्यवचनम्। तस्य समयः वलं तस्याक्षेपकं स्तम्भनं वज्रमभेद्यकीलनं मन्त्रं निश्चारयामास। ओमित्यादिको निरन्तो मन्त्रः। ह्रीरिति साध्यवागाकर्षणं बीजं भूर्भुव इत्यामन्त्रणे।

विकसित इत्यादि। विकसितं प्रसारितं ज्ञानत्रयोदयकरं पद्मं ज्ञानपद्मं तेन विकसितज्ञानपद्मेन योषिद्भगेन भगे वज्रमेवाङ्गुलिः वज्राङ्गुलिः तस्य विशेषणं रागवज्रपदाक्रान्तमिति रागवज्रः साध्यवचनप्रवन्धः तस्य पदेन कुलिशाग्रेणाक्रान्तमाक्रमणं यथा भवति तथा। इदं वज्रकीलनिपातनम्।

हतमात्रे योन्यन्तर्भावितसाध्यजिह्वाग्रे स्पृष्टमात्रे महाराजः अमिताभः स्वभावः साध्यवाक्प्रपञ्चः त्रिकायालयसंभवः आकाशोद्भूत उत्तिष्ठते। साध्य-रसनादपक्रामति। समयाग्रेणानन्तरोक्तप्रयोगविशेषेण यदि साध्यो न म्रियते।

अथेत्यादिना चित्तकीलनविधिमाह। साध्यस्य चित्ते कीलने विजृम्भितं यस्मिन् तं समापद्य चित्तसमयः। चित्तोत्साहः तस्याक्षेपः चित्तोत्साहाय नयनं प्रतिकीलनमन्त्रमुच्चारयामास।

ओं वज्रराज ओं चित्तवज्र हूँ इतः साध्यहृदयादपक्रामेति मन्त्रार्थः।

पञ्चशूल निवन्धेनेति। पञ्चशूलस्वभावेन स्फुलिङ्गाकुलभावनम् अग्निकणाकुलस्य वज्रस्य भावनं कर्तव्यम्। कथम्? चित्तवज्रं चित्तं तस्य पदं हृत्पद्ममेतदाक्रम्यते यथा तथा कर्तव्यमिदं वज्रकीलनिपातनम्।

हतमात्र इत्यादि। स्वमुद्राधर्मोदयान्तर्भूताग्नेयमण्डलस्थसाध्यहृत्पद्मे भास्वरेण स्वकुलिशेन हतमात्रे आकोटितमात्रे महावज्रं साध्यचित्तं तत्स्वभावं चित्तं वज्रसमयाग्रेण प्रयोगविशेषेण उत्तिष्ठते हृदयान्निर्गच्छति। यदि साध्य एवं पञ्चत्वं न याति, तदोत्तिष्ठते।

अथेत्यादि। ते बुद्धा निष्पन्नक्रमस्था बोधिसत्त्वा महासत्त्वाः कीदृग्विधाः? बुद्धयानीया अनर्घयानसंप्रस्थिताः आदिकर्मिकाः त्रिकायाः तेषामग्राः सत्त्वधातु-हितैषिणः सत्त्वार्थकरणसमर्थाः ते तुष्टाः प्रथमं श्रुतिमात्रेण ततः प्रामोद्य-मतिशयप्रीतिं संप्राप्ताः स्वधिगमे इदं वक्ष्यमाणं स्वानुभवप्रकाशकं घोषं अकार्षुः कृतवन्तः।

अहो इत्याश्चर्ये गुह्यपदं मन्त्रपदं तत् श्रेष्ठम्। सारसमुच्चयः मन्त्राणां-प्रयोगविशेषः धर्मपदं शान्तीमति तस्यैव पदस्य ध्यानेन संपादनम्। वज्र-विदारणं दुष्टीविग्रहः।

सर्वबुद्धानां कर्मप्रसरसमर्थानां कीलनं तदाप्याश्चर्यम्। बोधिसत्त्वा अन्ये सामान्यजनाः महायशाः दिक्पालाः तेषामपि कीलनं यत् तदप्याश्चर्यम्। पृथक् कायादीनां यद् ध्यानेन कीलनमुक्तं तदाप्याश्चर्यमित्याहू रत्नपुद्गलाः।

यदनन्तरोक्तं तदिदं सर्वमन्त्राणां द्विप्रकारसाधकानामुपयोगितत्त्वसंभवं महावज्रधरप्रकाशितं कीलनं निश्चलीकरणम्। कायवाक्चित्ताः साधकाः तेषां वरदं इप्सितफलप्रदम्। मन्त्रतत्त्वसमुच्चयमिति। मन्त्राः सर्पादयः तेषां तत्त्वमर्थादिपरिज्ञानं समुच्चयं उद्धृत्यकथनमुक्तमिति संगीतिकारः।

सर्वतथागतकायवाक्चित्तान्येवाद्भूतानि । एकोऽपि कायवाक्चित्तः स्वं स्व-परविभागमालम्ब्य निकृन्ततीति तैर्मन्त्राणामालिकालिजनितानां त्रिलिङ्गं स्वभावेषु त्र्यक्षरेषु प्रवेशनं तदाकर्षणं तेन विजृम्भितं विलसितं शान्तिकादि कर्मप्रसरसाधनं तेनैव राजते दीप्यत इत्यर्थः । कायवाक्चित्ताद्भुतमन्त्राकर्षणे विजृम्भितराजो नाम समाधिः । तद्द्योतकः शब्दसमूहस्तथोक्तः । सन्ध्याभाषा ।।

।। प्रदीपोद्द्योतनटीकायां चतुर्दशपटले षट्कोटिव्याख्या ।।

—०—

## ॥ पञ्चदशः पटलः ॥

उक्तानुक्तशान्तिकादिकर्मणां सिद्धिः मायोपमसमाधिपरिज्ञानेन विना न भवति । पञ्चदशपटलमाक्षिपन्नाह अथेत्यादि । वज्रधरो राजा महावज्रधरः सर्वाकाशः चतुःशून्यात्मकः महाक्षरः अविनश्वरः सर्वाभिषेकः सर्वाभिषेकस्याप्य-भिषेकत्वात् सर्वकुलात्मकत्वात् सर्वज्ञः वाग्वज्रमभेद्यवचनमुदीरयन् उदीरयामास ॥ नासन्ध्यम् ॥

निष्प्रपञ्चचर्यां दर्शयन्नाह । द्वादशब्दिकां द्वादशवर्षप्रमाण[ां] चण्डालस्य कन्यां दुहितरं श्रद्धादिगुणान्वितत्वात् महात्मा साधयेदिति तन्त्रमन्त्रसुशिक्षितां कारयेत् नित्यं सर्वकालं सुशिक्षयेत् । स्मृतिविलोपभयात् अत्यन्तजनसम्पातरहितेषु शिक्षयेत् ।

स्थानपरिकर्माह । विट् हरितगोमयं मूत्रं तदेव साधनाङ्गं तां सम्यगेतीति समयं तदाद्यं यस्य तेन विण्मूत्रसमयाद्येन । आद्यशब्देन चन्दनादयोऽपि परिगृह्यन्ते । चतुरस्रमित्युपलक्षणत्वात् चतुर्द्वारादिसमन्वितत्वात् स्वीक्रियते । विधानमत्र मण्डलविधानं तेन विधिना । कथम् ? वज्रमण्डलभावनैः वज्र-मण्डलमक्षोभ्यमण्डलं तद्भावयन्ति प्रकटयन्तीति वज्रमण्डलभावनानि माण्डले-यदेवतारूपाणि तैर्मण्डितं मण्डलं कारयेदित्यभिप्रायः ॥

सर्वलक्षणं पादादिकेशान्तं यच्छुभलक्षणं तेन संशुद्धामुज्वलां चारुवक्त्रां साधकोन्मुखां सुशोभनां अनन्यरक्तां सर्वालङ्काराः रतिकौशलं तेन संपूर्णा-मविकलां ईदृग्विधां सुशिक्षितमातङ्गकन्यकामङ्के आत्मना सह मण्डलमध्ये संस्थाप्य विभावयेदभिप्रेतमर्थं निष्पादयेत् ।

पञ्चमण्डलं पञ्चकुलानि तेषां चक्रेण पर्षदा बुद्धविम्बं साधकविग्रहः तस्य विभावनं निष्पादनं भावयेत् कारयेत् एतत्प्रजापदं रम्यमनुत्तरं पूजानिधानं मन्त्रचक्रिणां साधकानां रहस्यम् ।

एवं साधकः कायवाक्चित्तवज्रिणमात्मानं वैरोचनमहाविम्बं मण्डल-मध्यस्थं ध्यात्वा कथं ध्यायमाना मन्त्रा अक्षोभ्यादयः तेषां प्रयोगः यथा-वस्थोपमं तेन बुद्धसमप्रभः वैरोचनीभूय साधयेदिति ।

नीलोत्पलदलाकारामित्येतावत् सर्वलक्षणसंशुद्धां चारुवक्त्रामित्यनेन योज्यम् । अक्षोभ्यस्य रजकस्येत्याद्यवशिष्टमनन्तरोक्तवैरोचनसमाधिना योज्यम् । रजककन्यां गौरवर्णां साधयेत् शिक्षयेत् । वज्रसत्त्वप्रयोगतः वज्र-सत्त्वसमाधाविति ।

तदेव वज्रसत्त्वयोगविधिः । अयं योगः । तमेव कृत्वा कर्म समारभेत् । तया सह यथेष्टं कर्म कुर्यात् । एषो हीत्यादि । सर्वमन्त्राणां रत्नसंभवामिता-भामोघसिद्धिनां समयः साधनविधिः दुरतिक्रमोऽलङ्घनीयः ।

स साधकः तत्क्षणादेव भावनानन्तरमेव वज्रसत्त्वसमप्रभः रत्नकेतुतुल्यो भवति । तद्योगयुक्तः सर्वधर्मधरो राजा अमिताभतुल्यो भवति । तद्योगयुक्तः काममोक्षप्रसिद्धकोऽमोघसिद्धिस्तत्तुल्यो भवति कर्मकु[श]लयोगी ।

चारुवक्त्रामित्यादिना अमिताभयोगिनो विशेषविधिं दर्शयति । चारुवक्त्रां साधकोन्मुखीं विशालाक्षीं प्रज्ञावतीं सुशोभनां रक्तगौरां साधयेत् साधको नित्यं वज्रधर्मविभावनैरमिताभप्रयोगैः ।

एवं प्रवृत्तः साधकः वज्रधर्मात्मा अमिताभस्वभावः दशभूमीश्वरो भवति । वाक्समयः वागैश्वर्यं तद्धारकः सर्वाग्रः सर्वसत्त्वविशिष्टः परमेश्वरो राजा चक्रवर्ती भवति । कल्पितयोगित्वात् ।

एवं कल्पितयोगिनां मुद्राविभागं प्रदर्श्य निष्पन्नक्रमस्थानां मुद्रामाह । ब्रह्मेत्यादि । चतुर्वर्णानामन्यतमकन्यामादाय वज्रधर्मात्मा वज्रवदभेद्यो धर्मः निष्पन्नयोगः । तदात्मा तदधिगतवान् इदं गुह्यसमावहम् । गुह्यः महा-वज्रधरः तत्समावहम् तन्निष्पादनं साधयेत् कुर्यात् ।

तच्चाभिसंबोधिक्रमेण निष्पाद्यम् तदुपायं दर्शयन्नाह । अस्तंगत इत्यादि वज्रार्के सूर्ये अस्तं गते सन्ध्याकालमतिक्रम्य विनष्टे यथालब्धोपकरणेन गुरुमाराधयेत् । ततो गुरुप्रसादादर्धरात्रे प्राप्ताभिषेकः अरुणोद्गमवेलायां रात्रिभागापगमे सूर्योदयात् प्राक् भावनोत्तमैरभिसंबोधिक्रमोपदेशैः सिध्यते विशुद्धो भवतीत्ययं वाह्याभिसंवोधिक्रमः ।

अध्यात्ममाह । वज्रेत्यादि । वज्रार्के उपायज्ञाने समापत्तिलक्षणे समु[द्]-भूय भूयोऽस्तं गते प्रज्ञाभावमापद्य निरुद्धे साधनं प्रभास्वरं पूर्व[ां]गं मत्वा प्रभास्वरसाधकं आलोकोपलब्धकं समारभेत् प्रादुर्भवति । अरुणः अविद्या

तस्योद्गमवेलायां अतिक्रमणकाले साधको भावनोत्तमैः शून्यातिशून्यमहाशून्यैः हेतुप्रत्ययैः सिध्यते प्रभास्वरसाक्षात्करणेन महामुद्रासिद्धिर्भवति ।

सा कीदृशीत्याह । सर्वेत्यादि । सर्वालङ्कारसम्पूर्णां सर्वलक्षणमण्डितां गन्धपुष्पविभूषितां दशबलवैशारद्योपेतां वज्रसत्त्वाः साधकाः तेषामग्रां सिद्धिं महामुद्रानिष्पत्तिं लघु क्षिप्रमवाप्नुयात् ।

एवं सिद्धः त्रिकायवरदः त्रैलोक्येप्सितवरप्रदः बुद्धलक्षणानि प्रसिद्ध-लक्षणानि तैर्लक्षितः तैरुपेतः योजनशतविस्तारस्योपलक्षणार्थत्वात् त्रिसाहस्रादौ लोकधातौ स प्रभयावभासं करोति ।

द्वयेन्द्रियप्रयोगः । सत्यद्वयाद्वैधीकरणेन महावज्रधरनिष्पादनं द्वयेन्द्रिय-प्रयोगः । तेन सर्वयोगशान्त्यादिकं समारभेत् । एषः अनन्तरोक्तनिष्पन्नसमाधिः सर्वसिद्धीनां लौकिकलोकोत्तराणां दुरतिक्रमो दुर्लङ्घ्यः समयो निष्पादकः ।

विण्मूत्रसमयं भक्षेदिति । विड् रूपादयो विषया मूत्रं चक्षुरादीन्द्रियाणि तयोः समयो विषयविषयीभावेन मीलनं तं भक्षेत् प्रत्याहारक्रमेणानुभूयात् वज्रिणः वज्री साधकः सिद्धिं महामुद्रासिद्धिं यदि प्रार्थयेत् । एषो हि समयः सर्वसिद्धीनां दुरतिक्रमो मार्गः ।

विण्मूत्रसमय इत्यादि । अनन्तरोक्तविषयेन्द्रियपुरःसरेण साधकेन द्वयेन्द्रिय-प्रयोगतः सत्यद्वयाद्वैधीकरणात् अनुत्तरं तत्त्वं बुद्धबोधिपदमप्रतिष्ठितनिर्वाणं शिवं कल्याणं तत्त्वमविसंवादि । अनुत्तरं सर्वसिद्धिविशिष्टं सिध्यते लभ्यते ॥

इत्याहेत्यादि संगीतिकारवचनम् । कामः संसारः मोक्षो निर्वाणं तौ सममेकीकृत्य एति जानातीति काममोक्षसमयवज्रो महावज्रधरः । सन्ध्याभाषा ।

एवं महावज्रधरसाधनमुक्त्वा पुनरपि लौकिकसिद्धिमुपक्षिपन्नाह । अथे-त्यादि । भगवान् महावज्रधरः महासमयाख्यो वज्रः क्रोधो यस्मिन् समये तन्नामकं समाधिं समापद्येमं सर्वतथागताः सर्वे साध्याः तेषां कायवाक्चित्त-वज्राणां सन्त्रासनकरं क्रोधं मन्त्रात्मकं स्वकायादिभ्यो निश्चारयामास ।

ओमित्यादिको मन्त्रः सर्पः ओमिति मन्त्रदेवतामहामुद्राप्रदर्शनं ह्रीरित्या-ह्वानं ष्ट्रीरिति विकृतवत्स्वरूपकथनम् । विकृतानन वीभत्समुख सर्वशत्रून् प्रत्यर्थिकान् नाशय स्तम्भय पलायतोऽप्यानीय विलयं प्रापयं हूँ हूँ इत्येतदर्थ-द्योतकं बीजम् । फडिति मारणद्योतकं बीजम् । स्वाहेति मन्त्रदेवतासमाश्वा-सनम् । अस्य विदर्भणं दृढवदिति ।

विषमित्यादि । कर्मयन्त्रादि विषम् । कृत्रिमं रुधिरम् । यथालब्धं लवणं तैलं राजिका प्रसिद्धा । समस्तमेकीकृत्य कण्टकाग्नौ मदनादिकण्टकेन्धन-प्रज्वालिते क्रुद्धो यमान्तकाद्यन्यतमक्रोधयोगवान् कन्यानामपदैः सहेति अभि-प्रेतनामाक्षरैर्विदर्भितं मन्त्रं पठन् तिलतैलादिभिरामोदयित्वा वक्ष्यमाणक्रमेण जुहुयात् ।

मध्याह्नेऽर्धरात्रे वा इदं स्तम्भनकर्म सर्वथा सैन्यादीनामपि गम्यते । त्रिकोणे त्र्यस्रे कुण्डे महासमयवज्रक्रोधं वज्रमुखविवृतं दंष्ट्राकरालं ललज्जिह्वं विभाव्याष्टसहस्रं जुहुयात् विधानतः सैन्यस्तम्भनादीनां स्वस्वविधानतः।

इदं विधानं दिवसत्रयं प्रयोक्तव्यम् । कन्यानां संबन्धि महाभोगाप्तिहेतोः स्तम्भनं कन्यायाः साधकादन्यस्मादनन्तेन प्रयोगेण भवति। कियत्कालमित्याह। त्रिकल्पो बाल्ययौवनमध्यानि तान्यतिक्रम्य यावदसंख्यमगण्यत्वं जराजर्जरितत्वं तावत् स्थास्यति । सदेति अन्तरालेऽपि ।

पुंसो योगाभावं दर्शयति । बुद्धो वैरोचनयोगी । वज्रधर्मः अमिताभ-योगी । वज्रसत्त्वोऽक्षोभ्ययोगी । रत्नयोगी कर्मयोगी । अन्यतमक्रोधयोगी वा यः कश्चिदतिक्रमेदिति इदं स्तम्भनं संछेत्तुमिच्छेत्, तस्य साधकस्य जीवितं तदन्तमिति तत्कर्मारम्भात् प्रभृति अन्तमवसानं भवति ।

अस्यैव मन्त्रस्य प्रयोगान्तरमाह । चतुर्दश्यामित्यादि । कृष्णपक्षस्या-ष्टमीचतुर्दश्योः शस्त्रहतपुरुषचित्यङ्गारं गृहीत्वा अष्टोत्तरशतसहस्रं कपाल-संपुटे संस्थाप्य जप्त्वा तेन वीरकर्पटके महासमयक्रोधवज्ररूपं यमान्तकवदा-लिख्यावाह्य हृदि पाणिना स्पृष्ट्वा अनन्तरोक्तमन्त्रमावर्त्य फट्कारानन्तर-ममुष्मै इदं दापय ह्रीः स्वाहेति मन्त्रः अर्द्धरात्रे मध्याह्ने वा अष्टोत्तरसहस्रं जपेत् । स साधकः सत्त्वानामभिमतफलदायको भवति सदा ।

अनेनैव मन्त्रेण प्रयोगान्तरमाह । रेखामित्यादि । पूर्ववत् जप्त्वा अङ्गारेण श्मशानकर्पटे यस्य कस्यचित् शत्रोः प्रतिकृतिमालिख्य हृदये नाम विदर्भ्य कृष्णदिने अभिचारुकवेलायां यथेष्टक्रोधसमाधिस्थो योगी ओं ह्रीः ष्ट्रीः विकृतानन अमुकस्य हृदयं पाटय साधेत्युक्त्वा शेषं पठन् तदङ्गारं शस्त्राकारं ध्यात्वा मस्तकादारभ्य द्विधाकरणाशयेन मध्ये रेखां दद्यात् । रेखाक्षणादेव भिन्नहृदयो म्रियते ।

मुद्गरमित्यादि। यमान्तकयोगवान् साध्यपादपांशुसहितनद्युभयतट-मृदा शत्रोः प्रतिमां कृत्वावाह्य विज्ञानमन्तर्भाव्यग्रम्। क्रुद्धः सन् फट्कारमुच्चारयन् मस्तके घातयेत्। एवं कृते पतति। ध्रुवमिति साध्य-शिरसि प्रत्यक्षेणैव मुद्गरं पतति। अथवा ध्यानेनापदं सर्वं संपादयेदिति। हूंकारमित्यादि। निसुम्भयोगवान् अनन्तरोक्तविधिना साध्यप्रतिकृतिं कृत्वा स्वहस्तस्थदीप्तवज्रं विकरालं हूँकारज्वालासंयुक्तं दीर्घहूँकारोद्भवकृष्ण-ज्वालाभिरवलीढं ध्यात्वा साध्यशिरसि प्रभावयेत्। पतितं ध्यायेत्॥

एवं कृते साधकः सर्वदुष्टानां नाशकः पातयिता भवति। कस्मिन् योगे स्थित्वा इदं कर्म कुर्यादित्याह। वज्रपाणिकुले स्मृत इति। वज्रपाणि-कुलं वज्रकुलं तस्मिन् कुले क्रोधो निसुम्भराजः निसुम्भयोगवान् अस्मिन् कर्मणि वज्रपाणिना स्मृतः अनुज्ञात इति यावत्। एतत् सर्वमध्यात्मपरायणो ध्यानेन संपादयेदिति। खटिकेत्यादि, येन केनचिद् वर्णकेन पुरुषं वा स्त्रियं वा श्मशानकर्पटादावालिख्य यमारिसमाधिस्थः स्वपाणौ दीर्घहूंकारपरावृत्तिजं कुठारं भावयित्वा फट्कारमुच्चारयन् तेन ग्रीवां छिन्नां विभावयेत्। बुद्ध-साध्यत्वेन ज्ञातः त्रिकायरत्नाग्रः विशिष्टकायवाक्चित्तात्मकः सर्वसत्त्वा हीनोत्कृष्टमध्याः तेषामसाकल्येनापि हितं संपादयतीति सर्वसत्त्वहितैषी राजा अतिप्रसादविहारी।

अनेन प्रयोगेण हन्यते प्रहतो भवेत्। यदि वा म्रियते पञ्चत्वं याति नात्र संशयः। कर्मवज्रमित्यादि। अमृतकुण्डलिसमाधिस्थो योगी पीतं विश्ववज्रं महादीप्तमभिमतदेशस्थगं (?) ध्यात्वा तन्मध्ये स्फुलिङ्गगहनाकुलं कल्पाग्नि-निभं करालवज्रमूर्ध्वशिखं ध्यात्वा तद्रश्मिनिवहैः वर्षद्वारिवृन्दं प्लुष्टं दग्धं ध्यायात्। वारिस्तम्भनं वर्षस्तम्भनमुत्तममुत्कृष्टम्।

मण्डल इत्यादि। वज्रधातुमहामण्डलादौ आचार्येण लिख्यमाने वात्याद्यं वात्या वातसमूहः। आदिशब्देनाशनिपातपाषाणवृष्टिमण्डलाधस्तादुदक-सर्पोद्गमादयोऽपि गृह्यन्ते। अनेन वात्याद्यं विघ्नं परप्रयुक्तं चौत्पातिकं वा यदि प्रमादात् जायते ततः दंष्ट्रामुद्रामिति दंष्ट्रा वासुकिप्रभृतयो नागाः उत्पीडनार्थं मुद्रा दंष्ट्रामुद्रा तं वद्ध्वा स्वीकृत्य दुष्टा विघ्नाः तेषां शत्रुः हय-ग्रीवः तमनुस्मरन् मनसा ध्यायन् स्वहस्तस्थप्रहरणैः विघ्नान् यथावत् निषेधयेत्।

बुद्धाः स्वयूथ्या मन्त्रिणः बोधिसत्त्वाः परयूथ्याः तैरपि निर्मितं प्रयुक्तं

विघ्नजातं यद्भवेत् दृष्टमात्रेण मुद्रादर्शनमात्रेण शीर्यते अन्तर्धत्ते। न चेत् यद्येवं प्रभृति क्रियते, नाशमवानुयात् प्रस्तुतकरणीयं न सिध्यति ॥

बुद्धश्चेत्यादि। ये स्वपरयूथ्या मन्त्रिणः ये चान्ये दुष्टजन्तवः प्राकृतसत्त्वाः त्रासितास्तर्जिताः। अनेन मन्त्रविजृम्भणेन म्रियन्ते नात्र संशयः।

तत्र रौद्रकर्मणि इदं वक्ष्यमाणं सर्वमन्त्राः सर्वतथागताः तेषां रहस्यम्। अमुकस्य हृदयमिति। क्रूरमन्त्राणां जीवितम्। किं तत्? फट् मारणे ॥

इदानीं पञ्चगुह्यमहातत्त्वस्वरूपं दर्शयन्नाह। ज्ञानसत्त्वेत्यादि। ज्ञानक्रमेण निष्पन्नसत्त्वः ज्ञानसत्त्वः तस्य प्रयोगः झटित्यालम्बनम्। तेनोपायेन मध्ये आसनचतुष्टये मध्यासने विम्बं महावज्रधरविम्बं प्रभावयेत्। चतुःस्थानेषु लोचनादिस्थानेषु मन्त्रज्ञो देवतातत्त्वज्ञो योषितो मन्त्रतन्त्रेष्वशिक्षिताः लोचनादिभावेन परिकल्पिताः चतस्रो योषितः सदा अहर्निशं संस्थापयेत्।

कीदृग्विधाः? सर्वालङ्कारसंपूर्णाः सर्वलक्षणलक्षिताः यथोक्तस्त्रीलक्षणोपेताः ततः पद्मं प्रसारितं कृत्वेति। स्वहृत्पद्मं मुखकमलं च प्रसारितं विकसितं कृत्वा इदं पञ्चात्मकं चक्रं मन्त्रं हूँकारं विभावयेत् जानीयात् चित्तमात्रमध्यवस्येदिति यावत्।

पञ्चरश्मीत्यादि। योगवज्रिणं विषयाकारेण स्थितं महावज्रधरं पञ्चरश्मयः चक्षुरादयः। तेषां प्रभा त्रिविधविषयग्रहणं तेन दीप्तं प्रस्फुटं भावयेत् इत्यभ्यसेत्। एवमभ्यस्य स्वकायादिषु विषयस्वरूपं वज्रिणं पातयन् मीलयन् बोधिं परमानन्दसुखमवाप्नुयात् अधिगच्छेत्।

एवं चरन् स योगी तत्क्षणादेवाचिरेणैव वैरोचनसमप्रभः कायवज्रतुल्यः वज्रसत्त्वोऽक्षोभ्यः महारागो रत्नसंभवः बुद्धोऽमिताभः त्रिकायवज्रधृक् अमोघसिद्धिः तैरपि तुल्यः स्यात्।

सर्वसत्त्वाः वैरोचनादयः तद्भावोत्पादकं वज्रज्ञानं यस्मिन् समाधौ सर्वसत्त्वोत्पादनवज्रो नाम ॥

इदानीमेकमुद्रयापि सहचर्यामाह। योषितमित्यादि। योषितं ब्राह्मणाद्यन्यतमकुलोद्भूतकन्यकां प्राप्य लब्ध्वा विधिना अत्रोक्तेन विधिना। कीदृशीं चारुवक्त्रां प्रसन्नवदनां हितैषिणीं साधकहिताम्। प्रच्छन्ने विजने मनोऽनुकूले पूजां समापत्तिं प्रारभेत्। गुह्यं रागादित्रयं गृह्य निश्चित्य विभक्षयेत् प्रभास्वरेण विशोधयेत् निराभासीकुर्यात्।

स एवमभ्यसन् योगी तत्क्षणादचिरेणैव मञ्जुश्रीर्महावज्रधरः तुल्यतेजसा तत्तुल्यप्रभावेण युक्तः अन्तर्धानं प्राकृतात्मभावपरित्यागः ततः पतिः प्रभुः मुद्रया सह सिद्धत्वात् । श्रीमान् जाम्बूनदसमप्रभः रत्नकेतुसदृशो भवति । गगनगञ्जसमाधिना सत्त्वार्थसंपादनात् ।

इदानीं साधकस्याहारकृत्यं दर्शयन्नाह । भक्ष्यं लोकसाधारणमन्नादिकं विष्ठं गोमयादिकं मांसं यथालब्धमन्यद् वा किंचित् अभिमन्त्र्य साधनादिक्रमेण संस्कृत्य हृत्कण्ठे च संशोध्य प्रवेशयेत् । अस्य विधानतः विधिना बुधैः पण्डितंमन्यैः दुर्गतैर्न दृश्यते न ज्ञायते अयं क्रमः ।

इत्याह च महावज्रधर इति वक्ष्यमाणापेक्षया ॥

विष्ठं तदहतिर्भकस्य चर्चः (?) । विधानेनेति अमृष्टभूमिकं गृह्य शरावसंपुटे कपालसंपुटे न्यसेत् स्थापयेत् । ततः शताष्टवारान् अष्टोरशतं संचोद्य त्र्यक्षरेणाभिमन्त्र्य गुलिकां कृत्वा त्रिलोहेनावेष्टयित्वा मुखे प्रक्षिपन् बुद्धसूर्यैः सिद्धविद्याधरैरपि न दृश्यते इति प्रयोगानुशंसः ।

श्वानेत्यादि । श्वहयमनुष्याणां पिशितं गतायुषा विधानतोऽनन्तरोक्तविधिना गृह्य कपालसंपुटयोगेन तथैवाभिमन्त्र्य गुलिकां कृत्वा भक्षयन् मुखे निक्षिपन् तैः सिद्धादिभिः न दृश्यते ।

विष्टेन सह संयुक्ताममृतचतुष्टयघटितां गुलिकां त्रिलोहवेष्टितां सुतरुवेष्टितां द्वयेन्द्रियप्रयोगेणेति राहुग्रहणे स्पर्शादारभ्य योनौ प्रक्षिप्य यावन्मोक्षस्तावत् समापत्तिं कृत्वा ततोऽपनीय निमित्तमवलोक्य धूमायते तदा सिद्धिरिति ज्ञात्वा मुखे प्रक्षिपेत् । तदा सर्वबुद्धैर्न दृश्यते ।

तथैव महामांसेन पञ्चामृतेन सहितां गुलिकां त्रिलोहवेष्टितामनन्तरोक्तद्वयेन्द्रियप्रयोगेण साधयित्वा मुखगतां कृत्वा सर्वबुद्धैर्न दृश्यते ।

गोमांसेन श्वानमांसेनेत्याद्यनन्तरोक्तोपदेशेन नेयं प्राणकैर्विष्टेन सह वहिर्गतैः सत्त्वैः सह गुलिकां परामृतेन कारयेद् व्रती चीर्णव्रतः द्वयेन्द्रियप्रयोगेण पूर्ववत् साधयेत् कर्पूरचन्दनैः रक्तचन्दनैः सह पञ्चामृतेन गुलिकां कृत्वा पूर्ववत् साधयेत् । रोचनाकृष्णागुरुभ्यां सह गुलिकां कृत्वा पूर्ववत् साधयित्वा मुखे प्रक्षिप्य पर्यटन् महावलोऽप्रतिहतवीर्यो भवति ।

कर्पूरकुङ्कुमैर्युक्तां पञ्चामृतेन तथैव साधयेत् । इत्याह च ।

वक्ष्यमाणकमिदानीं लोकेत्तरसिद्धिप्रदर्शनार्थमाह । अधिष्ठायेत्यादि । माण्डलेयदेवतानां मध्ये यमान्तकादेर्यस्यापि महामुद्रां रौद्रां शान्तां वा अधिष्ठाय

निष्पाद्य विनेयजनावर्जनार्थं शान्त्यादिकर्म साधयित्वा तादृग्भवतीत्येतदेव न। केवलं तु स योगी यादृशो महावज्रधरः तादृशः संजायते अष्टगुणैश्वर्य-योगात्। श्रीमान् त्रैलोक्यशासकत्वात्। महाबलपराक्रमः। एकक्षणेन संपूर्ण-योजनकोटिप्रमाणं भूमेरुपरिष्टात् गतिर्भवेत्। भूमेरधस्तादपि तावत्प्रमाणमेव वज्र[स्य]ाशनेरिव गतिः। तथैव पूर्वासु दिग्विदिक्षु क्षणेन त्रिसाहस्रलोक-धातावप्रतिहतगतिर्भवति, अनेक मुद्रागणपरिवृतत्वात्। श्रीमान् दशबल-वैशारद्यादिगुणसमन्वितो बुद्धः। अयमपि तथाविधत्वात् तत्सदृश इत्यभि-प्रायः। एवमनावरणगतिः यथारुचिगतित्वात्।

कामधात्वित्यादि। चातुर्महाराजकायिकाः त्रयस्त्रिंशत् यामतुषित-निर्माणरतिपरनिर्मितवशवर्तीति षड्विधः कामधातुः। तत्र स्थितां कन्यां सुरभोगां सुराणामिव भोगो यस्यास्तां सुरभोगां चक्रवर्त्यादीनां कन्यां किला-नीय कुलानि नागासुरकुलानि तेषु प्रभां तत्प्रतिबद्धां कन्याम्, न केवलं कामधातुस्थितां कामयति, यदि सन्ति रूपधातौ स्त्रियस्ताश्च कामयति इत्यतिशयोक्तिं दर्शयति।

समयसत्त्वाख्यः प्राकृतकायः सोऽन्तर्धीयते येन महावज्राख्येन सत्त्वेन स समयान्तर्धानमहावज्रो वज्रधरः एवमाहेति संगीतिकृत्।

अथेत्यादि। बुद्धाः रत्नपुद्गलाः पूर्वं श्रवणमात्रेण भ्रान्तचित्ताः अर्थ-स्यात्यद्भुतत्वात् पश्चा[च्]चित्ता भावनामयेनाधिगतत्वात्। मनीषिणः उदितज्ञानाः तदनन्तरं प्रहृष्टात्माः देशकप्रसादेन तेनैव विस्मयेन विक-सितनयनाः इदं वक्ष्यमाणं प्रहर्षसूचकं वचनमुदीरयन् कृतवन्तः।

अहो इत्यादि। एकेनैव मन्त्रेणानेककर्मप्रसाधनं यत् तदिदं अहो सुवि-स्मयमित्याश्चर्यम्। स्त्रीभिः सह क्रीडनं लौकिकलोकोत्तरसिद्धिं साधयेदिति। यद् गुह्यपदाक्षरं तदप्याश्चर्यम्। तत्पश्चामृतप्रदीपादिगुलिकाभिः यतः सिद्धि-सम्पत् तद्धर्माणां स्वभावशुद्धत्वम्। एतदप्याश्चर्यम्। यां कांचन महामुद्रा-मालम्ब्य कर्म संसाध्यते महावज्रधरपदं यत् प्राप्यते तत्रालिप्तता सुनिर्मलत्वं तदप्याश्चर्यम्। सन्ध्याभाषा।

इदानीं कुलभेदेन स्वाधिदेवताभिषेकमाक्षिपन्नाह। अथेत्यादि। वज्रधरः शास्ता सर्वदुष्टनिग्रहात् शास्ता लौकिकादिसिद्धिसंपादनात् कर्ता वैराचनादीना-

मुत्पादकत्वात् स्रष्टा । अथ च षष्ठस्वभावत्वात् महाक्षरः बुद्धो वैरोचनः वज्रोऽक्षोभ्यः । महाधर्मोऽमिताभः त्रिवज्रात्मकः वज्रघोषमकार्षीत् कृतवान् ।

सत्त्ववज्रोऽक्षोभ्यः तस्य प्रयोगतः मूर्ध्नि धारणं तेन सत्त्ववज्रमक्षोभ्यं कुलीनानां तोषमभिषेकः बुद्धबोधिः वैरोचनः तस्य प्रभेदः । सुकुलीनानां मूर्द्धसु पृथक् स्थित्वा तोषणमुद्दीपनं तेषां बुद्धवज्रिणां वैरोचनकुलीनानाम् ।

वज्रलोचनेति । वज्रलोचनादीनामिति ग्राह्यम् । विम्बाद्यैर्विरोचनादिरूपैः उष्णीषाराधनं शेखरीकरणं स्मृतं ज्ञातव्यम् । क्रोधानामपि तत्कुलप्रतिबद्धानां बुद्धवज्रा वैरोचनादयः तैः प्रभावनं तैर्मकुटे स्थित्वोज्ज्वलीकरणं श्रेष्ठमिष्टतरम् ।

विद्या मामकी तस्या राजाग्र[:] रत्नसंभवः सोऽग्रधर्मा प्रभुर्येषां ते विद्याराजाग्रधर्माणः तेषां रत्नकुलीनानां रत्नकेतुविभावना मकुटे रत्नकेत्वभिषेचनं कर्तव्यम् । विद्याराज्ञी पाण्डरवासिनी तया प्रयोगः संबन्धसंबन्धात् येषां ते विद्याराज्ञीप्रयोगाः तेषां पद्मकुलीनानाममितायुर्विभावना मकुटेष्वमिताभस्थापना कर्तव्या ।

सर्वकर्मिकमन्त्राः कर्मकुलीनाः तेषाममोघा ज्ञानविभावना मकुटेषु सर्वेषामेव मन्त्राणां कुलाधिपानां वैरोचनादीनां वज्रसत्त्वविभावना मकुटेऽक्षोभ्यविभावना कर्तव्या ।

यक्षिण्यो वज्रवेतालिप्रभृतयः तेषां मन्त्रा[णा]मुत्पत्तिबीजादयः ते तन्त्र्यन्ते साध्यन्ते यैर्मुद्रारूपैस्तेषां यक्षिणीमन्त्रतन्त्राणामभिषेकस्थाने यमान्तकस्यैव कल्पनं स्थापनं कर्तव्यम् । सर्वेषामनन्तरोक्तानामभिषेके युज्यन्त इति योगाः तेषां योगमन्त्राणाम् ऊर्ध्वस्थितानां प्रचोदनं स्वस्वमुद्राभिः सह महासुखानुभवनं शस्तं समाप्यायनम् ।

इत्याह भगवान् महासमयवज्रो वज्रधरः ॥

अनेनानन्तरोक्ताभिषेकध्यानविस्तरेण मन्त्रा देवताः तेषामाराधनमण्डलम् आराधने मण्डाः साराः तान् लाति गृह्णातीति मन्त्राराधनमण्डलं महासमयसाधनम् । साधकानां घटमानानां हितं हितावाहकं प्रोक्तं महासमयो महामुद्रा तत्साधनं निष्पादकमिति ।

इदानीं पात्रावेषविधिमाक्षिपन्नाह । अथेत्यादि । सर्वविघ्नोपशमकरत्वात् शास्ता सर्वधर्मा रूपस्कन्धादयः तेषु नायकः सर्वधर्मेश्वरः त्रैधातुकाधिपत्वात् ।

प्रभुः त्रिवज्राभेद्यस्वभावात्मकत्वात् । कायवाक्चित्तसंशुद्धः ज्ञानवज्रमतीतादि-ज्ञानविधिरभेदात् ज्ञानवज्रं तमुदीरयन् कथयामास ।

पर्वताग्रेष्वित्यादि । पर्वता इव पर्वताः महाप्रासादाः तेषामग्रेषूपरिभूमिषु रम्येष्वपि विजनेषु जनसंपातरहितेषु वनेषूद्यानादिषु एषामन्यतमे स्थाने मनोऽनुकूले साधकः शक्त्या समाधानार्थं ध्यानवज्रं द्विविधमहामुद्रालम्बनं कुर्वीत जपमन्त्रप्रयोगतः जपो वज्रजापः मन्त्रो वाग्जापः उभयोः प्रयोगोऽनु-ष्ठानम् ।

कस्मादेवं क्रियत इत्याह । वज्रेत्यादि । वज्रसत्त्वादयः अक्षोभ्यप्रमुखाः मन्त्रध्यानप्रचोदिताः स्वमन्त्रेण स्वमुद्रालम्बनेन च प्रचोदिताः प्रेरिताः चित्र-कर्माणि विविधकर्मपथानि कुर्वन्ति निष्पादयन्ति । वाचः कर्म क्रिया यस्य यत्प्रतिबद्धा स वाक्कर्माभिताभः तस्य वचो यथावद् द्वयं नानाविधं कर्म करोति ।

एवं कृतपुरश्चरणः साधकः स्वयमक्षोभ्ययोगवान् पात्रं तथताचन्द्रबीजचिह्न-क्रमेण वज्रधर्ममहाविम्वं पद्मरागप्रभं ध्यात्वा शिरःकण्ठहृद्देशेषु त्र्यक्षरं विन्य[स्य] तस्मिन् कायवाक्चित्तवज्रं त्रिविति व्यूहत्रयमन्तर्भावयेत् । एतत्त्रिस्थाने कुल-कल्पनमुच्यते ।

एवं पात्रसंस्कारं कृत्वा आवेशनविधीन् सर्वान् वक्ष्यमाणकान् कारयन् संपादयन् ध्रुवमेकान्तेन सिध्यते प्रसिद्धिमुपगच्छति । स्तोभस्तम्भेत्यादि । स्तोभमुत्पतनकम्पनभ्रमणम् । स्तम्भो नाम देवतावेशात् पूर्वं पात्रस्य प्राकृ-ताहङ्कारमपनीय स्तिमितभावेन काष्ठवत् स्थित्यवस्था स्तम्भनम् । महान्तो लोकोत्तरा वज्रसत्त्वादयो दिव्याः प्रविश्य यस्मिन्नावेशक्षणे तिष्ठन्ति तन्महा-दिव्यम् अतीताद्यर्थानां यथावत् प्रकाशनमार्यपथं एतदावेशचतुष्टयं सिद्धिः वज्रस्वभावा यस्य तेन सिद्धिवज्रेण चीर्णव्रतेन कर्तव्यम् । एवं कृते शाश्वतं सर्वदा सिध्यति प्रसिद्धिमुपगच्छति ।

पात्रलक्षणं निर्दिशन्नाह । द्वादशेत्यादि । द्वादशवर्षप्रमाणामक्षतयोनिं कन्यां तावद्वार्षिकमेव कुमारमज्ञातस्त्रीविषयं सर्वलक्षणसंपूर्णमित्यविकलाङ्गो-पाङ्गं गृह्य पूर्वोक्तक्रमेण संस्कृत्यावेशं चतुर्विधं चतुष्प्रकारं प्रकल्पयेत् कुर्यादिति । विधानानि तु सर्वाणि पात्रसंस्कारादीनि कृत्वा पूर्ववन्निष्पाद्य

तदनन्तरमावेशकर्मप्रसाधनं कर्तव्यम् । अन्यथा नो चेत् । त्रैधातुकेषु जन्तुषु हीनमध्योत्कृष्टेषु जन्तुषु निन्दितो भवति ।

तत्रावेशनविधाने इमानि हृदयमन्त्राक्षरपदानि हृदयानि हृत्संभूतत्वात् । मन्त्राणि रहस्यत्वात् । अक्षराणि हूँकारादीनि चत्वारि तान्येव पदानि आवेशप्रतिष्ठाभूतत्वात् ।

अनेन क्रमेणावेशयन् साधकः विज्ञानविगमात् खधातुवत् शून्यीभूतं निश्चेष्टं मृतकायं आवेशयति विधिना आवेशविधिना तं सर्वकल्पविवर्जितं कल्पनारहितं वज्रसत्त्वमपि स्वयम् साक्षादावेशयतीति भावनामाहात्म्यं प्रकटितम् ।

अक्षरचतुष्टयस्य प्रयोजनमाह । हूँकार इत्यादि । हूँकारे वज्रसत्त्वात्मा चित्तवज्रः स्थितः । हः कारे कायवज्रः स्थितः । आ[ः]कारे धर्मधरो राजा अमिताभः स्थितः । इदं गुह्यपदं दृढं पदं दृढमावेशविषये ।

सैःकारे स्तोभनमुत्पन्नं प्रोक्तम् भ्रमणं चक्रवत् परिभ्रमणं कम्पनं चलनमपि सैःकारेणैव स्मृतं ज्ञायते । एषो ह्ययं सैःकारः सर्वस्तोभानां स्तम्भादित्रयाणामपि रहस्यः हृदयभूतः प्रगीयते कथ्यते ।

एवमुक्तविधिना आवेशे सति भूतलाद्धस्तमात्रादिकमाकाशमुत्पतन्ति । वज्रराजेनाक्षोभ्यसमाधिना हूँकारादिमन्त्रेण प्रचोदिता उद्दीपिताः वज्रसत्त्वाज्ञालङ्घनभयात् त्रस्ताः भ्रान्ता उत्तिष्ठन्ति ।। तथैवेत्यादि । इदमन्तिमं बीजं यथा येन प्रकारेण गुह्यसमावहम् आवेशकृत् तथा परिशिष्टमपि बीजत्रयं यथापूर्वमन्त्यात् प्रभृति यावदादि बीजं तथैवावेशकृदिति ।

एतदत्रमीलनम् । प्रथमं तावत् साधकः पर्वतादिमनोनुकूलस्थाने कृतपुरश्चरणः स्थिरचित्तः पात्रावेशचिकीर्षया यथावदक्षोभ्यसमाधिमालम्ब्य लक्षणोपेतं पात्रमधिवास्य यथावदमिताभीकृत्य शिरःकण्ठहृद्देशेषु त्र्यक्षरं विन्यस्य तत्र व्यूहत्रयमन्तर्भाव्य पात्रमापादतलात् सुशिराकारं ध्यात्वा अधस्तादनिलमण्डलोपरि स्थितः रक्तरौःकारविनिर्गतोर्द्धमुखरश्मिनिवहैः पादतलमध्यप्रविष्टैः यावदामस्तकप्राप्तैः शरीरं संशोध्य ज्ञानसत्त्वं प्रभास्वरं प्रवेशयेत् । ततः स्तम्भो भवति । पुनर्व्युत्कालार्थं पात्रहृत्पद्मोपरि हूँकारं ध्यात्वा ततः परावृत्तिजं वज्रसत्त्वं ध्यायात् । तथैव शिरसि हःकारपरावृत्तिजं कायवज्रं पुनः कण्ठपद्मे आःकारजमभिताभं ध्यात्वा । पुनः सैः-

काररश्मिभिः संचोद्योपायज्ञानोदयं कृत्वा महादिव्यावस्थां प्रापयेत् । पात्र-मामाविष्टं ज्ञात्वा स्तोभाद्यर्थं बीजचतुष्टयं घण्टावादनेन सहोच्चारयन् ध्याये-[दि]च्छेत्तत्। त्रोद्भ्रमणादिना पात्रस्यावेशदार्ढ्यमधिगम्यार्थयथावस्थाप्रापणार्थं कण्ठदेशस्थितं वाग्वज्रिणं हृद्देशमतिक्रम्योद्गतैः रश्मिपुञ्जैः संचोद्यमानं ध्यात्वा ब्रूहि वज्रेति ब्रूयात् । यत् सत्यं तत् कथयति । एवं कृत्वा पुष्प-पातनादिप्रयोजनं निर्वर्त्य हूँ हः आः मुरित्युदीरयन् पात्रं स्वस्थाने स्थाप-यित्वा कवचादिना रक्षयेदिति ।

एवं पात्रावतारेण स्वकृत्यं परकृत्यं [च] निश्चित्य दुष्टदमनप्रवृत्तस्य साधन-माह । अथेत्यादि । सर्वतथागता लोचनादयः । तेषामधिपः त्रिकायवाक्चित्त-स्तस्य पदं प्रभास्वरं तेन संशुद्धः इदं वचनमब्रवीत् ।

अनेकाग्र[ग]तेनापि कृषिवानिज्योत्सवादौ प्रवृत्तेनापि दृढव्रतैः शत्रुनिग्रह-तत्परेण नान्ययोगेनेति । अधिपतेरन्यो वैरोचनादिसुम्भपर्यन्तास्तेषां योगोऽन्य-योगः तस्मादक्षोभ्ययोगेनेदं दुष्टविदारणं कर्तव्यमिति यावत् ।

शत्रोः प्रतिमां श्मशानाङ्गारविषधत्तूरकराजिकालवणतैलादिभिः कृत्वा संस्थाप्याभिचारुकद्रव्येणैव श्मशानकर्पटे साध्यनाम लिखित्वा प्रतिमाहृदये गोपयित्वा आवाहनपूर्वकं दक्षिणाभिमुखो भूत्वा दिगम्बरः मुक्तकेशः यमान्त-काद्यन्यतमक्रोधमन्त्रं पठेत् । त्रैलोक्यमपि नाशयेदित्यतिशयोक्तिः ।

शत्रोरित्यादि । चितिभस्मना कटुतैलमर्दितेन शत्रुप्रतिकृति[ं] कृत्वा तद्विज्ञानमन्तर्भाव्य तद्वदक्षोभ्यसमाधिस्थो योगी सहस्रमष्टोत्तरशतं वा क्रोधमन्त्रं पठन् अवश्यं मारयति ।

गोमांसेत्यादि । चितिभस्मना त्रिकोणमाग्नेयमण्डलं श्मशाने संलिख्य तस्मिन् कटुकेन्धनेनाग्निं समाधाय गोमांसादिना शत्रोः प्रतिकृतिं कृत्वा आवाहनपूर्वकं पूर्ववज्जपन् छित्वा छित्वाग्नौ जुहुयात् । बुद्धोऽपि नश्यतीति कर्ममाहात्म्यम् ।

महामांसेत्यादि महामांसेन पूर्ववत् कृतं यन्नाशनं कर्म । सर्वेषां गोमांसादि-कृतानां मध्यवज्रजं क्रूरतरं स्मृतम् । अतएवाह । एषो हि सर्वशत्रूणां नाशको दारुणः स्मृत इति ।

शत्रोरित्यादि । अग्रधर्मिणां चण्डालादीनां विण्मूत्रेण शत्रुप्रतिकृतिं कृत्वा

आवाहनपूर्वकं मन्त्रमुच्चारयन् त्रिकोणकुण्डे कण्टकाग्नौ छित्वा क्षिपेत् । बुद्धोऽपि नश्यति ।

इत्याह च ॥

शत्रोरित्यादि । नदीस्रोत इति । पश्चिमसमुद्रगामिनी नदी तस्य उभयतटमृत्तिकां संगृह्य शत्रुप्रतिकृतिं कृत्वा शृङ्गीविषादिकैर्मदनकण्टकैः संकोचादिविषसर्पकण्टकैर्वा तिलबीजमात्रमन्तरीकृत्य प्रतिदेहं पूरयन् निखनेत् अमुकं मारय फडिति चोदयन् । ध्रुवं बुद्धोऽपि नश्यति ।

इत्याह च ॥

राजिकेत्यादि । राजिकादिद्रव्यैः शत्रुप्रतिकृतिं कृत्वा तथैव कण्टकाग्नौ जुहुयात् । इदं मारणकर्म सर्वबुद्धानां साध्यत्वेनाभिसंमतानामिदं प्रधानतमं मारणं कर्म ।

रत्नत्रयापकारिणां निषेधनाय उत्पत्तिक्रमिणामुक्तम् । निष्पन्नक्रमस्थानां तु पुनर्मारणं नवमपटलोक्तन्यायेन ज्ञातव्यमिति ।

अङ्गारेत्यादि । श्मशानाङ्गारोदकेनार्द्रीकृतं प्रावृत्य क्रुद्धचित्तः लिङ्गं राजिकादिघटितं शत्रुप्रतिकृतिमक्षोभ्ययोगवान् पादेनाक्रम्यामुकं राक्षसैः गृह्णापयेति चोदनापदान्वितं सुम्भराजं मन्त्रं पठेत् । राक्षसैर्गृह्यते ।

प्रतिकृतिरित्यादि । नरास्थिचूर्णेन विषरुधिरसमन्वितां शत्रुप्रतिमां कृत्वा अनन्तरोक्तक्रमेणाक्रम्य जपेत् । एवं कृते प्रयोगसामर्थ्यं दर्शयति । वज्रसत्त्वोऽपि राक्षसैर्गृह्यत इति ।

लिङ्गमित्यादि । राजिकाविण्मूत्रेण शत्रुप्रतिमां कृत्वा तथैव पादेनाक्रम्य महादाघेनामुकं गृह्णापयेति अमृतकुण्डलिमन्त्रं पठन् दाहज्वरमुत्पादयति साध्यस्य ।

तत्रेत्यादि । यावन्त्यनन्तरोक्तानि रौद्रकर्माणि तेषु इदमुद्दिश्यमानं सर्वतथागतमहावज्रक्रोधोऽमृतकुण्डलिः तस्य हृदयम् । मारणविषये महत्तरो मालामन्त्रः ।

नम इत्यादि व्याख्यातपूर्वम् ।

होमं चेत्यादि । होम उक्तप्रकारः । ध्यानं वक्ष्यमाणलक्षणम् । तं होमं तद्ध्यानं वा कायवाक्चित्ताभिनन्दनं शत्रोः कायादिविनाशनं नान्यचित्तेनाग्रमनसा इदमुत्तरं मारणं कर्तव्यम् ।

वज्रसत्त्वमित्यादि। वज्रसत्त्वं महावलपराक्रमं विकटोत्कटभीषणं भ्रूभङ्गादिसमन्वितं हिंसापरं कुठारमुद्गरगृहीतं हस्तं साध्यमीदृग्विधं तावद् ध्यात्वा इदं प्रस्तुतं ध्यानं प्रकल्पयेत्।

तत्र मारणविधौ इदं महाक्रोधोऽक्षोभ्यः तस्य समयलङ्घनीयं वचनम्। खधातुं गगनकुहरं श्रावकप्रत्येकसम्यक्संबुद्धैः परिपूर्णं प्रभावयेत्। तेन दुष्टेन साध्येन मुद्गरेण प्रहृत्य कुठारेण छित्वा खादितं मारितं ध्यात्वा अतीतमनागतं वा कर्म कुर्यात्। एवं कृते तत्क्षणात् म्रियते।

बुद्धाः शासनसंस्थाः शीलादिगुणसंपन्नाः। बोधिसत्त्वाः तत्प्रतिवद्धाः पञ्चशिक्षादिसमन्विताः तत्परिपूर्णं मर्त्यलोकं भावयित्वा तेन दुष्टेन घातितं ध्यात्वा कर्म कुर्यात्। म्रियते वज्रधरः स्वयमित्यतिशयोक्तिः।

चिन्तयेदित्यादि। अनन्तरोक्तप्रकारेणोपार्जितकल्मषं कौकृत्येन भीतमत एव भयाकुलं निःशरणं चिन्तयित्वा कर्म कुर्यात्। म्रियते नात्र संशयः।

ध्यानेन मारणमाह। राक्षसैरित्यादि। विविधैर्मांसमेदोमज्जाहारादिभिः क्रूरैः हिंसात्मकैः प्रचण्डैरिति भयानकैः क्रोधदारुणैः क्रोधधूमानलदुर्निरीक्ष्यैः त्रासितं साध्यं ध्यायात्। तेन ध्यानेन म्रियते वज्रधरः स्वयमित्यतिशयोक्तिः।

उलूकैरित्यादि सुगमम्॥

कृष्णसर्पमित्यादि। विषसंसृष्टतया कृष्णवर्णं कृष्णसर्पं महाक्रूरं अतिभयानकं भयस्यापि भयजननं पञ्चफणं द्विजिह्वं दंष्ट्राकरालमालिख्य विषाग्रसमयं स्थावरजङ्गमं विषं ह्रीकाररश्मिभिः कृष्णैराकृष्य ललाटे खंकारगर्मे मुखे ध्यायात्। तत इदं सर्परूपं विशिष्यते प्रसर्पयति। ततस्तं चोदयेत् अमुकं भक्षयेति। भक्षितस्तेन सर्पेण ध्रुवं सोऽपि नश्यतीति।

वृश्चिकादीनामप्येष विधिरिति।

दशदिगित्यादि। दशदिग्लोकधातुव्यवस्थितसर्वसत्त्वानां सम्वन्धिन्या ईतेः सर्पज्वालाख्यादिकृतस्य भयस्य धातुक्षोभजनितविकारस्य तेभ्य आकृष्य कृष्णभूतरूपेण ध्यात्वा रिपवे शत्रुसन्ताने निपातनं स्थापनं कर्तव्यम्। इदं चोदनं भावनं श्रेष्ठं दुष्टदमने वलवत्तरमुत्तममन्यचोदककर्मापेक्षया।

एवमुपचितकल्मषं साध्यं पुरतः संस्थाप्य यमान्तकयोगेन मुद्गरेणो[र]सि ताडयेत् साधकः। एवं कृते शत्रुः जीविताद् वियुक्तो भवति। महावज्रधरवचनमिदम्।

तस्यैव साध्यस्यास्फालनं उक्तेन भिण्डिपालादिना कुट्टनं वज्रिणा साधकेन चिन्त्यते। एवं कृते त्रिकायवरदः त्रिविधसत्त्वेषु फलदः वज्रसत्त्वः स्थिरवीर्यो दारुणः उपचितकल्मषः साध्यो म्रियते।

साध्यस्यारोग्यपुष्टयर्थं जपहोमादिभिः तद्धिताकांक्षिभिः प्रयुज्यमानाः क्रिया रक्षादि तस्याप्यादि तत्कारणको मन्त्रो मन्त्राणि साध्यजाप्यमानानि मालामन्त्रादीनि देवतानि च साध्याराध्यमानानि कीलयेत् छिन्दयात्। परविद्याच्छेदकविधिविधानात् स्तम्भयेच्च। एष क्रमो मारणविषये अग्राग्रः विशिष्टतरः दुरतिक्रमः अलङ्घनीयः समयः वज्रसत्त्वप्रज्ञप्तिः।

अत्र मारणविषये विशुद्धिमाह। स्कन्धेत्यादि। स्कन्धवज्रेण पञ्च-स्कन्धात्मकत्वेन अस्मिन् त्रैधातुकोत्तरे यावन्तः सत्त्वाः अण्डजादयः तिष्ठन्ति तान् सर्वान् घातनेन मारणेनात्मगतान् स्वात्मगतान् वज्रसत्त्वत्वमापन्नान् चिन्तेत् जानीयात्। एवं तुष्यन्तीति। ते मारिताः सत्त्वाः मन्त्रिणा अनेन प्रकारेण साधिताः तुष्यन्ति, अक्षोभ्यभवने रमन्ते। अन्यथा शस्त्राद्युपघातेन नाशिता न एवं भवन्ति।

तामेव विशुद्धिं प्रकटयन्नाह। बुद्धेत्यादि। बुद्धः कायवज्रः वज्रधरः चित्तवज्रः वज्रधर्मो वाग्वज्रः वज्रिण एते त्रयः कायवज्रादयः पिण्डग्राहं न भेदाभ्यां तथतालम्बनेन म्रियते। यथा परसन्तानवर्तिनो नश्यन्ति तथा स्वसन्तानवर्तिनोऽपीति मारणव्यपदेशेन परमार्थसत्यालम्बनमेव सूचितम्। निष्पन्नक्रमसमाधिसमापन्नस्यायं मारणविधिः। महावज्रधरवचनमिदम्।

महाक्रूरसमयो महावज्रधरः तस्मात् निर्गत्यैकीभावमापन्नो द्वेषवज्रः वज्रक्रोधः एवमाहेति संगीतिकारकः।

अथेत्यादि। वज्रधरो द्वेषवज्रः राजा दीप्यमानः सर्वाकाशः सर्वशून्यात्मकः अतएव महामुनिः सर्वेषामभिषेकः क्षर[णं] तं संबुद्धः ज्ञातवान् ज्ञानवज्रं चिन्तामणिप्रख्यमीप्सितफलप्रदम् अविनश्वरप्रभावमुदीरयन् वक्षमाणोदान-गाथया प्रकटयामास।

अहो इत्याश्चर्ये। स्वभावसंशुद्धं सर्वविकल्पापगतत्वात् स्वभावरहितं वज्रयानं प्रभास्वरमनुत्तरं यस्य प्रभावात् अनुत्पन्नेषु कारणरहितत्वात् अजातेषु धर्मेषु उपात्तानुपात्तभूतेषु शान्त्यादिकर्मप्रसरणानुत्पतिः संभवः तैस्त्रैकाल्य-वर्तिभिस्तथागतैः कथिताः।

तत्त्वेत्यादि। धर्मनैरात्म्ये स्थितस्येदं वक्ष्यमाणं क्षुद्रैरल्पकैरुपकरणैः साध्यत इति क्षुद्रसाधनकर्म। तथापि सारभूतत्वात् वज्रं तस्मादेव गोप्य-त्वात् रहस्यम् ॥

खटिकेत्यादि। खटिकयाङ्गारेण येन केनचिद् वा वर्णकेण सर्पमेकफणं त्रिफणादियुक्तं वा विकृतं विरूपं भयङ्करं कृष्णप्रभोत्कटं क्रु[द्धं] द्विजिह्वं स्फरज्जिह्वाद्वयं एकैकस्मिन् मुखे दंष्ट्रामालाकुलं चिन्तयेत्।

तत्र तस्मिन्निदं प्रस्तूयमानं क्रूरनागचोदनाहृदयं बीजं चिन्तयेत् ॥खं॥ नागवक्त्रोदरेषु कृष्णं खंकारं विन्यस्य तत्परावृत्तिजं विषं हालाहलवत् कृष्णं दहन्तमग्निवत् दुःसहं भावयेत्। चकारात् वासुकिप्रमुखानामन्यतमस्य विज्ञान-ह्रीःकाराङ्कुशेनाकृष्य प्रवेश्य सर्पं स्फुरन्तं चिन्तयेत्। चलते ध्रुवम्। तत्र तस्मिन् सर्पे सर्वस्थावरजङ्गमेभ्यो विषाकृष्टो हृदयं किं तत्? ह्रीः।

त्रैधातुकस्थितं हीनमध्योत्कृष्टभाजनगतं विविधसंभवं स्थावरजङ्गमात्मकं सर्वं निःशेषम् तेन ह्रीःकारेण हृतमाकृष्टं भावयेत्। ततः सर्पविग्रहे पतमानं प्रविशन् चिन्तयेत् स्मर्यः ॥

तत्क्षणादेव ध्यानमात्रे विषसमुद्रवत् सुदारुणो भवति। स्पृष्टमात्रे अनेन मन्त्रप्रेरितेन दष्टमात्रे स्पृष्टमात्रेण वा जगत् सर्वं विषोद्गमनेन मृतं भवति। नात्र संशयः ॥

मण्डूकेत्यादि। अनन्तरोक्तेनैव विधिना कच्छपादयः सत्त्वविशेषाः कर्तव्याः कैः? योगोत्पत्तिकलक्षणैः। योगो विषम्। चित्रितमण्डूकादौ करणं तस्मिन् लक्षणैः कुशलैः तत्र इत्यादिना ॥

विषस्य स्थानान्तरात् स्थानान्तरसंक्रान्तिमाह। दृष्टिवज्रेत्यादि। दृष्टिविषं दंष्ट्राविषादीनां विषं ये चान्ये सत्त्वा विषदारुणाः तेषां च विषं पात्रशरीरमत ऊर्ध्वस्थितसितप्रणवरश्मिप्रेरितं पादतलस्थं कृष्णं विस्फुरद्रूपं ध्यात्वा खवज्र-मण्डलस्य पात्रं हृद्गतं खंकारोपरि ज्ञानवज्रेण ह्रीःकाराङ्कुशेनाकृष्य प्रवेशयन्ति मन्त्रिणा।

इत्याह भगवान् महाविषमयवज्रो महावज्रधरः ॥

तत्रेदमित्यादिना विषापहरणमारभते विषचिकित्साहृदयम्।

किं तत्? हूँ ॥

हृदये पादतलहृदये इदं हूङ्कारं शुक्लवर्णं महावज्रं रश्मिपुञ्जात्मकं चन्द्रांशुवद् देदीप्यमानं विभावयेत् ।

चतुःस्थानप्रयोगेणेति । पादतलसुशिरेणोद्गत्य विषं स्वरश्मिनिवहेन ऊर्ध्वं क्षिप्त्वा गुदपद्ममागम्य तस्मिन् छित्वा ततो विनिर्गत्य तथैव नाभिपद्मगतं ध्यात्वा तस्मादपि हृत्पद्मगतं विचिन्त्य ततोऽपि कण्ठपद्मगतं ध्यायात् । एवं संहरणत्यागेन उत्तिष्ठत्यूर्ध्वं गच्छति विषम् । एवं द्वित्रिर्वारान् ध्यात्वा विषं कृष्णरूपं छन्दयन्तमातुरं ध्यायात् । स्वस्थो भवति ।

अनेनैव क्रमेण मस्तकादारभ्य यावत्पादतलं गत्वा तद्विवरान्निर्गतं विषं ध्यायादिति केचित् । खधातुमाकाशकुहरं विषेण भरितमपि अनेन प्रयोगेण सद्यो निर्विषं कुरुते ।

इत्याह चेति प्रस्तूयमाणापेक्षः । तत्र विषापहरणे उपविषाणि धत्तूरलाङ्गलिप्रभृतीनि कृत्रिमविषाणि च तेषां सर्वविषा[णा]मपकर्षणहृदयम् ।

किं तत् ? आः ।

न केवलमुपविषस्यैव प्रतीकारः गण्डादीनामपीति दर्शयति । गण्डेत्यादि । गण्डाः व्यालगर्दभादयः । पिटका मसूरिकादयः । लूता वणीपद्यादयः । तेषां यद् वीर्यं येचान्ये व्याधयो ज्वरवैसर्पादयः ध्यानमात्रेण वक्ष्यमाणेन ध्यानेन भ्रश्यन्त्यातुरदेहात् दूरी भवन्ति । वज्रपाणिवचनमेतद् दर्शयति । यथेति ।

अष्टेत्यादि । अष्टदलं महापद्मं श्वेतं वामकरतले ध्यात्वा तत्र कर्णिकायां पञ्चरश्मिप्रपूरितम् आःकारं दलेषु च ह्रीःकारं ध्यात्वा ह्रीङ्कारमुच्चारयन् उपमर्द्य (?) विषादिकमाकृष्य आःकारेण प्रवेश्य मुष्टिसंहारेण भूमिगतं कुर्यात् ।

तदेवाःकारबीजं ध्यानविशेषेण विशेषयन्नाह । संहरेत् सितसन्निभमिति योज्यम् । विषापहरणे सितं ध्यातव्यम् । चोदने विषोत्थापने कृष्णवर्णं ध्येयम् । इदमुक्तप्रकारं ध्यानपदबीजं गुह्यं दुर्भगेभ्यो गोपनीयम् । तस्माद् रहस्यम् बुद्धरहस्यं ज्ञाननिर्मलं प्रभास्वरपरिशोधितत्वात् ।

पूर्वमुपविषप्रसङ्गेनोक्त्वा विशेषेण व्याधिचिकित्सामाक्षिपन्नाह । तत्रेत्यादि । तत्र विशेषविधाने शस्त्राद्यागन्तुकनिमित्ता अभिचारनिमित्ताश्च बाह्याः दोषधातुमलाहारवैषम्यनिमित्ताः आध्यात्मिकास्तेषां बाह्याध्यात्मिकव्याधीनां चिकित्सा प्रतीकारः तदर्थं वज्रवदभेद्यहृदयभूतमन्त्राक्षरपदानि जिनजिगित्यादीनि त्रीणि ।

यदित्यादि । एषु यन्मन्त्रपदमिष्टमभिप्रेतं भक्तिरभ्यासः तया गुणावहः फलवाहकं भवति, तादृशं तदनुरूपं विम्बं देवतारूपं भावयेत्। व्याधिवज्रं दुःसाध्यो व्याधिः तत्प्रचोदनैः तन्निश्चारकैरध्याशयैः ध्यायात् ।

कथम् ? वानराकारसमयं वानराकाररोगं श्वानसंभवं कुक्कुराकारं वा। ईदृग्रूपं व्याधिं कायवाक्चित्तपदैः कायवाक्चित्तावष्टम्भनैः स्थितं निश्चरन्तं साध्यदेशात् निष्क्रान्तं विकल्पयेत् ध्यायात् ।

तत् चक्रं वा विकरालवज्रं वा वज्रपदे दक्षिणकरे स्थितं ध्यात्वा तेन मुक्तेन कायवाक्चित्तसमयकायादिसाधकं रोगं चूर्णितं भस्मीभूतं भावयेत्।

ततः प्रभृति तत्कालमारभ्य संबुद्धा अक्षोभ्यादयः बोधिसत्त्वाः मैत्रेयादयः महायशाः स्वदेहस्थाः तस्यान्तरस्याधिष्ठानपदं रोगनिर्जये प्रतिष्ठां ददन्ति प्रयच्छन्ति हृष्टचक्षुषः प्रोज्वलनयनाः ।

इत्याह चेति वक्ष्यमाणापेक्षया संगीतिकारकः ।

कथम् ? आतुरस्य कायवाक्चित्तवज्रेषु बुद्धमेघान् लोचनासमापन्नान् वैरोचनव्यूहान् तथैव वज्रराजमहामेघान् यथासंभवमक्षोभ्यमेघान् अमिताभ-मेघांश्च स्थापयेत्। एवं कृते व्याधिमोक्षणं भवति ।

निष्पन्नक्रमस्थस्य व्याधिनिग्रहमाह। दशदिगित्यादि। सर्वबुद्धानां रूप-स्कन्धादिस्वभावानां बोधिसत्त्वाश्च बोधिसत्त्वानां चक्षुरादीनां धीमतांश्च विज्ञानसंप्रयुक्तानां क्रुद्धान् दोषक्षोभेण क्रुद्धानां तस्यातुरस्य एतेषां पारमार्थिकं मारणं प्रभास्वरं प्रवेशलक्षणं कर्तव्यम् ।

अनेन ध्यानयोगेन प्रभास्वरालम्वनेन यद् व्याधिजातं कर्मजं वापि कर्मजमपि यत् स्मृतं ज्ञातं तत् सप्तदिवसैर्विनश्यति। अथवा येन वज्रजापे-नानुस्मरणेन विनश्यति तदुक्तम् । शताष्टजापयोगेनेति । शतयुक्त्वाना-मष्टशतानां चतुर्मण्डलेषु नवशतानां जपः शताष्टजपः तत्प्रयोगेण वा नश्यति व्याधिः ।

अथवा स्वमन्त्रराजेन स्वाधिष्ठानदेहेन वज्रध्यानं व्याधिविध्वंसनं ध्यानं तस्य विधिः विधानं स्मृतं स्मर्तव्यम्। एषो हि उक्तः सर्वविधिः सर्व-व्याधीनां वाह्याध्यात्मिकानां दुरतिक्रमः अलङ्घ्यनीयः समयो वज्रसत्त्वः प्रज्ञप्तिरिति।

एवं कर्मप्रसरं निर्दिश्येदानीं मायोपमसमाधिसमापन्नानां महामुद्रासाधनप्रवृत्तानामिष्टस्वप्नसंदर्शनायाह । अथेत्यादि । ज्ञानाङ्कुशा वैरोचनादयः तेषां मध्ये महाद्युतिः प्रभुः कामेन मोक्षप्रदत्वात् काममोक्षः महावज्रो महापर्षत्कः इदं वचनमब्रवीत् ।

स्वप्नोपमेषु स्वप्नसंदर्शनेषु धर्मेषु भावेषु अनुत्पन्नस्वभाविषूत्पादकारणाभावात् स्वभावः प्रभास्वरः तेन शुद्धं व्यपगतकलुषं तत्त्वं देवतारूपं येषु ते स्वभावशुद्धतत्त्वात् तेषु भ्रान्तिवज्रं प्रगीयते । भ्रान्तिः [चित्त]विभ्रमः तस्य वज्रमुपगमनम् । स्वप्नदृष्टान्तेन सर्वधर्माणामपि स्वप्नोपमत्वपरिज्ञानात् शाश्वतोच्छेदभ्रान्तिः प्रगीयते प्रहीयत इत्यभिप्रायः ।

पश्यन्तीत्यादि ।। साधकाः द्विविधाः नित्यं सततमभ्यस्यन्तः जपध्यानार्थतत्पराः बुद्धाः अध्यात्मपरायणाः बोधिसत्त्वाः मन्त्रपरायणा द्विविधा भेदेन सनिमित्तानिमित्तभेदेन दर्शनं स्वप्नं पश्यन्ति ।

तत्र द्विविधसाधकेषु इदमुच्यमानं महतां फलानां सूचकं स्वप्नं महास्वप्नं तदेवाविसंवादकत्वात् समयं साधकम् ।।

बोधिज्ञानाग्रं प्रभास्वरं तत्प्रविष्टमात्मानं पश्यति स बुद्धसुप्रभं ज्ञानमूर्ति पश्यति कदाचित् स योगी आत्मानं बुद्धानां संभोगकायं प्राप्तं लघु पश्यति अचिरात् साक्षात् करोति ।

त्रैधातुकमहासत्त्वैः शक्रब्रह्मादिभिर्महानुभावैः पूज्यमानमात्मानं स साधकः पश्यति । स्वविम्बमात्मदेहं महाज्ञानसमप्रभं महावज्रधरतुल्यकान्ति विशिष्टैः पूज्यमानमात्मानं स साधकः पश्यति । स्वविम्बमात्मदेहं महाज्ञानसमप्रभं महावज्रधरतुल्यकान्तिं विशिष्टैः रूपादिविषयैः बुद्धबोधिसत्त्वैः पूज्यमानं ध्रुवमेकान्तेन पश्यति। अचिरेणैव महामुद्रासिद्धि साक्षात्करोतीति यावत्।

साधकः स्वविम्बमात्मानं वज्रसत्त्वरूपमक्षोभ्यरूपं महाविम्बं वैरोचनरूपं वज्रधर्मममिताभरूपं वा महायशं रत्नकेतुं वा । गुह्यवज्रममोघसिद्धिरूपं वा पश्यति ।

तं साधकं महाबुद्धाः श्रावकप्रत्येकबुद्धाः बोधिसत्त्वाः समानज्ञानरूपाः वज्रिणो घटमानयोगिनः । तथैव साधकस्य ईदृग्विधं वज्रसत्त्वादिविम्वान् परेषां कायवाक्चित्तसिद्धिदान् महामुद्रासिद्धिदान् अचिरेण द्रक्ष्यति स्वप्नफलम् ।

सर्वालङ्कारसम्पूर्णां सुरकन्यां उर्वशीप्रभृतिदिव्यनारीः पश्यति । अथ वा मनुष्यकन्यां वा दारकं सर्वलक्षणोपेतं तदैव दारिकां बालां यः पश्यति स सिद्धिं लौकिकीमपि गच्छति प्राप्नोति ।

दशदिग्व्यवस्थितान् सर्वतथागतान् स्वबुद्धक्षेत्रव्यवस्थितान् बुद्धान् ध्रुवं निश्चयेन यः साधकः पश्यति यथा यस्मै हृष्टचित्ताः तथागता मनोरमं प्रीतिकरं धर्मगञ्जं सद्धर्मराजं पुस्तकगतं ददति ।

यः धर्मचक्रगतं धर्मासनारूढं कायमात्मदेहं सर्वबुद्धैर्बोधिसत्त्वैः परिवृतं योगसमयः साधकः ध्यान[वज्र]प्रतिष्ठितः निष्पन्नक्रमस्थः पश्यति, स लोकोत्तरसिद्धिं साधयतीति दर्शनफलम् ।

आरामं तपोवनमुद्यानं राजक्रीडावनं एवमादि विविधान् मनोरमप्रदेशान् देवनागकन्यादिभिरलङ्कृतान् ध्यानसमयः परिकल्पितयोगस्थो यः पश्यति स सर्वबुद्धैरधिष्ठितैः सर्वतथागतनिष्ठां लभते । तस्मादेवेप्सितलौकिकं सुखं लभत इति स्वप्नपाकः ।

बुद्धबोधिसत्त्वैरभिषिच्यमानं आत्मानं यः पश्यति स्वप्ने स विद्याधर-महाराजैः विद्याधरनायकैः पूज्यमानमात्मानं पश्यति लभते स्वप्नपाकः ।

इत्याह चेति ॥

इष्टस्वप्नोपसंहारार्थमाह विविधानुक्तानेवंभूताननुक्तांश्च वज्रसंभूतान् तथागतदर्शितान् निर्मलान् शुभान् स्वप्नान् पश्यति यत् तेनानुत्तरं तत्त्वं कायवाक्चित्तवज्रजं प्राकृतकायवाक्चित्तात् जातं निष्पन्नमनुत्तरं तत्त्वं परिशुद्धदेवतारूपं सिध्यते प्राप्यते ।

चण्डालेत्यादि । समयभ्रष्टस्याशुस्वप्नं दर्शयति । चण्डालश्वानादिभिर्योगः । आदिशब्देन वानरप्रेतादयो विरूपा गृह्यन्ते । वज्रधृक् साधकः यदि चेत् पश्यति तस्य धीमतः दृष्टसत्त्वस्यापि वज्रसत्त्वस्य दृढवीर्यस्य चित्तनिलयं शरीरं सिध्यते पापमुपगच्छति । समयोल्लङ्घनं कृत्वा समयं परिपूज्य लौकिक-लोकोत्तरसाधनेषु प्रवृत्तः सन् विषमापरिहारेण कालं करोतीति यावत् ।

तत्त्वसाधकेनेदं प्रस्तूयमानं स्वप्नविचारणसमयः तत्प्रत्यवेक्षणाकालः तस्मिन् हृदयं सन्देहच्छेदकं सारवचनम् ॥

चित्तनिध्यप्तौ चित्तविचारणे चित्तस्वभावपरिज्ञाने सर्वधर्माः स्वप्नदर्शन-कालचित्तात् वाह्यभावेन प्रतिष्ठिताः प्रतिभासमापन्नाः ये ते सर्वे स्वचित्तमेव

नान्यत् किञ्चिदस्ति । तच्चित्तं कुत्र स्थितमित्याह खवज्रचित्तस्थ इति । खवज्रं प्रभास्वरं तस्मिन् स्थितं चित्तं खवज्रचित्तं तस्मिन् स्थिता एते भावाः सुप्तावस्थायां जाग्रदवस्थायां तु चित्तात् पृथग्भावाः सन्तीति चेदाह न धर्मा इति। भावानामभावः धर्मधातुः कदाचिद् विद्यते इति चेदाह । न च धर्मतेति । अत्राह

तथैव धात्वायतनेन्द्रियादौ
ज्ञानद्वये तत्र सुसंहतेऽस्मिन् ।
शून्ये महत्त्वे सति यः प्रसुप्तः
स्वप्नं प्रपश्येत् खलु वातसंश्रयात् ।।
सुप्ते प्रबुद्धे च न च नान्यभेदः
संकल्पयेत् स्वप्नफलाभिलाषी ।
स्वप्नोपमास्ते खलु सर्वधर्मा
मृषामृषाश्चापि तयोरभावः ।।

अथेत्यादि । सर्वतथागता अक्षोभ्यादयः आश्चर्यप्राप्ताः स्वप्नदर्शने स्वप्नफलावाप्तावद्भुतप्राप्तः सर्वतथागतसमयः वज्रसत्त्वसमाधिः । तस्मिन् संशयच्छेत्तारं वज्रसत्त्वं पृष्टवन्तः किमिदमिति प्रश्नः । एतद् दुष्करमित्यभिप्रायः ।

निःस्वभावेषु विद्यमानेषु फलसूचकेषु धर्मेषु धर्मतत्त्वं प्राप्य फलतत्त्वमुदाहृतम् । तस्मादाकाशे आधारभूते आकाशभावनमाधेयं कृतमिति । यावदाश्चर्यसंभूतम् । आश्चर्यं प्रकाशितम् ।

तथागतानामभिप्रायमेवाविष्कुर्वन्नाह । अथेत्यादि । महावज्रधरः तथागतानेवमाह । भगवन्तः सर्वतथागता इत्यामन्त्रणम् । आकाशं केनचिद् धर्मेण घटपटादिना न संयुक्तम्, पृथक्त्वादर्शनात् । नाप्यसंयुक्तं भावस्य सर्वस्य तदात्मकत्वात् । सर्वगत्वं सत्स्वपि भावेषु व्यापित्वं तेषु भावेषु सन्निधानमनुदर्शित्वम् । एतद् द्वयं समस्तीत्यभिमानश्चास्य नास्ति । एतदाह । न चैवाकाशस्यैवं भवति, सर्वगतोऽहम्, सर्वत्रानुदर्शी चेति । एवं दृष्टान्तमुक्त्वा तेन संयोजयन्नाह । एवमेवेति । यथाकाशं न केनचिद् धर्मेण संयुक्तं नाप्यसंयुक्तम्, तथा स्वप्नफलयोः संयोगवियोगौ द्रष्टव्यौ । यथा नाकाशस्य सर्व-

गतत्वसर्वत्रानुदर्शित्वमन्यना नास्ति तथा स्वप्नतत्फलयोरपीति । तदाह स्वप्नाः स्वप्नसंभूताश्चानुगन्तव्या इति । तस्यैव विशुद्धिं दर्शयन्नाह । तद्यथेत्यादि । यथाकाशमनिरूप्यमेवमेवंस्वभावमिति । अनिदर्शनं चक्षुरादिभिर्यन्न विषयीक्रियते। अप्रतिघं कुड्यादिभिर्न वार्यते। एवमेव तद्वत् सर्वधर्माः स्कन्धादयः परिज्ञेयाः । किमुत स्वप्नाः स्वप्नफलानि चेत्यभिप्रायः ॥

पुनरप्याह । तद्यथेत्यादि । सर्वधर्माः भाजनलोकाः कायवाक्चित्तं सत्त्वलोकः वज्रपदसमयशेषधात्मायं सर्वत्रानुगतमनन्तापर्यन्तलोकधातुगतमेकस्वभावमेकलक्षणं परिज्ञेयम् । यदुत कथं त्रित्तस्वभावं चित्तमयं यश्च कायवाक्चित्तधातुरिति सर्वधर्माः आकाशधातुश्चैतत् अद्वयमभिन्नमद्वैधीकारमभिन्नलक्षणम् ॥

तद्यथेत्यादिना अमुमर्थमेव विवृणोति। सर्वसंत्त्वा अण्डजादयः आकाशधातुस्थिताः । स चाकाशधातुः न कामधात्वादिषु स्थितः । एवमेव यो धर्मः त्रैधातुके न स्थितः तस्योत्पादो नास्ति। यस्योत्पादो नास्ति असौ धर्मः केनचिद् धर्मेण येन केनचित् स्वभावेन न संभाव्यते, न व्यवस्थाप्यते । स च धर्मश्च नैःस्वाभाव्यान्नातिवर्तते तस्मात् तर्हि इत्थं कृत्वा सर्वधर्माः निःस्वभावाः प्रभास्वरस्वभावाः ।

तद्यथेत्यादि । सर्वतथागताः त्र्यध्ववर्तिनः तेषां ज्ञानं ज्ञानदेहः तस्योत्पादने वज्रपदाकारं वज्रपदस्वभावं बोधिचित्तमेव । तच्च बोधिचित्तं न कायस्थितं न कामधातौ स्थितं न वाक्स्थितं न रूपधातौ स्थितं न चित्तस्थितं अरूपधातावपि न स्थितम्। एवं यो धर्मः त्रैधातुके न स्थितः तस्योत्पादो नास्ति। यत् त्रैधातुकलक्षणपरिज्ञानं तत् सर्वतथागतज्ञानोत्पादने वज्रपदमभेद्यमविसंवादकं कारणम्

एवं स्वप्ननैःस्वाभाव्येन वस्तुनैःस्वाभाव्यं निरूप्य पुनरपि स्वप्ननिष्पत्तिमेवाक्षिपन्नाह । न चेत्यादि । अहं त्रैधातुके त्रिविधसत्त्वानां स्वप्नपदं स्वप्नेन फलं दर्शयामीति । एवं संकल्पना न भवति स्वप्नस्य । स्वप्नस्तु मया द्रष्टव्य इति प्रार्थना न भवति पुरुषस्य । अथ च त्रैधातुकक्रिया त्रिविधसत्त्वराशीनां जाग्रदवस्थायां शुभाशुभात्मिका क्रिया स्वप्नोपमाः स्वप्नवद्धि तथा च स्वप्नसदृशी स्वप्नवत् विचित्रा सा स्वप्नसंभूताः स्वप्नसूचिता भवति । यथा, एवमेवानेन प्रकारेण दशदिग्लोकधातुषु बुद्धाः

निष्पन्नाः बोधिसत्त्वाः प्रमुदितादिभूमिः प्राप्ताः यावन्तः सर्वसत्त्वाश्चाण्डज-जरायुजसंस्वेदजाः उपपादुकाः सर्वे ते स्वप्ननैरात्म्यपदेनानुगन्तव्याः स्वप्नेष्विव मायोपमसमाधिस्थेन बोद्धव्याः ।

एवं मनोमयदेवतामूर्तेर्व्याप्तिं प्रदर्श्य तत्स्वरूपं दर्शयन्नाह । तद्यथेत्यादि । चिन्तामणिरत्नं सर्वलौकिकरत्नानां विशिष्टतरमीप्सितप्रदानात् दिव्यमानुष्यं मानुष्यकैर्गुणैरुपेतं सत्त्वैः प्रार्थितम् । सुवर्णादिकं चिन्तितमात्रेणाभिलषित-मात्रेण यत् संपादयति तद्रत्नादिकं सत्त्वानां न चित्ताद्विनिर्गतं न चिन्तामणि-रत्नादागतं यथा, एवमेव सर्वधर्मा मायालक्षणाः बुद्धाः निष्पन्ना निष्पन्न-सत्त्वराशयः तेषां धर्माः कारणं षष्ठः तस्मात् सर्वसिद्धयः अनुज्ञातव्याः ।

अथेत्यादि । भगवन्तः सर्वतथागताः अक्षोभ्यादयः प्रहर्षोत्फुल्ललोचनाः पञ्चप्रीतिसमन्वितत्वाद् विस्फारितनयनाः सर्वतथागतकायवाक्चित्तवज्रं महावज्रधरमेवमाहुः । आश्चर्यं भगवन्नेतदद्भुतं आकाशसमवसरणेषु आकाश-व्याप्तेषु सर्वधर्मेषु अनवस्थितेषु बुद्धधर्माः ज्ञानदेहः समवसरणं संग्रहं गच्छन्ति यान्ति इति यत्र हि नाम यत् तदद्भुतम् ।

एवं प्रोत्साह्य ततः किं कृतवन्त इत्याह । अथेत्यादि । सर्वबुद्धाः बोधि-सत्त्वाः वज्रपाणेर्महावज्रधरस्य पादयोर्निपत्य प्रणम्य एवमाहुः । भगवता त्वया मन्त्रवज्रसिद्धिसमुच्चयमिति। मन्त्रमाला मन्त्रादयः। वज्राणि ध्यानानि। तैः कृताः सिद्धयो लौकिकाः लोकोत्तराश्च तासां समुच्चयं वृन्दं यद्भाषितं भाषितानि सर्वमन्त्रसमुच्चयसिद्धीनि कुत्र स्थितानीति प्रश्नः ।

अथेत्यादि प्रतिवचनम् । वज्रपाणिर्महावज्रपाणिर्महावज्रधरः । तेषां साधुकारं दत्वा तानेवमाह। भगवन्त इत्यादि। सर्वमन्त्रवज्रसमुच्चयसिद्धीनि सर्वमन्त्राः साधकाः तेषां कायवाक्चित्तस्थितानि न भवन्ति तावत् । तस्मात् न क्वचित् स्थितानि । तत् कस्य हेतोः कस्मात् कारणात् ? परमार्थतः कायादीनां मन्त्रादिसिद्धीनां च परमार्थतोऽभावादिति। सर्वमन्त्रसिद्धिसाधनानि तर्हि सर्वथा नश्यन्तीत्याह । किं त्वित्यादि । संवृतिसत्त्वेन सर्वसिद्धीनि सर्व-बुद्धधर्माणि दशबलवैशारद्यादयः स्वकायवाक्चित्तवज्रस्वभावाः सन्ति। तर्हि कायादीनामस्तित्वेन तदाधार[ा]णां सिद्धीनामुपलम्भः । तन्निराकुर्वन्नाह । तच्चेत्यादि । तत् कायादिकं न कामधात्वादिस्थितम् । त्रैधातुकस्थितत्व-मुक्त्वा अन्योन्याधाराधेयभावमपि निराकुर्वन्नाह। न चित्तं कायस्थितमित्यादि।

चित्तं तावत् न काये स्थितम् । कायमपि न चित्ते स्थितम्, द्वयोराधाराधेय-भावविरोधात् । तथा वागपि न चित्ते स्थितम् । चित्तमपि न वाचि स्थितम् । तथा वागपि न काये स्थिता, कायोऽपि न वाचि स्थित इति द्रष्टव्यम् । तत् कस्य हेतोः आकाशवत् स्वभावशुद्धत्वात् न त्रयाणामप्यन्योन्याधारा-धेयभावः ॥

अथेत्यादि । ते वज्रधरमाहुः । सर्वतथागता अक्षोभ्यादयः । तान् वारयतीति सर्वतथागतधर्माः षष्ठः । स कुत्र स्थितः कुतो वा संभूत इति प्रश्नः । आह वज्रधरः स्वकायवाक्चित्तस्थितः स्वकायवाक्चित्तसंभूतः । आहुः तथागताः प्रश्नयन्ति । चित्तं कुत्र स्थितम् ? चित्तवज्रः कुत्र स्थितः ? आह वज्रधरो विसर्जयति । आकाशस्थितम् । प्रभास्वरस्थितम् । आहुस्तथागताः आकाशं प्रभास्वरं कुत्र स्थितमिति ? आह भगवान् न क्वचित् स्थितम् । तत् प्रभास्वरं न क्वचित् स्थितम्, आत्मन्येव स्थितमिति यावत् ।

अथेत्यादि संगीतिकृद्वाक्यम् । ते बुद्धबोधिसत्त्वा आश्चर्यप्राप्ताः हेतोः अद्भुतप्राप्ताः फलैः स्वचित्तधर्मताविहारं स्वचित्तविलसितं ध्यायन्तः आलम्बयन्तः विगतसन्देहत्वात् तूष्णीं स्थिताः मौनमापन्नाः अभूवन् बभूवुः ।

स्थिरश्चलात्मकं चित्तं सर्वचित्तं तदात्मकः समयः सर्वचित्तसमयो महावज्रधरः तस्य सारः लौकिकलोकोत्तराः सिद्धयः ता एव वावन्ध्यत्वाद् वज्राणि तेषां संभूतिः प्रकाशनं येन ग्रन्थसमूहेन । स तन्नामकः । सन्ध्याभाषा ॥

॥ प्रदीपोद्द्योतनटीकायां पञ्चदशपटले षट्कोटिव्याख्या ॥



## ।। षोडशः पटलः ।।

उक्तलक्षणाः सर्वसिद्धयः मण्डलाभिषिक्तस्यैव निष्पद्यन्त इति शिष्यपात्रीकरणार्थं मण्डलविधानोपयोगिकं षोडशपटलमुपक्षिपन्नाह । अथेत्यादि । पुनः [समाज]मागम्येति । पुनरप्येकाभिप्रायो भूत्वा महावज्रधरं सर्वतथागतकायवाक्चित्तवज्रपदैः अनन्तापर्यन्तलोकधातुस्थिततथागतकायवाक्चित्तवज्रप्रतिष्ठितैः स्तोत्रैः सर्वतथागतसान्तमित्येवं (?) प्रकारैः अध्येष्याभिमुखीकृत्य सर्वतथागतरत्नवज्रपूजाव्यूहैः दिव्यैः विषयमेघैः पूजयामासुः । मण्डलविधिश्रवणाभिप्रायेणेति शेषः । सर्ववज्राः तथागताः तेषां मण्डलं कायमण्डलं तदेव सिंहः क्लेशमृगविध्वंसनात् समयराजः तस्मिन् कृतोऽध्यवसा[य]विशेषः तेनाविष्कृतो व्यूहो मण्डलपरिकरो यस्मिन् समाधौ तं समापद्य वज्रकायो वैरोचनः । तस्य मण्डलं तदाधिपतेयं सर्वबुद्धानां सर्वसाधकानां प्रयोजनभूतं स्वकायादिभ्यो निश्चारयामास ।

अथेति वाक्योपादाने । अतःशब्दो हेतौ । मण्डलश्रवणकुतूहलाः यतः ततः सम्यक् प्रवितत्य वक्ष्यामि । कायमण्डलं वैरोचनमण्डलमुत्तमम् सर्वसिद्धिदम् । तत् कथमित्याह चित्तेत्यादि । चित्तवज्रप्रतीकाशमक्षोभ्यमण्डलसदृशं चतुरस्रादिगुणेन यत् सर्वमण्डलं तदुत्तमम् ।

षोडशहस्तमिति । चतुःपार्श्वापेक्षया एकैकपार्श्वेन चतुर्हस्तं ज्ञेयं तच्चतुरस्रमवर्तुलम् । तच्चतुरस्रमित्युपलक्षणत्वात् चतुर्द्वारादीनि गृह्यन्ते । सुशोभनं रङ्गनैर्म्यल्यात् । कीदृग्विधम् ? मण्डलं सर्वबुद्धानां सर्वतथागतैः प्रशस्तं कायवज्रो वैरोचनः तेन प्रतिष्ठितमधिपतित्वेन शोभितम् ।

तस्य चतुरस्रमण्डलस्याभ्यन्तरतः चक्रं वर्तुलं चक्रमालालङ्कृतम् । कथमित्याह विधिवज्रयेति । विधिस्तत्त्वसंग्रहाद्युक्तं मण्डलसूत्रं विधानं तदेव वज्रं सुनिश्चितं यस्यां बुद्धौ तयालिखेत् ।

एवं मण्डलमालिख्य मन्त्राणां देवतानां मध्ये वैरोचनपदं मुद्रावज्रपदं स्वमुद्रासंयुक्तदेवताविम्बं कुर्यात् । अक्षोभ्यादीनांश्च पूर्वादिस्थितान् लिखेत् ।

केवलं स्थापयेत् । कायवाक्चित्तवज्राग्रीन् लोचनाद्यान् सर्वकोणेषु आग्नेय्यादि-कोणेषु यथासंभवं लिखेत् निवेशयेत् ।

क्रोधो यमारिरादिर्येषामपराजितहयग्रीवामृतकुण्डलीनां तांश्चतुर्षु द्वारेषु निवेशयेत् महाबलपराक्रमान् अचलादीनां कोणे निवेशयेत् रूपादीन् मैत्रेया-दींश्च यथास्थानं निवेशयेत् मन्त्रज्ञः आचार्यः गुह्यवज्रप्रभाविता पद्मवज्र-संयोगकृतां पूजां मण्डलमध्ये स्वमुद्रासहितो विदध्यात् ।

एष विधिः सर्वमन्त्राणां साधकानां समयः योगतन्त्रव्यवस्था दुरतिक्रमः । अलङ्घनीयः । विण्मूत्राद्यं पञ्चामृतम् विशेषतः अस्मिन् कायमण्डले अवश्य-मेव एकान्तेन दातव्यं प्रासितव्यम् ।

एष पञ्चामृतप्राशः कायवज्रिणां कायमण्डलाभियुक्तानां सर्वमन्त्राणां सर्वसाधकानां समयः अलङ्घनीयः सर्वतथागताभिमतमेतत् कायमण्डलम् ।

अथेत्यादिना वाङ्मण्डलविधानमहावज्रधरः सर्ववाग्वज्रसमयाः अमि-ताभमाण्डलेयाः । तेषां मेघः समूहः तस्य व्यूहो यथास्थानसन्निवेशो यस्मिन् तन्नामकं समाधिं समापद्य इमं वाग्वज्रमण्डलं तदर्थं वचनसमूहः स्वयं काया-दिभ्यो निश्चारयेत् । तद्दर्शयति ।

अथात इत्यादि विभक्तार्थः ।

विंशतिहस्तं प्रकुर्वीत एकैकपार्श्वतः । पञ्चहस्तं सूत्रयेत् वज्रभावनैः पञ्चतथागतवर्णैः सूत्रैः चतुरस्रमण्डलस्य मध्ये महच्चक्रं प्रधानभूतं परिमण्डलं पद्मालङ्कृतमालिखेत् । तस्मिन् मण्डले सर्वमुद्रापरिपूर्णाम् आलिखेद् विधि-तत्परः विधिकुशलः ।

कथम् ? अमितायुमहामुद्रां स्वमुद्रासंयुक्तां तस्य मध्ये निवेशयेत् । यत् कायचित्तमण्डलयोर्वज्रपदं तथागतविन्यसनं सर्वेषामपि कल्पयेत् कुर्यात् ।

विधानेन तन्त्रोक्तविधिना मण्डलं परिस्फुटं सम्यक् कृत्वा गुह्यपूजां द्वयेन्द्रियसमापत्तिलक्षणं तथागतपूजां निष्पादयेत् । वज्रिणो दशदिग्व्यवस्थिताः बुद्धाः एवं कृते तुष्यन्ति साधकस्य प्रसीदन्ति ।

विण्मूत्रशुक्रमयैः पञ्चामृतैः पूज्यशिष्यानात्मानं च पूजयित्वा अभिप्रेतार्थ-सिद्धिरवाप्यते । एषो हीति विवृतार्थः ।

सर्वतथागतप्रशस्तममिताभमण्डलम् ।

एवं कायवाक्चित्तवज्राणां मण्डलत्रितयमुक्त्वा अवशिष्टतथागतद्वयस्य अन्येषां माण्डलेयानामपि मध्ये यस्य प्राधान्यं विवक्ष्यते तस्य ···नं दर्शयन्नाह । अथेत्यादि । समन्ततो नानामुखाः मेघवत् सर्वार्थसिद्धिं कुर्वन्तीति समन्तमेघास्तथागताः तेषां व्यूहं वृन्दं तस्य वज्रं पृथङ्मण्डलं यस्मिन् समाधौ निर्दिश्यते तं समन्तमेघव्यूहवज्राख्यं समाधिं चित्तैकाग्रतामामुखीकृत्य इदं बुद्धिस्थं परमगुह्यमत्यन्तगोपनीयं मण्डलरहस्यमप्रकटं स्वकायादिभ्यो निश्चारयामास ।

यस्येत्यादि । वज्रधराग्रस्य वज्रधरप्रभृतीनां माण्डलेयानां मध्ये यस्य विम्बं मण्डलं मध्ये स्थाप्यते तस्य देवताविशेषस्य मण्डलचक्रं भवेत् । कायवाक्चित्तगुह्यजं त्रिगुह्यात्मकं रत्नकर्मकुलयोस्तदन्तर्भावात् ।

सर्वतथागता अक्षोभ्यादयः तेषां कायवाक्चित्तवज्रपदं कायादिमण्डलं तस्मिन् ज्ञानं सूत्रपातनादिविधानं तस्य रहस्यं मण्डलपरावृत्तिलक्षणं यस्मिन् परमगुह्ये परमोपदेशे स तथा ।

अथेत्यादि । सर्वेषामक्षोभ्यादीनां मण्डलचक्रमाधारमण्डलं तत्संभवति यस्मिंस्तन्नामकं समाधिं चित्तैकाग्रतां समापद्य तेषामेव सर्वमण्डलानां कायवाक्चित्तवज्रस्वभावं गुह्यं स्वकायादिवज्रेभ्यः उदाजहार आविश्चकार ।

तत्रेत्यादि । तत्र कायादिगुह्ये इमानि प्रस्तूयमानानि वज्रमण्डलानि तथागतचक्राणि तेषामनस्त्राणि चित्ताराधनस्वभावानि, तान्येव दैवतत्वात् हृदयानि मण्डलसूत्रणो[प]योगित्वात् सूत्राणि अविनश्वरत्वादक्षराणि । सर्वमन्त्राणां प्रतिष्ठाभूतत्वात् पदानि । कानीत्याह ।

ओं आः हूँ इति ॥

पातनमित्यादि । वज्रा अक्षोभ्यादयः तद्वर्णैः रक्तं सूत्रं वज्रसूत्रम् । तस्य तेन पातनं मण्डलसूत्रणं रजसोऽपि पञ्चरङ्गिकस्य पातनं विकीरणं ओमित्यादिभिर्मन्त्रैः कार्यमिति शेषः । न कार्यमित्यादि । मन्त्रसत्त्वे[न] परायणेन द्वयज्ञानयुक्तेन उक्तप्रकारमण्डललेखनं न कार्यम् । यदि कुर्यात् तस्य बोधिः वज्रधरत्वं दुर्लभा दूरे भवति । यदि **तत्त्वसंग्रहा**द्युक्तविधानेन कुर्यादिति भावः ।

तस्मादित्यादि । निष्पन्नक्रमस्थातव्यः उत्पत्तिक्रमस्थः तीर्णविद्याव्रतः यदि मण्डलालेखनं कुर्यात् तस्य विधानं समयाः कुलभेदेनोक्तमुद्राः तासां

विधानं समाजोक्तविधानेन विरचनं तज्ज्ञो मन्त्री। अवतार्येति। मन्त्रः साधकः तस्य देवता स्वमुद्रा तामवतार्य पुरतोऽवस्थाप्य अधिष्ठानं पञ्च-कुलीकरणं तस्य पदं स्थानं ध्यात्वा निष्पाद्य मण्डलानां कायादिमण्डलानां सूत्रपातादिक्रमेण विरचनं कुर्यादिति।

एवं सामान्यविधानमुक्त्वा कुलभेदेन विधिमाह। तत्र कायमण्डलं लिखितुकामो मन्त्री स्वयं वैरोचनयोगवान् स्वमुद्रां लोचनां साक्षात् लोच-नामिव निष्पाद्य तया सह मण्डलसूत्रणादिकं कुर्यात्। अस्य करणस्यानुशंसां दर्शयति। कायो वैरोचनः तस्य मण्डलपदं तदधीनं चक्रं रम्यमीप्सितफल-प्रदानान्मनोहरं कायवज्रो वज्रकायः तस्य गुणः अनन्तापर्यन्तलोकधातुषु सत्त्वानां नानारूपेण धर्मदेशना प्रवर्तनं तदावाहकं भवति साधकानाम्।

वज्रधर्मेत्यादि। मन्त्री वज्रधर्ममहाराजमात्मानं ध्यात्वा स्वधर्मं च स्वमुद्रां पाण्डरवासिनीं ध्यात्वा अवतारयेत्। वाग्मण्डलं लिखेत्। एष क्रमः। सर्वमन्त्राणां पद्मकुलीनानां परमशाश्वतं अनादिकालिकतथागतानां गुह्यं रहस्यम्।

वज्रसत्त्वेत्यादि। आत्मनामक्षोभ्यरूपं ध्यात्वा स्वमुद्रां मामकीमधिष्ठा-यावतारयेत् चित्तमण्डलं लिखेत्। इदं तत् सर्वमन्त्राणां वज्रकुलीनानां साधकानां परमाद्भुतमुत्तरोत्तरं रहस्यम्।

एवं कृतेन मण्डलविधानेन प्रसन्ना मनीषिणः बुद्धबोधिसत्त्वाः सान्निध्य-मागम्य सन्निपातं कृत्वा हर्षान्विताः अतितुष्टाः परमगुह्यमतिरहस्यभूतं मण्डलं लिखन्ति निष्पादयन्ति। मुद्रासहितस्य साधकस्य कायवाक्चित्तमधि-ष्ठाय मण्डलं ताभ्यां संपादयन्तीति यावत्॥

इत्याह चेति संगीतिकृद्वचनम्॥

कर्तव्यमित्यादि। मन्त्रसिद्धेन अनन्तरोक्तविधिना समापितमण्डलेन मन्त्रिणा वज्रगुह्यं तथागतरहस्यमत्यद्भुतमतिशयोपेतं कार्यम्। तत् किमित्याह। आकृष्येत्यादि। क्रोधराजेन निसुम्भेन सर्वबुद्धान् निष्पन्नान् समाजेनाकाश-मण्डलस्थितान् आकृष्य यथास्वं संपुटयित्वा पूजयेत्।

त्रिष्कालं सन्ध्यात्रये समया रूपवद्राजादयः ताभिः कृता पूजा समयपूजा त्रिवज्रामलवज्रिणो माण्डलेयं कर्तव्यम्। कथम्? त्रिवज्रयोगेन त्रिवज्राः त्र्यध्ववर्तिनो बुद्धाः तैर्योगेन त्र्यध्ववर्तितथागतैरेकीकरणेनापूजयेदिति यावत्।

एतद् विधानं किं करोतीत्याह । मन्त्रसिद्धिप्रवर्तनमिति । मन्त्रास्तथागताः तेभ्यः सिद्धिः लौकिकलोकोत्तरलक्षण[ा] तस्याः प्रवर्तनं निष्पादनमित्याह ।

सर्वेषामित्यादिना सन्निपतति मन्त्राणां वलिं सन्तर्पणं दद्यात् प्रयच्छेत् । महाद्भुतमत्युदारम् । अयमेवाध्यात्मिको वलिः । तद्दर्शयन्नाह विडादयः पञ्च विषयाः निरुक्तेनाभिप्रेताः ।

अथ पञ्च विषयाः न संभवन्ति तदा किमित्याह शुक्रेणेति । शुचं शोकं क्रकचवत् पाटयति नाशयतीति शुक्रं मद्यं तेन सर्वमन्त्राणां साधकानां प्रीणनं तर्पणं समुदाहृतं कथितम् । एष हि विधिः समयः अलङ्घनीयः । श्रेष्ठः प्रधानभूतः । बुद्धा मन्त्रिणः । तेषां बोधिः चित्तं तत्प्रपूरकः आप्यायकः । मन्त्रितर्पणमेव तथागतसन्तर्पणमित्यभिप्रायः ।

एवं सुशिक्षितमुद्रासहितस्य मण्डलालेखनविधिमुक्त्वा तद्विरहितस्य विधिमाह सूत्रस्येत्यादि । इदं मण्डलसूत्रपातनं स्वयमेव प्रज्ञाविरहितत्वात् एकाकी यदाचरेत् तदा कायमण्डले वैरोचनमात्मानं प्रभावित्वा शिष्यवज्रसत्त्वं प्रभावयेत् ।

अथवा शिष्यं वज्रमहाद्युतिं अमृतकुण्डलिं वा कल्पयेत् तदनन्तरोक्तं कर्मपदं मण्डलकरणीयं सर्वबुद्धनिषेवितं प्रशस्तम् ।

एवं चित्तमण्डले अक्षोभ्यमात्मानं ध्यात्वा शिष्यं वैरोचनममृतकुण्डलिं वा प्रकल्पयेत् । एवं वाङ्मण्डलेऽपि यथासंभवं ज्ञेयम् । पञ्चबुद्धमहाराजान् अक्षोभ्यादीन् सूत्रवज्रगतान् कृष्णादिसूत्रगतान् हूङ्कारादिरूपेण प्रविष्टान् न्यसेत् ध्यायात् । एष सूत्रपातनविधिः सर्वबुद्धानां परमाद्भुतं विशिष्टं रहस्यम् ।

पञ्चविंशतीत्यादि । एकैकस्यापि रजसः पञ्चात्मकत्वात् पञ्चविंशतिभेदेन भिन्नस्य पञ्चरजःस्कन्धस्य निपातनं कार्यम् । एकैकस्मिन् रजसि प्रधानगौणरूपेण तथागतपञ्चकं भावयेदित्येतद् दर्शितम् । सर्वमन्त्राणां सर्वतथागतानां रहस्यमुत्तमं बोधिविशिष्टं सम्प्रदायम् ।

मण्डललिखनकाले विघ्नोपशमनविधिमाह । सर्वमन्त्रा माण्डलेयाः तेषां वाह्योपद्रवेभ्यो रक्षणार्थं वज्रहूङ्कारोऽत्र यमारिः तस्य भावना कार्या । कथमित्याह कायेत्यादि । दिव्यमसाधारणं कायवाक्समयं कायवाक्चित्तविकुर्वितं पृथिव्यादिकृतोपद्रवेषु यमारियोगवान् भावयेत् दर्शयेत् ॥

तत्रालीढादिना विघ्नचूर्णनं कायविकुर्वणम्। प्रलयमेघनिनादेन मन्त्रोच्चारणं वाग्विकुर्वणम्। सर्वविघ्नेषु शून्यतालम्बनं चित्तविकुर्वणम्। तत्तु काष्ठलोष्टमन्त्रादिकृतपृथिव्युपद्रवः। उदकोद्गमनवर्षादिन[ा]म्बुकृतोपद्रवः। असह्य[ा]ग्निकृतस्तेजसः। वात्याकृतो वायव्यः। अतीन्द्रियकृत आकाशोपद्रवः। एतेषु पञ्चस्थानेषु वज्रहुङ्कारभावना कार्या।

एवं कृते त्रिवज्राभेद्यवज्रो महावज्रधरः तस्मात् संभूता विघ्नगणाः भयसंत्रस्ता स्वविनाशभयग्रस्ता धीमतो ज्ञानिनो वज्रसत्त्वस्य साधकस्य मण्डलविधाने सान्निध्यमुपसर्पणं सन्निधानं न कुर्वन्ति। कर्तुमसमर्थाः।

न्यासं कलशवज्राणामिति॥ प्रोक्षणविजयकलशादीनां न्यासं किंविशिष्टं मन्त्रसंग्राहकः तन्त्रो मन्त्रतन्त्रः तमभियन्ति यथोक्तविधिना पालयन्तीति मन्त्रतन्त्राधिपाः तत्त्वसंग्रहाद्यभियुक्ताः तैः स्मृतम्। स्थानौषधिबीजलिङ्गादिन्यासैः कल्पितं सज्जीकृतं कलशं वज्रसत्त्वसमाधिस्थो मण्डलाचार्यः दृढबुद्धिमान् अविक्षिप्तस्मृतिः कल्पयेत्। यथास्थानं स्थापयेत्।

एवं मण्डलं परिसमाप्य ततः होमं हवनं कुर्वीत मन्त्रज्ञः साधकः सर्वसिद्धिफलार्थिकः लौकिकलोकोत्तरसिद्धिकामः। उभयतन्त्रोक्तविधानैरिति शेषः। विण्मूत्रेत्यादिना आध्यात्मिकहोममाह। तत्र विडन्नं मूत्रं व्यञ्जनं मत्स्यं भक्ष्याणि तैलं सुरा इत्येवमाद्यैरन्नपानैः आहुतिं कायमण्डलस्य देवतानिवेद्यं प्रतिपादयेत्।

पूर्णेत्यादि। त्रिवज्राभेद्यचक्रिणां योगिनां भुक्त्वा विशेषेण एकीकृतेन कर्मभेदेन यथालब्धकुण्डेन्धने वह्नौ पूर्णां वज्राहुतिं दद्यात्।[१] कथम्? मध्ये कुण्डमध्ये स्वदेवताविम्वमिति शान्त्यादिप्रकारभिन्नदेवताविम्बं ध्यात्वा चक्रे तस्य मुखे पूर्णाहुतिं दद्यात्।

एवं गणचक्रस्थेन होमं निष्पाद्य पुनः द्वयेन्द्रियप्रयोगेण दैवतीसमापत्तिःस्थितेनाप्यष्टोत्तरशतवारम् उच्छिष्टान्नादिकं कर्मभेदेन जुहुयात् होमयेदिति॥

एषो हीत्यादि सुगमा नरुतव्याख्या।

वैरोचनेत्यादिना आवेशपूर्वकं प्रवेशविधिं दर्शयति। विविधप्रकारेण दीप्यत इति वैरोचनो महावज्रधरः तं प्रयोगः तत्परावृत्त्या द्वेषवज्रीकरणं

---

१. The printed text shows a change in the order of verses here.

तेन त्रिवज्रं प्रणवादित्रयं तस्मात् संभवो यस्य तं त्रिवज्रसंभवं शिष्यं कृत्वा रक्तवर्णमाःकारमरश्मिकं कायवाक्चित्तसर्वाङ्गे ध्यात्वा आवेशविधाने कृते वज्रेणावेशवज्रेण गृह्यते स्वीक्रियते ।

तदेवाह वज्रसत्त्वोऽक्षोभ्यः । महाराजोऽमिताभः । वैरोचनो महायशाः । वैरोचनः कायवाक्चित्तसमयं कायादिविषयमधिष्ठानं ददन्ति ।

तत्रावशेषेण कर्तव्ये इदं तदङ्गभूतं महामण्डलप्रवेशार्थं वज्रपदम् । किं तत् ?

आः खं वीर हूं इति ।

सर्वसमया एषा कायवाक्चित्तात्मकं हृदयं कायवाक्चित्तहृदयम् । तद्द्योतकाक्षरात्मको मन्त्रवज्रोऽयम् । तत्र मण्डलविधौ महावज्रः अभिषेकार्थं शिष्यः तस्याभिषेकः महावज्राभिषेकः तदेव गोप्यत्वात् गुह्यं ज्ञानरहस्यम् ॥

खधातुं आकाशकुहरं सर्वबुद्धैः वैरोचनादिभिः परिपूर्णं विभावयेत् ध्यायात् । वाद्यगन्धैर्महामेघैरिति दिशेच्छादिभिः पञ्चकामगुणैः तत्र स्थितान् पूजयित्वा वज्रधीः आचार्यः भावयेत् । स्वयंलिखितवज्रो मण्डले भावयेत् यथाक्रमेण संपुटीकुर्यात् ॥

इत्याह च ॥

त्रिवज्रेत्यादि । त्रिवज्रसमयवज्रैः आत्मस्वमुद्राकायवाक्चित्तैकीकरणसंभूतैः सर्षपैर्बोधिचित्तविन्दुभिः तथागतान् व्रती आचार्यः भावयेत् । शिष्याभिषेकदानार्थं ताडयेत् चोदयेत् । तदा तस्मिन् काले चोदिताः तथागताः स्वयमेवोपेत्याभिषेकमधिष्ठानं ददन्ति ।

अथवा बुद्धान् वैरोचनादीन् वज्रसत्त्वसमाधिना भावयेत् ध्यायात् । एवं ध्यात्वा तान् कलशान् सुलोचनादिभिर्धारितान् भावयेत् । बुध आचार्यः ।

ततः किमित्याह । दृढमतिः एकाग्रबुद्धिः । शिष्यं वज्रवैरोचनं चिन्तेत् । तदनन्तरं मन्त्रज्ञः देवतानिष्पत्तिबीजज्ञं कायवाक्चित्तवज्रिणः शिष्यस्य कायमण्डले यथावत् न्यासं कुर्वीत ।

एवं विन्यासे कृते इदं वक्ष्यमाणकं सर्वस्मिन् मण्डले अभिषेकः सर्वाभिषेकः तत्र रहस्यं गोप्यभूतं सर्वाचार्याः चित्तमण्डलादावभिषेकदातारः । तेषां शिष्यं प्रति वाग्वज्रोदीरणं वाग्वज्राविष्करणम् ॥

किं तदित्याह । अभिषेकमित्यादि । अभिषेकं त्रैधातुकराज्यप्रतिष्ठापनं महावज्रमपरिहार्यं त्रैधातुकनमस्कृतं सर्वबुद्धानां सर्वतथागतानां पुरतः त्रिगुह्य-वज्रो महावज्रधरः तत्संभवं तदन्वयागतम् अहमद्य ददामि त्वयात्र किं प्रतिपत्तव्यमिति शिष्यसमाश्वासनम् ।

तत्रैवमुक्तवति वज्रगुरौ इदं वक्ष्यमाणं सर्वशिष्याः कुलभेदेन व्यवस्थिताः तैः महावज्रो वज्रगुरुः तस्य प्रार्थना अध्येषणा तत्र विधिः विधानं तदेव रहस्यं भवति ।

किं तत् ? बोधिवज्रेणेत्यादि । बोधिवज्रो महावज्रधरः बुद्धानां अक्षो-भ्यादीनां महमहो महाभिषेकः यथा येन प्रकारेण दत्तः तारणार्थाय मां संसारसागरोत्तरणाय खवज्रमहावज्रधरतुल्य अद्य इदानीं मे त्वत्शरणं गताय ददाहि प्रयच्छेति प्रार्थना ।

तदा तस्मिन् काले प्रहृष्टचेतसः अध्येषणाभिप्रसन्नमनाः गुरुः अभिषेकं दद्यात् । देवताविम्बं वाह्यमण्डलं तेन योगः शिष्यकायमण्डले यावद्विन्यासः तेन हेतुना हृदये तस्यैव हृत्पद्मे अधिपतिं मण्डलाधिपतिं न्यसेत् स्थापयेत् ।

एवं कृतात्मकस्य शिष्यस्य धीमतः प्रज्ञासंप्रयुक्तस्य मण्डलं यथाक्रमेण तत्त्वतो दर्शयेत् ।

समयमित्यादि । सर्वबुद्धैः निष्पन्नतथागतैः उदाहृतं कथितं समय-मलङ्घनीयं करणीयं श्रावयेत् वज्रशिष्याय प्रकाशयेत् । प्रांणिनश्च त्वया घात्या इत्यादि समयचतुष्टयं पञ्चमपटलोक्तसन्ध्याभाषाव्याख्यानेन ज्ञेयम् । अनेनानन्तरोक्तेन च वज्रमार्गेणाभेद्यसमाधिना सर्वसत्त्वान् वज्रशिष्यान् प्रचोदयेत् अनुशिष्यात् ।

एष मार्गः सर्वबुद्धानां दुरतिक्रमः समयसंवरः । कीदृक् ? परमशाश्वतः अनादिनिधनः । इत्याह च । मन्त्रं दद्यादित्यादि । गृहीतसमयसंवरः गुरुणा स्प्रष्टव्यः का सिद्धिस्तव रोचत इति ? स यदा ब्रूयात् इदं मे रोचत इति तदा तस्य तत्कार्यसाधनमन्त्रं दद्यात् । कथम् ? मन्त्रचोदनभाषितैरिति । मन्त्रार्थचोदना गुरुणा तत्र भाषितानि कथनानि तैर्मन्त्रचोदनभाषितैः शिष्य-वचनैः तस्याभिप्रायं ज्ञात्वा दद्यादिति योगः । मन्त्रराजस्य समाधिं तदनुरूपं देवतायोगं दत्त्वा गुह्यं गुह्याभिषेकं प्रस्तुतसिद्ध्यर्थं समारभेत् कुर्यात् ।

तद्दर्शयन्नाह शुक्रं वेत्यादि। वशित्वात् परिशिष्टामृतत्रयं गृह्यते। एतद-मृतपञ्चकमभिमन्त्र्य त्र्यक्षरेण विधानतः शोधनादिविधिनामृतीकृत्य वज्राधिपो वज्राचार्यो वज्रशिष्यं भक्षयेत् प्राशयेत्। एवमभिमतसिद्धिर्न दुर्लभा।

एवं गुह्यं वाह्याभिषेकेनाभिषिक्तस्य दर्शयन्नाह। चत्वार्येत इत्यादि। सर्वमन्त्रिणो नवयानसंप्रस्थितानां रहस्यमप्रकाश्यम्। ये पृथिव्यादयः त एते चत्वारो महागुह्याः परमरहस्याः। स्त्रीरूपमन्त्रचक्रेणेति। परिगृहीतस्त्रीरूपा[:] तथागतस्वभावेन स्थिताः। किमर्थम्? सत्त्वार्थचर्यया सत्त्वानां शान्त्याद्यर्थ-चर्याहेतोः वैरोचनादिरूपाः पृथिव्यादयः पुनः पुरुषपरिग्रहं प्रच्छाद्य लोच-नादिरूपमापन्ना इति यावत्॥

तत्र समयदानकाले वज्रमण्डलं चित्तमण्डलं तत्र मन्त्राः देवताः तासां सर्वासामाराधनं वशीकरणं तत्र रहस्यम्। किं तत्? हस्तिमांसमित्यादि। एतं विम्बं स्वमभ्यसेत्। मन्त्राणां देवतानां होमवलिरूपेण दद्यात्। एवं तुष्यन्ति नायकाः ईप्सितार्थप्रदानेन तुष्टिमुपयन्ति॥

प्रत्यहमित्यादि। वज्रशिष्यस्य प्राप्ताभिषेकस्य मण्डलं गणचक्रविधानं बुद्धोपमवज्रगुरुः प्रत्यहं प्रतिमासं प्रतिसंवत्सरं वा कर्तव्यरूपं दर्शयेदुपदिशेत्। कथम्? विण्मूत्रमांसकृत्येनेति। तत्र विण्मूत्रग्रहणेन पञ्चामृतपरिग्रहः मांसग्रहणेन पञ्चप्रदीपपरिग्रहः। कृत्यग्रहणेनाभक्ष्यपेयादिग्रहणम्। एतेन विडादिना वज्रगुह्यपदेन च द्वयेन्द्रियप्रयोगेण नृत्यगेयादिना च सर्वं प्रियं समादर्शयेदिति भावः॥

पञ्चामृताहारोपयोगकाले प्रत्ययसंदर्शनमाह। ओंकारमित्यादि। सर्व-मन्त्राणामादिभूतं प्रणवं पूर्वशोधिते प्रबोधिते चाहारे ध्यात्वा तत्क्षणात् सद्य एव ज्वलति ज्वलयति भगवान् महामन्त्रविद्यापुरुषः महावज्रधरः एवमाह॥

एवं लोकातिक्रान्तं कदाचित् साध्यमप्यस्ति इत्यह आह साधनमित्यादि। सर्वसिद्धीनां शान्त्यादिक्षुद्रसिद्धीनां साधनमनेनैव मार्गेण भवति। महासमय-साधनं गुलिकाद्यष्टविधमहासिद्धिसाधनम् अनेनैव प्रयत्नेन पारमितानयेनाति-प्रयत्नसाध्यं बुद्धबोधिमपि महामुद्रासिद्धिलक्षणं बुद्धत्वं स्वयमप्यनेनैवोपायेन साध्यते। नान्योपायेनेति यावत्॥

अमुमेवार्थं द्योतयति। अन्तर्द्धानमित्यादि सुगमम्॥

विण्मूत्रेत्यादि । विण्मूत्रं पञ्चामृतं महामांसं पञ्चप्रदीपं एतद्द्वयं समभागं कृत्वाकृष्याष्टम्यां चतुर्दश्यां वा गुलिकां कृत्वा छायायां विशोध्य शरावसंपुटे पद्मभाण्डे संपुटे स्थापयित्वा प्रतिदिनमेकैकं भक्षयेत् । ततः किमित्याह बुद्धैः सह संवसेदिति बुद्धाः सिद्धाः तैः सह संवसेत् । इत्याह च ॥

तत्रेत्यादि । तत्र सिद्धिप्रस्तावे इदं वक्ष्यमाणं सर्वगुह्यवज्राः यक्षप्रधानाः त एवाज्ञामार्गणतया किंकराः तेषां साधनपदं साधनोपायमिदम् ॥

खवज्रमध्यगतम् आकाशमध्यगतं ह्लीःकारं रक्तवर्णं ज्वालासुप्रभं पञ्चरश्मिसमाकीर्णं चिन्तेत् ध्यायात् । एवं कृत्वा खधातुः आकाशकुहरं दशदिग्व्याप्तं सर्वबुद्धैरक्षोभ्यादिभिः क्रोधपर्यन्तैः परिपूर्णं विभावयेत् । तेषां बुद्धानां कायवाक्चित्तपदं कायादिबीजं आः खं वीः एतत्त्रयं तत्र मन्त्रे ह्लीःकारे निपातयेत् ॥

तत्रेदमित्यादि । तत्र किङ्करनिष्पादने कायवाक्चित्तानां मन्त्रवज्रं रहस्यभूतम् अधिष्ठानपदं निष्पादनपदम् । किं तत् ? आः खं वीः एवमक्षरत्रयात्मकं किंकरं साधयित्वा यथाभिमतकर्मणि नियोजयेदिति ॥

पुनरपि किंकरविशेषं दर्शयन्नाह वज्रपाणिरित्यादि । वज्रपाणिरक्षोभ्यः तद्वत् तत्सदृशं महाविम्वमुग्रशरीरं यस्य तं वज्रपाणिमहाविम्बं निसुम्भराजं ध्यात्वा तथा पद्मपाणिरमिताभः तत्सदृशं महाद्युतिं महाप्रभावं हयग्रीवं तथा परिचिन्त्य प्रभाव्यूहैरसमैरजप्यत्वात् अपराजितो वैरोचनः तन्निष्पन्नं महाविम्बं महाप्रभाख्यं यमान्तकाख्यं च कुलभेदेन ध्यात्वा तेषु गुह्यपदं गुह्यधरं न्यसेत् स्थापयेत् ।

तत्र तेषु एवं प्रसूयमानं वज्रगुह्याः क्रोधाः तेषां पदम् आज्ञानियोजनम् ।

किं तत् ? सूर्यमण्डलमित्यादि । अचाल्यत्वाद् वज्रधरनिर्माणत्वात् अक्षोभ्यो निसुम्भराजः तं सूर्यमण्डलस्थं कृत्वा वज्रगुह्यपदमाज्ञायां नियोज्य प्रकल्पयेत् कुर्यात् । अमितायुमहाचक्रं हयग्रीवं किंकरं तथा पद्मसूर्यमण्डलस्थं कृत्वा तस्मै गुह्यपदं नियोजयेत् । तथा वैरोचनकिङ्करं चन्द्रसूर्योपरिस्थितं कृत्वा दद्यात् । चोदयेदित्यादि । एतान् वज्रकिङ्करान् सर्वानेव महाद्युतीन् महाप्रभान् तीव्रदुःखैर्जगदुद्धरणदुःखेन दुःखितत्वात् तीव्रदुःखा अक्षोभ्यादयः तैः तीव्रदुःखै चोदयेत् सिद्धिदानं प्रति प्रेरयेत् ॥

तत्र संचोदन इदं बीजम् । सर्ववज्रा वैरोचनादयः । तेषां हृदये चित्ते संचोदनं क्रोधाज्ञादानं प्रति प्रेरणम् । आँ हूँ इति क्रोधप्रेरणार्थं प्रत्य[ा]ज्ञादानवचनम् ॥

एवमधिपतिभिः क्रोधान् संचोदयित्वा तत्परिवारैरपि तामेव कारयितु काम आह महाशूलैरित्यादि । महाशूलैः शूलधरैः महावज्रैः वज्रधरैः अङ्कुशैरङ्कुशधरैः विविधैरन्यदन्यप्रहरणधरैः वरैरभेद्यपरिवारगणैः विधिवदुक्तक्रमेण चोदयेत् । एवं कृते किमित्याह बुद्धबोधिः प्रसिध्यतीति । बुद्ध[ः] साधकः तस्य बोधिरभिप्रेतार्थः सिध्यति निष्ठां गच्छति ।

इत्याह च । एवमप्यभाषत महावज्रधरः ॥

पर्वतेत्यादि विवृतार्थः ।

अत्र बुद्धत्वं प्रस्तुतं साधनमेव । षट्त्रिंशतामित्यादिना साधनफलमाह । षट्त्रिंशत्संख्यानामेकपर्वतानां परमाणवो रजांसि यावन्तो भवन्ति तावत्प्रमाणाः चेटादिभेदभिन्नाः । तस्य वज्रसत्त्वादिकिङ्करस्य ये भवन्ति ते सर्वे बोधिवज्रिणः साधकस्य सिध्यन्ति परिवाररूपेणाज्ञां मृगयन्तः तिष्ठन्ति । षट्त्रिंशद्ग्रहणमितो न्यूना न भवन्तीति दर्शनायोक्तम् ।

पुनरप्यनुशंसामाह दशदिगित्यादि । पूर्वादिदशसु दिक्षु सर्वबुद्धानां गङ्गानदीवालुकोपमानां बुद्धक्षेत्राणि यावन्ति सन्ति तानि सर्वाणि क्रामयेत् गच्छेत् । तत्र गत्वा धर्मं महाधर्मधरत्वप्राप्तिहेतुभूतं शृणोति तथागतसकाशात् । ततः किमित्याह बुद्धभूमिं च प्राप्नुयादिति ।

एतदुक्तं भवति । उत्पत्तिक्रमसमाधिस्थोऽनन्तरोक्तक्रमेण किङ्करसिद्धिं प्राप्य तथागताराधनेन निष्पन्नक्रमसमाधिमागम्य महावज्रधरपदमाप्नुयादिति ।

इत्याह भगवान् महासमयवज्रहासो महावज्रधरः ॥

तत्रेदमित्यादि । सर्वे किङ्करा लौकिकलोकोत्तराः । त एव गोप्यत्वात् गुह्याः तेषां संबोधनार्थं वज्ररहस्यम् ॥

वज्रसत्त्वोपदेशभूतं रहस्यं कर्म प्रस्तूयते वज्रसत्त्वेत्यादि । वज्रसत्त्वोऽक्षोभ्यः तस्य महाज्ञानं चित्स्वरूपं हूङ्कारं वाग्वज्रोऽमिताभः तं धारयति निष्पादयतीति वाग्वज्रधरः । कायवज्रो वैरोचनः तस्य महान्यासनिष्पादकमोङ्कारः एतैरक्षरैः किङ्करं चोदयेत् अधितिष्ठेत् सदा निष्पादनात् प्रभृति सर्वकालेषु ।

तत्र किङ्करसाधनविषये इदं प्रस्तूयमानं वज्रज्ञानास्तथागताः तेषां चक्रं वृन्दं तेन कृतं मन्त्रा वचनानि तेषां समयपदं अलङ्घनीया व्यवस्था । तच्च समयचोदनादिभेदेन चतुर्विधम् । समयो महावज्रधराज्ञातेन चोदनं विज्ञापनं समयप्रेरणं तेनैव समयेन कार्यं प्रयोजनं समयः साध्योऽर्थः तस्मिन् आमन्त्रणं संज्ञानियोजनं समयः कृत्यं तस्मिन् वन्धः हठान्नियोजनम् ।

एवं सिद्धाः किं कुर्वन्तीत्याह खधात्वित्यादि । आकाशधातुं विपुलमनन्तं शुद्धमनावरणं सर्वधर्मविर्वजितं दर्शनाद्यतीतम् । एवंविधमाकाशधातुं पिण्डरूपेण वज्रवत् कठिनरूपं साधकचोदिताः किङ्कराः कुर्वन्ति । किं पुनस्तैरसाध्यमित्यतिशयोक्तिः ।

इत्याह भगवान् सर्वबुद्धैकपुत्रः सर्वबुद्धा एकपुत्रा यस्य स महावज्रधर एवमाह ।

इदानीं राजादीनां वशीकरणमाह बुद्धं वेत्यादि । बुद्धप्राज्ञं शास्त्रकुलं वज्रसत्त्वो धीरः तमपि वशमानेतुं स्वाभिप्राये स्थापयितुं यदीच्छेत् इदं प्रस्तूयमानं महागुह्यं रहस्यभूतं त्रिवज्राग्रधरं कायादिस्वभावं महामञ्जुश्रीरूपं चिन्तेत् ध्यायात् ॥

कथमित्याह खवज्रेत्यादि । झटित्यात्मानं मञ्जुवज्रं महावलं दुःसाध्यसाधनं खवज्रमध्यगतं प्रभास्वरनिष्पन्नं भावयेत् । पञ्चवाणप्रयोगेणेति । पञ्चवाणाः मदनमोहननिर्मोहनमूर्च्छननिश्चेष्टीकरणमिति पञ्चशराः तेषां प्रयोगेण प्रेरणेन मकुटाग्रे साध्यवरे संस्फरेत् ध्यायात् चेत् ।

कथं तत् । मूर्द्धनाभिगुह्यचरणेषु पञ्चस्थानेषु मन्त्रज्ञः बीजज्ञो मन्त्री क्रूरवज्रेण दृढाध्याशयेन पातयेत् । पञ्चावाण[ान्] निक्षिपेत् वालः मञ्जुघोषः तस्मिन् बुद्धिश्चिन्ता यस्य स वालबुद्धिः साधकः महायशैर्महाशक्तिभिः मदनादिवाणैः साध्यं मूर्छितं मूढं त्रस्तमशरणं भावयेत् ध्यायात् ॥

इदं वशीकरणध्यानम् । गुह्यचोदनेन अध्यात्मपरायणैः एकं पक्षमर्धमासं ध्यातव्यम् । सर्वमन्त्राणां सर्वतथागतानां रहस्यं वज्रार्थबुद्धिना महावज्रधरेण गीतं कथितम् ॥

विनयार्थप्रयोगमाह खवज्रेत्यादि । आकाशकुहरगतं हूङ्कारं ध्यात्वा तत्परावृत्त्या बुद्धमण्डलं सर्वतथागतव्यूहमुत्तमं चिन्तयेत् । वज्रमन्त्र ओङ्कारः । तदाद्यैः पञ्चभिर्बीजैः त्रिवज्रादीनसाध्यभूतान् दुष्टान् प्रभावयेत् ॥

तेषां चक्षुर्गतं चक्षुगोलकगतं ओङ्कारं प्रस्फुरद्रूपं ध्यात्वा गगनकुहर-वर्तिबुद्धमण्डलमेते पश्यन्तीत्यधिष्ठानविधानादर्शयेत् । एवं कृते सर्वमन्त्राणां सर्वतथागतानां विम्बं महामुद्रारूपं पश्यते साध्याः पश्यन्ति ॥

क्षुत्तृषाद्यैरित्यादि । जिघत्सापिपासादाहादिभिरभिभूतः साधकः इदं योगं विचिन्तयेत् । भ्रश्यति विनश्यति सर्वदुःखानि कायिकमानसिकदुःखानि चित्तवज्रधरो यथा ॥

महावज्रधरवचनमेवं दर्शयन्नाह । वैरोचनेत्यादि । वैरोचनरूपं सर्वार्थ-संपदं ध्यात्वा वंकारं पूर्णचन्द्रमण्डलाकारम् अमृतविन्दुवर्षिणं वक्त्रगतं तालुम-ध्यगतं ओङ्कारं सितवर्णं वङ्कारस्रवदमृतविन्दुमन्तः प्रवेशयन्तं न्यसेत् ॥

तद्ध्यानम् । सर्वभक्ष्याणां यथायथभोजिनामालयमारोग्यनिलयं चिन्ता-मणिविभूषितं यौवनारोग्यसत्सुखप्रदत्वात् चिन्तामणिवत् पूज्यं सर्वदुःखहरं विषगरभूतादिसर्वोपद्रवनिवारणं शान्तं सर्वक्लेशशमनं च ज्ञानवज्रप्रचोदितं भावनं महावज्रधरत्वापादानम् ।

इत्याह भगवान् चिन्तामणिवज्रः रत्नकेतुस्वभावो महावज्रधरः । अथेत्यादि । महावज्रधरः महावीरवज्रः तथागत इति कश्चित् समाधिविशेषः । वज्रभावना तन्निष्पादिका चित्तैकाग्र[ता] तया आविष्कृतं पदाग्रं बीजविशेषः तं वाग्वज्रेभ्यो निश्चारयेत् ।

वीः । तद्वीजं खवज्रमध्यगतं बुद्धमण्डलसुप्रभमक्षोभ्यादिबुद्धचक्रपरिवृतं त्रिवज्रकाययोगेन कायवाक्चित्तैकीकरणेन वज्रं निष्पाद्य इदं विचिन्तयेत् ॥

सर्वालङ्कारजं पुष्टं महापुरुषलक्षणोपेतत्वात् । पीतवज्रः रत्नसंभवः तस्यैव विजृम्भितं विलसितं यस्य स तथा जटामकुटधरं शान्तं ध्यात्वा सर्वं शान्त्यादिकं समारभेत् कुर्यात् ।

वीरवज्रः महावज्रधरः । तस्योर्मिमाला स्फरणकल्लोलमाला यस्मिन् समाधौ स तथा[१] ॥

अथेत्यादि । महावज्रधरः महावीरवज्रः तथागता इति कश्चित् समाधि-विशेषः, वज्रभावना तन्निष्पादिका चित्तैकाग्रत[ा त]या आविष्कृतं पदाग्रं बीजविशेषः । तं वाग्वज्रेभ्यो निश्चारयेत् ।

---

१. वीः । तद्वीजं···स तथा । repeated in MS.

अथेत्यादि । समन्तात् सर्वबुद्धैः विघुष्यते स्तूयते । वृन्दारूपं यस्मिन् समाधौ तन्नामकममेद्यं समाधिं चित्तैकाग्रतां समापद्य संस्कृत्याधिष्ठाय महा-वज्रा भाव्यते निष्पाद्यत इति महावज्रभावनावृन्दा तस्याः पदं निष्पादकं बीजं स्वकायवाक्चित्तवज्रेभ्यो निश्चारयेत् ।

किं तत् ? चुँ खवज्रे सूर्यमण्डलं विभाव्य तन्नानन्तरोक्तं बीजं विन्यस्य विधानेन तथागतस्फरणसंहारेण बुद्धमेघान् स्वमाण्डलेयव्यवस्थितान् त्रिवज्रान् कायवज्रादिभिरधिष्ठितान् महायशान् सकलदुःखापनयनेन प्राप्तकीर्तिन् ।।

पातानां दुष्टानां कायवाक्चित्तवज्रेभ्यः पातनं ध्यायन्तीं चुन्दावज्रीं प्रभावयेत् । सर्वालङ्कारसंपूर्णां वज्रसत्त्वं महासत्त्वं ध्यात्वा मन्त्रास्तथागताः तेषां पदं चिह्नं न्यसेत् ।

वज्रसत्त्वं तच्चिह्नं न्यसेदिति यावत् ।

वज्रोऽक्षोभ्यः समयत्यनुकरोति चिह्नेनेति वज्रसमयं चुन्दारूपं तस्मिन् ज्ञानरश्मिः ज्ञानालोको यस्मिन् समाधौ स तथा ।

अथेत्यादि । सर्वधनधान्येष्वाशा तां वज्रवद् भुनक्ति पालयतीति वज्र-संभोगः तन्नामकं समापद्येदं समाधिचक्रं जम्भलसमाधिविशेषं नीयत येन बीजेन तं स्वकायादिभ्यो निश्चारयेत् ।।

जँ ।। खवज्रमध्यगतं बुद्धो जम्भलः स एव सारत्वान्मण्डः तं लाति निष्पाद-यतीति बुद्धमण्डलबीजम् । तत्र सर्वबुद्धान् रत्नकुलीनान् विधानेन संहरण-योगेन पातयेदन्तर्भावयेत् ।।

तद्बीजपरावृत्त्या महायक्षं जम्भलं कनकवर्णं बृहदुदरं वामनं त्रिमुख-षड्भुजं दक्षिणभुजैः मातुलुङ्गाङ्कुशवाणधरं वामत एकेन स्वविद्यालिङ्गनं परमन्याभ्यां सपाशनकुलकार्मुकधरं जटामुकुटधरं इदंविधमात्मानं जम्भलं द्रव्यसाधनं भावयेत् ।।

पञ्चबुद्धान् वैरोचनादीन् विधानेनानुक्रमेण शिरःकण्ठहृन्नाभिजंघासु ओङ्कारादिबीजैर्विभावयेत् । ततः स्वहृदयात् स्वसदृशं जम्भलं निश्चार्य पूर्ववत् सदृशं कृत्वा तस्य मुकुटे महासुखं स्वमुद्रासमायुक्तं जङ्कारोद्बोधिचित्त-धारया सिञ्चन्तं ध्यात्वा तस्य शिरसि वज्रामृतोदकं ओं जम्भलजलेन्द्राय स्वाहेति मन्त्रोच्चारणपूर्वकं ध्यायन् एकं दद्यात् ।

वज्रसत्त्वं विधानेन मुकुटे तस्य चिन्तयेदिति । एवं कृते तुष्टो हि साधकस्य आशां परिपूरयति ।

वज्रमुद्रा अभेद्यजम्भलमुद्रा । सैवालङ्ध्यत्वात् समयः । तेन द्रव्याराधनं द्रव्यनिष्पादनं तदेव केतुरिव उच्छ्रिता श्रीः सामर्थ्यं यस्मिन् समाधौ स तथा ।

अथेत्यादिना यक्षिणीसाधनमाह । कामरूपादयो विषयाः । तेषामुपभोगे श्रीः विलासो यस्मिन् तन्नामकं समाधिं समापद्य इदं प्रस्तूयमानं सर्वयक्षिणीनां समयनिष्पादकं वज्रपदं बीजाक्षरं स्वकायादिभ्यो निश्चारयामास ॥

क्षिं ॥ खधातावित्यादि । क्षधातौ क्षिङ्कारजं चतुरस्रादिगुणोपेतं कूटागारं ध्यात्वा पुष्पगन्धसमाकुलमिति । वाह्याध्यात्मिकपूजाभिः संपूज्य खधातुं गगनं सर्वयक्षिण्यैः यक्षिणीवृन्दैः परिपूर्णं ध्यायात् त्रिवज्रयोगेन पातयेत् कूटागारोदरेषु प्रवेशयेत् । तदनन्तरं विम्बं सवलं यक्षिणीवृन्दमेकं यक्षिणीरूपं विचिन्तयेत् ।

त्रिवज्रेत्यादि । त्रिवज्रकर्मभेदेनेति कामाद्यधिष्ठानेन तस्य यक्षिणी-रूपस्य ध्यानं पञ्चकुलीकरणं विचिन्तयेत् । मञ्जुवज्रसमाधिस्थः साधकः मकुटे यक्षिणीमस्तके क्रोधं यमान्तकाद्यन्यतमं स्तम्भनार्थं प्रभावयेत् ॥

हृदये यक्षिणी हृत्पद्मकर्णिकायां मन्त्रपदं क्षिङ्कारं ध्यात्वा वज्रयोगं समापत्तिमारभेत् ॥

सर्वयक्षिणीनां समता एकीकरणं सैव विहरणं क्रीडा तस्य भावना । पुनः पुनरभ्यस्यमानं तद्वज्रपदभेद्यं यस्मिन् समाधौ स तथा ॥

क्षुद्रसिद्धिं दर्शयन्नाह । अथेत्यादि । वज्रमन्त्राः तथागताः । सिद्धयो देव्यः । तेषां विजृम्भितं समापत्तिव्यापारः । स यस्मिन् तं समाधिं समापद्य हीनाः लौकिकडाकिन्यः तासां सिद्धिं प्राप्त्युपायं स्वकायवाक्चित्तवज्रेभ्यः तासामेव कायवाक्चित्तर्द्धिप्रदर्शनेन निश्चारयेदुक्तवान् ॥

कथम् ? कायवाक्चित्तेत्यादि । नानारूपग्रहणेन कायसंसिद्धया नानारुतेन वाक्सिद्धया यथाभिलषितार्थप्राप्त्या चित्तसंसिद्धया प्रोक्ताः वज्रडाकिन्यः । तासां रूपधराः तत्सदृशाः प्रकर्षेण भान्तीति प्रभा देव्यः जाम्बूनदप्रभाकाराः उपलक्षणाश्रयत्वात् कनकादिप्रभाः हीनसिद्धिं स्वरूपपरिवर्तनादिलक्षणे समाश्रिताः ।

वज्रडाकिनीनां लौकिकडाकिनीनां च समापत्तिं फलभेदं दर्शयन्नाह अन्तर्धानेत्यादि । अन्तर्धानं निःस्वभावीकरणं तदादिः उच्चाटनादिकं यासां ताः अन्तर्धानादयः वज्रडाकिन्यः तासां संसिद्धौ समापत्तौ साधकः भवेद् वज्रधरः प्रभुः । यक्षराज्ये लौकिकडाकिन्यः ताभिः समापत्तौ मन्त्रपरायणो विद्याधरः प्रभुर्भवतीति विशेषः ।।

तत्रेत्यादिना आसां साधनं दर्शयति । वज्रसिद्धयो देव्यः । तासां च पशुरूपसंपत् तत्र मन्त्रसिद्धीनि ।।

पाठसिद्धानि मन्त्रपदानि किं रूपाणीत्याह । सर्वाणीत्यादि । चारुरूपाणि प्रभास्वराणि प्रीणयन्ति आप्याययन्ति दर्शनेनैव ।।

तानि दर्शयन्ति । उष्णीष इत्यादि उष्णीष उष्णीषचक्रवर्तिमन्त्री सर्वसिद्धीनां सर्वदेवीनां साधने भवेच्चिन्तामणिप्रभुरागुकारित्वेन चिन्तामणिवदभिलषितार्थसाधको भवति । किमेतावदेव साधयति इत्याह बुद्धबोधी[illegible]दि । बुद्धबोधयो वज्रडाकिन्यः ताश्च साधयति । न केवलमेतदेव करोति किं तु बुद्धबोधिप्रभावनमिति । बुद्धत्वं वज्रधरत्वं च साधयति ।।

इत्याह भगवान् सर्वाशापरिपूरकः ।।

एवं कृतकृत्यस्य योगिनो मुद्राप्राप्त्युपायमुक्त्वा ताभिः सहचरणक्रममुपक्षिपन्नाह । अथेत्यादि । सर्वतथागताः कायवज्रादयः । तेषां कायादिवज्रैः व्रतं वेषविशेषः तस्य समादाने चर्याभ्यासिनं तेषामेव कायादिस्वरूपकथनेन निश्चारयेदुक्तवान् ।।

कायेत्यादि । वैरोचनादियोगिनां कायवाक्चित्तभावनं स्वरूपेणैव नेपथ्येनैव कर्तव्यम्, न भावनामात्रेण । एवं महामुद्रासिद्धिरवाप्यते ।।

तत्रेत्यादिना कुलत्रयसंवरं दर्शयति ।।

जटामुकुटेत्यादि । विम्बं देवतारूपं जटामकुटमण्डितं शुक्लवस्त्रं महत्प्रासादिकं विधिवत् दार्वादिमयं कारयेत् । मन्त्रः कायवज्रः तस्य संवरं वक्ष्यमाणकं तेन संवृतं युक्तं कारयेत् ।।

षोडशाब्दिकया मुद्रया सह वैरोचनयोगिचर्यां चरेत् । तस्या नेपथ्यकथनम् लोचनापदसंभोगैरिति । लोच[न]ावन्मुखवर्णं प्रहरणादियुक्तं कारयेत् । वज्रचिह्नैस्तु कारयेदिति वज्राक्षोभ्यः तच्चिह्नैः तदीयमुखवर्णभुजप्रहरणयुक्तोऽक्षोभ्ययोगी च तं चरेत् । मुद्रां मामकीरूपधारिणीम् । विद्यामन्त्रो

वज्रसत्त्वं विधानेन मुकुटे तस्य चिन्तयेदिति । एवं कृते तुष्टो हि साधकस्य आशां परिपूरयति ।

वज्रमुद्रा अभेद्यजम्भलमुद्रा । सैवालङ्घ्यत्वात् समयः । तेन द्रव्याराधनं द्रव्यनिष्पादनं तदेव केतुरिव उच्छ्रिता श्रीः सामर्थ्यं यस्मिन् समाधौ स तथा ।

अथेत्यादिना यक्षिणीसाधनमाह । कामरूपादयो विषयाः । तेषामुपभोगे श्रीः विलासो यस्मिन् तन्नामकं समाधिं समापद्य इदं प्रस्तूयमानं सर्वयक्षिणीनां समयनिष्पादकं वज्रपदं बीजाक्षरं स्वकायादिभ्यो निश्चारयामास ॥

क्षिं ॥ खधातावित्यादि । क्षधातौ क्षिङ्कारजं चतुरस्रादिगुणोपेतं कूटागारं ध्यात्वा पुष्पगन्धसमाकुलमिति । वाह्याध्यात्मिकपूजाभिः संपूज्य खधातुं गगनं सर्वयक्षिण्यैः यक्षिणीवृन्दैः परिपूर्णं ध्यायात् त्रिवज्रयोगेन पातयेत् कूटागारोदरेषु प्रवेशयेत् । तदनन्तरं विम्वं सवलं यक्षिणीवृन्दमेकं यक्षिणीरूपं विचिन्तयेत् ।

त्रिवज्रेत्यादि । त्रिवज्रकर्मभेदेनेति कामाद्यधिष्ठानेन तस्य यक्षिणी-रूपस्य ध्यानं पञ्चकुलीकरणं विचिन्तयेत् । मञ्जुवज्रसमाधिस्थः साधकः मकुटे यक्षिणीमस्तके क्रोधं यमान्तकाद्यन्यतमं स्तम्भनार्थं प्रभावयेत् ॥

हृदये यक्षिणी हृत्पद्मकर्णिकायां मन्त्रपदं क्षिङ्कारं ध्यात्वा वज्रयोगं समापत्तिमारभेत् ॥

सर्वयक्षिणीनां समता एकीकरणं सैव विहरणं क्रीडा तस्य भावना । पुनः पुनरभ्यस्यमानं तद्वज्रपदभेद्यं यस्मिन् समाधौ स तथा ॥

क्षुद्रसिद्धिं दर्शयन्नाह । अथेत्यादि । वज्रमन्त्राः तथागताः । सिद्धयो देव्यः । तेषां विजृम्भितं समापत्तिव्यापारः । स यस्मिन् तं समाधिं समापद्य हीनाः लौकिकडाकिन्यः तासां सिद्धिं प्राप्त्युपायं स्वकायवाक्चित्तवज्रेभ्यः तासामेव कायवाक्चित्तर्द्धिप्रदर्शनेन निश्चारयेदुक्तवान् ॥

कथम् ? कायवाक्चित्तेत्यादि । नानारूपग्रहणेन कायसंसिद्ध्या नानारुतेन वाक्सिद्ध्या यथाभिलषितार्थप्राप्त्या चित्तसंसिद्ध्या प्रोक्ताः वज्रडाकिन्यः । तासां रूपधराः तत्सदृशाः प्रकर्षेण भान्तीति प्रभा देव्यः जाम्बूनदप्रभाकाराः उपलक्षणाश्रयत्वात् कनकादिप्रभाः हीनसिद्धिं स्वरूपपरिवर्तनादिलक्षणे समाश्रिताः ।

वज्रडाकिनीनां लौकिकडाकिनीनां च समापत्तिं फलभेदं दर्शयन्नाह अन्तर्धानेत्यादि । अन्तर्धानं निःस्वभावीकरणं तदादिः उच्चाटनादिकं यासां ताः अन्तर्धानादयः वज्रडाकिन्यः तासां संसिद्धौ समापत्तौ साधकः भवेद् वज्रधरः प्रभुः । यक्षराज्ये लौकिकडाकिन्यः ताभिः समापत्तौ मन्त्रपरायणो विद्याधरः प्रभुर्भवतीति विशेषः ॥

तत्रेत्यादिना आसां साधनं दर्शयति । वज्रसिद्धयो देव्यः । तासां च पशुरूपसंपत् तत्र मन्त्रसिद्धीनि ॥

पाठसिद्धानि मन्त्रपदानि किं रूपाणीत्याह । सर्वाणीत्यादि । चारुरूपाणि प्रभास्वराणि प्रीणयन्ति आप्यायन्ति दर्शनेनैव ॥

तानि दर्शयन्ति । उष्णीष इत्यादि उष्णीष उष्णीषचक्रवर्तिमन्त्री सर्वसिद्धीनां सर्वदेवीनां साधने भवेच्चिन्तामणिप्रभुरागुकारित्वेन चिन्तामणिवदभिलषितार्थसाधको भवति । किमेतावदेव साधयति इत्याह बुद्धबोधी[illegible]दि । बुद्धबोधयो वज्रडाकिन्यः ताश्च साधयति । न केवलमेतदेव करोति किं तु बुद्धबोधिप्रभावनमिति । बुद्धत्वं वज्रधरत्वं च साधयति ॥

इत्याह भगवान् सर्वाशापरिपूरकः ॥

एवं कृतकृत्यस्य योगिनो मुद्राप्राप्त्युपायमुक्त्वा ताभिः सहचरणक्रममुपक्षिपन्नाह । अथेत्यादि । सर्वतथागताः कायवज्रादयः । तेषां कायादिवज्रैः व्रतं वेषविशेषः तस्य समादाने चर्याभ्यासिनं तेषामेव कायादिस्वरूपकथनेन निश्चारयेदुक्तवान् ॥

कायेत्यादि । वैरोचनादियोगिनां कायवाक्चित्तभावनं स्वरूपेणैव नेपथ्येनैव कर्तव्यम्, न भावनामात्रेण । एवं महामुद्रासिद्धिरवाप्यते ॥

तत्रेत्यादिना कुलत्रयसंवरं दर्शयति ॥

जटामुकुटेत्यादि । विम्बं देवतारूपं जटामकुटमण्डितं शुक्लवस्त्रं महत्प्रासादिकं विधिवत् दार्वादिमयं कारयेत् । मन्त्रः कायवज्रः तस्य संवरं वक्ष्यमाणकं तेन संवृतं युक्तं कारयेत् ॥

षोडशाब्दिकया मुद्रया सह वैरोचनयोगिचर्यां चरेत् । तस्या नेपथ्यकथनम् लोचनापदसंभोगैरिति । लोच[न]ावन्मुखवर्णं प्रहरणादियुक्तं कारयेत् । वज्रचिह्नैस्तु कारयेदिति वज्राक्षोभ्यः तच्चिह्नैः तदीयमुखवर्णभुजप्रहरणयुक्तोऽक्षोभ्ययोगी च तं चरेत् । मुद्रां मामकीरूपधारिणीम् । विद्यामन्त्रो

योगी। तस्य विधानज्ञामिङ्गितज्ञां मन्त्रतन्त्रसुशिक्षितां कर्मप्रसरकुशलामासाद्य व्रतं चरेत् कारयेत् इत्यादिना अमिताभयोगिनो धर्मचारिणीं दर्शयति ॥

तथागतोऽमिताभोऽभिप्रेतः। तस्य भार्या बुद्धबोधिः। मुद्राकथनेनैव तत्सहचरोऽपि कथितो भवति। एवं कुलत्रयसमयसंवरसंवृतः विद्याव्रती ताभिः सार्द्धं गुह्यपूजां समापत्तिं चतुःसन्ध्यं कुर्यात्।

कर्मेत्यादिना साधकस्याहारविधिमाह। धान्यैरभ्यवहार्यैः शरीरस्थितिं कृत्वा व्रतचर्यां चरेदिति दैन्यवृत्तिं परिहरति एवमित्यादिनानुशंसां दर्शयति।

तथा परस्वहरणमित्यादिसंवरं नवमपटले सन्ध्याभाषया विवृतम्। तथात्रापि रागवज्राङ्कुशीमित्यादिना मामकीं विशेषयति। तां वाग्वज्राग्रचित्तेभ्यः अमिताभवैरोचनाक्षोभ्ययोगिभ्यो विभजेत्। इदं विधानं युज्यति प्रशस्यति।

स्वमुद्रामित्यादिना ज्ञानमुद्रया सहचर्यां दर्शयति। स्वमुद्रां हृदयस्थां वज्रधात्वीश्वरीं त्र्यक्षरवज्रीणां वैरोचनादियोगीनां वाह्याङ्गनानिचये ह्यादद्यात्। अत आह एवमित्यादि।

वन इत्यादि। वने महाटव्यां भिक्षामन्वेषणं चरेत्। साधको दृढ निश्चयः उत्तप्तवीर्यः। अस्मै दिव्यभोजनं मनुष्यासाधारणमन्नम्। दिव्यमण्डितं दिव्यपरिवारोपनीतं भोजनं प्रयच्छन्ति। यथारुतम् ॥

अतिक्रमेदित्यादिना चर्याफलमाह। त्रिवज्रात्मा योगी अतिक्रमेत् मानुष्यभावमभिभवति नश्यतीति नाशं प्राकृतं शरीरं तत्परावृत्त्य वज्रवदभेद्यमक्षरमविनश्वरं भवेत् ॥

असुरीमित्यादि सुगमम् ॥ त्रिवज्रज्ञानं योगिनः तैः सेवितं विद्याव्रतं चरेदिति सामान्योऽयं विधिः ॥

इदं तदनन्तरोक्तं चर्याव्रतं सर्वमन्त्राणां सर्वसाधकानां महायानं महार्थावाहकं गुह्यतत्त्वमतिरहस्यं त्रिवज्रसंभूतं कायादिवज्रैः वज्रकायनिष्पादकं बुद्धबोधिः परमार्थसत्यं तत्प्रवेशकं प्रापकं प्रभास्वरविशुद्धिं ज्ञानकायावाहकमिति यावत्।

इत्यादिना सङ्गीतिकारः पटलमुपसंहरति। सर्वसिद्धीनां मण्डलं वृन्दं तस्मिन् वज्राणां साधकानामभिसंबोधिः ज्ञानोत्पत्तिः। तदर्थो ग्रन्थसंदर्भः पटलः षोडशः। यथारुतम् ॥

॥ प्रदीपोद्द्योतनटीकायां षोडशपटले षट्कोटिव्याख्या ॥

---

## ॥ सप्तदशः पटलः ॥

अधिगतक्रमद्वयस्यापि लौकिकलोकोत्तरसमयसंवरानुष्ठानेन विना सिद्धिः दूरीभवतीति तत्प्रतिपादकं सप्तदशपटलमुपक्षिप्य सर्वतथागताध्येषणां दर्शयन् संगीतिकृदाह अथेत्यादि । विभक्तार्थः ॥

अक्षोभ्येत्यादि । सर्वक्लेशव्यूहैरचाल्यमक्षोभ्यवज्रचित्तं यस्य चतुः-शून्यात्मकत्वान्महाज्ञानजा वज्राः अक्षोभ्यादयः तान् धारयतीति वज्रधातुः सत्यद्वयविभागपरिज्ञानान्महाबुधः परमार्थमण्डलकायमण्डलोत्सर्गमण्डलस्वभाव-त्वात् त्रिमण्डलः । कायादिवज्राणां मध्ये प्रधानत्वात् त्रिवज्राग्र भाष गुह्यसमयतत्त्वमस्माकं प्रकाशय इत्यक्षोभ्यद्वारेण स्तुवन्ति ॥

प्रभास्वराग्नीनदीप्यत इति वैरोचनः । अतएव महाशुद्धः वज्रास्त-थागताः । तेषां विशुद्धिभावेन षष्ठत्वा[त्] शान्तः । परमानन्दात्मकत्वात् महारतिः । प्रकृतिप्रभास्वरान् स्वभावविशुद्धान् धर्मान् प्रकाशय वज्रेत्या-मन्त्रयति ।

रत्नाः रत्नकुलीनाः तान् रजयति द्योतयतीति रत्नराजः । समतात्मक-त्वात् सुगाम्भीर्यः । अतएव खवज्राकाशनिर्मलः । आदिशुद्धत्वात् स्वभावशुद्धः । सर्वधर्मैरसंसृष्टत्वात् निर्लेपः । गुह्यं प्रकाशय ॥

वज्रामृताः पद्मकुलीनाः तेषामाधिपत्येन महाराजप्रत्यवेक्षणात्मकत्वात् निर्विकल्पः । अतएव खवज्रिणः । रागः संसारसक्तिलक्षणः तस्य पारः कोटिः ताम् गता बुद्धिः तां प्राप्त इति रागपारमिताप्राप्तः ॥

अमोघज्ञानप्रदानादमोघवज्रः अमोघकुलीनास्तैः संबुद्धः पुरस्कृत इत्य-मोघवज्रसंबुद्धः साधकजन[ा]नां शान्त्यादिकर्मभिः अभिप्रायनिष्पादनात् सर्वाशापरिपूरकः । शुद्धस्वभावः प्रभास्वरः तत्प्रभावत्वात् शुद्धस्वभावसंभूतः । एवंभूत हे वज्रसत्त्व तुभ्यं नमः इति स्तोत्रोपसंहारः । नासन्ध्यम् ॥

एभिरनन्तरोक्तैः पञ्चतथागतस्वभावसूचकैः शान्तैः प्रकृतिपरिशुद्धैः सर्वतथागतप्रचोदितैः त्र्यध्ववर्तितथागतभाषितैः स्तोत्रपदैः वज्रसंभोगं महावज्र-

धरं यः स्तुनूयात् पूजयेत् सोऽपि पूजकः बुद्धसमयः महावज्रधरतुल्यो भवेदिति स्तोत्रानुशंसा । यथारुतम् ॥

अथेत्यादिना महावज्रधरस्य प्रसादाभिमुख्यं दर्शयति । सर्वक्लेशोप-क्लेशप्रशमनात् शास्ता । सर्वबुद्धाः पञ्चस्कन्धात्मकाः सर्वसत्त्वाः तेषां यथा-संभवं स्वर्गापवर्गप्रापणात् अनुकम्पकः । वज्रगुह्यं समयचतुष्टयम् । तस्य पदं प्रतिष्ठाभूतं शुद्धमनाविलं वाग्वज्रमुदीरयन् ॥

अहो हीत्यादि । सर्वबुद्धानाम् अक्षोभ्यादीनां धर्मधातुस्वभावं महाक्षरं वचनप्रबन्धम् । अहो आश्चर्यम् । यस्मात् प्रकृतिप्रभास्वरं शुद्धं खधातुमिव निर्मलम् । नासन्ध्यम् ॥

एवं तथागतस्तुतिप्रशंसामङ्गीकृत्य यथा समयं प्रकाशयति तं दर्शयितु-माह । अथेत्यादि ।

समयचतुष्टयं प्राणातिपातादिकं बुद्धैर्वैरोचनयोगिभिः कायवाक्चित्त-वज्राणां वैरोचनादियोगिनां उक्तो योऽयमद्भुतः समयः सर्वबुद्धानां सर्व-योगिनां शाश्वतो नित्यः वज्रधारिणो महावज्रधरप्राप्तये रक्ष्यः परिपाल्यः ।

न केवलं वैरोचनयोगिनामयं समयः किं तु महावज्रधरयोगिनोऽपि अयमेवेति दर्शयन्नाह यश्चेत्यादि सुगमम् ।

एवं सम्यक्संबुद्धयानिनां समयमुक्त्वा प्रत्येकबोध्यधिमुक्तानां समयमव-तारयन्नाह अथेत्यादि । रत्नत्रयप्रसादोत्पादनेन सत्त्वार्थकारणं देशना सा पुनः प्राधान्येन वाक्काया । सा च प्रत्येकबुद्धानां परोपदेशरहितत्वात् न विद्यते । अथ च यमकप्रातिहार्याद्यद्भुतसन्दर्शनेन तद्विनेयानामर्थक्रिया विद्यत इति । तेन देशना कायिकी । अतएवोच्यते कायवज्रप्रतिष्ठितेति । वाक्प्रवृत्तेर-भावात् । सत्त्वावतारणाहेतुभूते यः कायसंवरः सोऽपि देशना एष परमशाश्वतः अनादिकालिकः समयः प्रत्येकबुद्धगोत्रात् प्रतियोगिनः संवरः ॥

श्रावकसमयं दर्शयन्नाह अथेत्यादि । पुद्गलनैरात्म्यावरोधेनार्हत्त्वं प्राप्नु-वन्ति ये ते श्रावकाः । श्रावकत्वप्राप्तये अभियोगः शिक्षा सैव समयः तं श्रावकाधिमुक्तिकान् प्रतियोगिनामुपदेशत्वेन स्वकायादिभ्यो निश्चारयेत् ।

दशकुशलानित्यादि । प्राणातिपातादिविरतिलक्षणान् दशकुशलकर्म-पथान् ज्ञानवर्जिताः अप्रतिष्ठितनिर्वाणविमुखाः हीनाधिमुक्तिकाः आत्मैक-निर्वृतिपरायणाः तेषां समयोऽयं महाद्भुतः ॥

ब्रह्मभूयाधिमुक्तानां ब्रह्मसमयं दर्शयन्नाह अथेत्यादि । ब्रह्मभावे मोक्ष-बुद्धेः मोहः तस्य प्रचारो मार्गः । तेन कर्म उपवासादिलक्षणं भयभैरवम्, सुखकामानां संत्रासजननं बुद्धा ब्रह्मपदाधिमुक्ताः बोधिः तेषां ज्ञानं तस्य प्रणेतारं प्रापकं समयमात्मक्लमथलक्षणं तदविमुक्तानां देशयेत् । अत आह भवते कायवज्रेति ॥

महेश्वररूपविनेयानां तत्समयं दर्शयन्नाह अथेत्यादि । सुगमम् ।

विष्णुसमयं दर्शयन्नाह अथेत्यादि ।

यावन्तोऽण्डजादयः सत्त्वाः तान् सर्वान् ध्यानवज्रेण शून्यीकरणेन मारयेत् । खवज्रमाकाशधातुः भाजनलोकः स्वयमात्मा । एतदपि शून्यीकुर्यात् । अयं विष्णुसमयः ।

एवं ब्रह्माद्यधिमुक्तानां तेषां समयमुक्त्वा कायवज्रादिष्वन्तर्भावेन समयविभ्रान्त्यपनयनार्थमाह अथेत्यादि । त्रिवज्रसमयः कायवज्रादिस्वभावः ।

कायवज्रेत्यादि सुगमम् ।

एवं प्रधानदेवतासमयमुक्त्वा अल्पविकानां (?) यक्षिण्यादीनां समय-माक्षिपन्नाह अथेत्यादि । मांसमद्यरुधिराद्याहाराः यक्षिण्यः मैथुनपराः ताः महावज्राः क्रूरस्वभावाः एभिर्मांसादिदानलक्षणैः समयैः दुरासदैराराधयेत् ॥

भुजगकन्यासमयमुपक्षिपन्नाह अथेत्यादि । भुजगेन्द्राः वासुकिप्रभृतयः तेषां राज्ञो भार्याः तासां समयोऽभिप्रेतार्थः पैशुन्यं विद्वेषणवचनं ता नागिन्यः एभिः पैशुन्यादिभिः समयैः अनुष्ठानैः साधयेत् वशीकुर्यात् मन्त्री । अन्यथा विधेया न भवन्तीति यावत् ।

यद्यसुरीभिः सह चर्यामिच्छेत् तत्साधनोपायं दर्शयन्नाह अथेत्यादि । क्रूराः विहिंसात्मकाः मानभारेणैवाभिभूताः गन्धाद्युपभोगासक्ताः । अयं तासां समयैकदेशः । विस्तरस्तु समयः दुर्दान्तो दुरनुष्ठेयः अतएव वज्रभैरवो **वज्रपातालतन्त्रे** कथितः ।

राक्षसीसमयमुपक्षिपन्नाह अथेत्यादि । शिरःकपालास्थिचूर्णेन तैलवसाभ्यां मांसाद्यं धूपं ताभ्यो दद्यात् । एवं तासां प्रीणनम् । सर्वभूतानां पिशाचा-दीनामप्ययमेव समयः पवित्रो विघ्ननाशकः वज्राः साधकाः तेषां महार्थकृत् प्रभूतार्थसाधनत्वात् ।

वज्रडाकिनीतोषणार्थं तत्समयमाह अथेत्यादि । सर्ववज्रडाकिन्यो गौर्यादयः । तासां समयं स्वकायादिभ्यो निश्चारयेत् ।

विडादिकं मन्त्राभिसंस्कृतं भक्षयेत् । मद्यं मैरेयादिकं पिबेत् । ताभ्यः प्रयच्छेत् । वज्रडाकिनीयोगेन गौर्यादियोगेन पदलक्षणैः दुष्टानामुडचरक्ता-कृष्टचादि(?)प्रयोगैः मारयेत् । अयं वज्रडाकिनीसमयः ।

एवं ब्रह्मादिडाकिनीपर्यन्तं समयमुक्त्वा तत्कथनेऽभिसन्धिं दर्शयन्नाह स्वभावेनेत्यादि । एते ब्रह्मादयः स्वभावेनैव स्वाधिपत्येनैवानादिकालिकाः भाजनलोकेनैव संभूताः महानृद्धिकाः त्रिधातुके सत्त्वानुग्रहनिग्रहं कुर्वन्तो विविध-वेशरूपाभरणेन विचरन्ति । तस्मात् तेषां कृत्स्नं सकलं समयं सर्वसिद्ध्या-वाहकमाचरेत् सामाजिकः ॥

सर्वेत्यादिना प्रकरणमुपसंहरति । त्रिधातौ भवाः त्रैधातुकाः सर्वत्रैधातुकाः ब्रह्मादयः सत्त्वविशेषाः तेषां वज्रसमयः अलङ्घ्योऽनुष्ठेयः वज्रधराज्ञा तस्य समवसरणोऽवतारो यस्मिन् समाधौ त तथा ।

उक्तं चात्र

परवादानिश्चये केचिल्लिङ्गभेदैर्व्यवस्थिताः ।
तेऽप्यत्र नावमन्तव्याः वज्रसत्त्व कुर्वित (?) इति ॥

इदानीं कर्मपथविशुद्धिमाह अथेत्यादि । कायसिद्धिः कायिकी क्रिया । सैव समयवज्रं स्वकायादिभ्यो निश्चारयेत् ॥

कायिकं त्रिविधमिति । प्राणातिपातादत्तादानपरदाराभिमर्षणलक्षणं वज्रसंभवं प्रभास्वरं सर्वं कारयेत् धर्माधर्मपालनापेक्षोऽनुतिष्ठेत् । सत्त्वधातौ त्रैधातुके बुद्धकायकरमविनश्वरवज्रकायकरं संपद्यते । सुगतिदुर्गतिगमनहेतो-रभावात् ।

तथा वाचां सिद्धिः वाक्क्रिया वाक्कर्मपदमिति मृषावादपैशुन्यपरुष-वचनसंभिन्नप्रलापलक्षणं कृत्स्नं चतुर्विधं त्रैलोक्यामलो महावज्रधरः तस्य मण्डलं स्थानम् । किं तत्? प्रभास्वरस्य त्रैलोक्यामलस्य मण्डलं प्रभास्वर-विशुद्धिः यस्य वाक्कर्मपथस्य तदनुतिष्ठेत् । ततः किमित्याह वाक्सिद्धीत्यादि । वाक्सिद्धिपदं वागैश्वर्यम् । तेन रम्योऽत्यन्तमनोहरः अयं दुरतिक्रमः समयः ।

तथा चित्तविशुद्धिः चित्तक्रिया । मनोवज्रमयं सर्वमिति अभिध्या-व्यापादमिथ्यादृष्टिलक्षणं त्रिविधं कर्म । तत्राभिध्या परद्रव्याभिलाषः ।

व्यापादः सत्त्वविश्लेषः, मिथ्यादृष्टिः नास्ति दत्तमित्यादि । एतत्त्रिविधं मानसं कर्म । दृढवज्रधीः प्रभास्वरावनतबुद्धिः भावयन् प्रत्यवेक्षमाणः प्रवर्तयेत् । एषो हीत्यादिना प्रकरणमुपसंहरति । एषः अनन्तरोक्तः त्रिविधः समयोऽलङ्घ्यप्रतिपत्तिः त्रिवज्राभेद्यवज्रिणां निष्पन्नक्रमसमाधिस्थानामयं समयो नान्येषामित्याह भगवान् समन्तभद्रवज्रः ॥

इदानीमारब्धसाधनस्य मन्त्रिणः प्रतिपत्तिमाह अथेत्यादि । सर्वमन्त्रवज्रमन्त्रपरायणाः तेषां समयं स्वकायादिभ्यो निश्चारयेत् । बुद्धान् इत्यादि । कायवाक्चित्तसंयोगैरिति कायादिभिरेकीभूतेन प्रणमेत् । प्रयोजनवशात् कायेन वचसा कायवचोभ्यां वा प्रणमने कृते न दोषः । मनोऽयुक्तकायेन वचसा वा प्रणमन्नभिमतसिद्धिभ्रंशमाप्नुयात् ।

उत्पत्तिक्रमारूढस्य परवन्दने विधानमुक्त्वा निष्पन्नक्रमाधिगतस्याह अथेत्यादि । सर्वतथागताः सर्वसत्त्वाः तेषां कायादिवज्रेषु ध्यानसमयमालम्बनप्रकारं स्वकायादिभ्यो निश्चारयेत् । वज्रसत्त्वस्येत्यादि । सर्वत्र सर्वसत्त्वानां कायवाक्चित्तमण्डलं कायादिसमूहं वज्रसत्त्वस्येत्यादि नाथस्य त्रिवज्रयोगेन त्रिवज्राभेद्यस्वरूपेण ध्यानमालम्ब्यं ध्यानं चरितव्यं मन्त्रजापिनैः वज्रजापनिरतैः अध्यात्मपरायणैरिति ।

एषां वन्दना कथमित्याह अथेत्यादि । सर्वमन्त्रवज्राः युगनद्धक्रमस्थाः तेषां संवरं स्वकायादिभ्यो निश्चारयेत् । सत्त्वधातून् निष्पन्नान् निष्पन्नसत्त्वराशीन् समासेनैकभावेन ध्यानवज्रेणानन्तरोक्तत्रिवज्रध्यानेन चोदयेदभ्यसेत् त्रिवज्रवन्दना तथागतादीनां कायादिप्रणामः तस्या अग्राग्रं विशिष्टतरं वज्रं निष्पन्नयोगः । संभवत्यस्मादिति संभवः महावज्रधरत्वनिष्पादिका चर्येति यावत् ।

सेवादिचतुर्योगप्रवृत्तानां साधनकाले संवरमाह सेवेत्यादि गतार्थम् । खधातुमनन्ताकाशं विण्मूत्रवज्रेण विषयेन्द्रियेण परिपूर्णं संच्छन्नं विभावयेत् । ततः त्र्यध्ववज्रेभ्यः त्रिकायेभ्यो दद्यात् विभजेत् । कालत्रयेऽपि त्रैधातुककुहरं विषयेन्द्रियस्वभावैः प्रज्ञोपायैर्व्याप्तं भावयेदिति यावत् । अयं समयः शाश्वतः अनादिकालिकः ॥

एवमधिगततत्त्वस्य प्राकृतकायमपहायाविनश्वरकायग्रहणोपायं संदर्शयन्नाह अथेत्यादि । सर्ववज्रान्तर्धानसमयमिति सर्ववज्रसामान्यकायवाक्चित्तं

तस्यान्तर्धानं प्रभास्वरप्रवेशः । समेत्यस्माद् वज्रकाय इति समयः। सर्वत्र वज्रधात्वन्तर्धानं समयं चैतद्द्वयं स्वकायादिभ्यो निश्चारयेत् । प्रतिदिनं सततं चतुःसन्ध्यं चतुःशून्यं कामयेत् भावयेत् उत्तममनुत्तरम् । पुनर्द्रव्यं देहं चापहरेत् गृह्णीयात् नित्यं सर्वकालं प्रवेशं कार्यवशात् व्युत्थानं च कुर्यादिति भावः । वज्रपूरकः तथागतप्रसादकरः समयः ॥

अधिगततत्त्वस्य सत्त्वान् प्रति चिरस्थितये वाह्यावशायेनान्यानपेक्षस्य स्वशरीरस्थापनविधिमाह अथेत्यादि । खविद्या तथता तां धारयतीति आलम्बत इति खविद्याधरो योगी तस्य, समेत्यस्माद् देहपुष्टिरिति समयः आप्यायन-विधिः। तं स्वकायादिभ्यो निश्चारयेत् । साधक आत्मनः कायवाक्चित्तवज्राणां सौस्थित्यर्थं मकुटे ध्यानममृताख्यं न्यसेत् कुर्यात् । तस्यानुशंसा । त्रिवज्रेत्यादि । त्रिवज्रं शरीरं तमुत्पादात् प्रभृति समयेत्यनुगच्छतीति त्रिवज्रसमया वातादयो दोषाः तैः सर्वैः क्रुद्धैः प्रकुपितैः जेतुमभिभवितुमिदं शरीरं न शक्यते ।

यथोक्तं भगवता **प्रज्ञासूत्रे**

धारामृतमयी नित्यं या मूर्ध्नि वर्षते ध्रुवम् ।
पीत्वा [भवति] योगीन्द्रो जरामृत्युविनाशकः ॥
यथैवोत्पलनालेन तोयमाकर्षते नरः ।
एवमुपजीवयेत् जीवेद् योगी महावलः ॥ इति ।

**मूलतन्त्रे**ऽप्याह

जिह्वां तालुगतां कृत्वा नासिकाग्रं तु चिन्तयेत् ।
सूक्ष्मवज्रसुखस्पर्शात् भवेच्चित्तं समाहितम् ॥ इति ।

एवमध्यात्मपरायणस्याप्यायनविधिमुक्त्वा मन्त्रपरायणस्याह अथेत्यादि । सर्ववज्रधराः आदिकर्मिकाः वैरोचनादिजापिनः तेषां समयं स्वकायादिभ्यो निश्चारयेत् । भोजन इत्यादि । भक्ष्याद्याहारकाल कायवज्रधरस्याधिष्ठानं कुर्यात् । वहिर्वज्रधरस्य चेति अभ्यवहारादन्यत्र विषये वज्रधराधिष्ठानं कुर्यात् । वज्रधर्मे सदा कुर्यादिति । वज्रधर्मस्य वाग्वज्रस्याधिष्ठानं सदा कार्यम् । कुत्र ? सूत्रं प्रवचनादिकं तस्योद्घाटनं पठनं विधिक्रियेति एहि याहीत्यादि प्रेषणं तदादि वा वशीक्रिया विधिक्रिया सद्धर्मपाठप्रव्याहारगेयादिषु चामिताभाधिष्ठानं कुर्यात् । इत्याह भगवान् स्वभावशुद्धवज्रः ।

यदतिक्रान्तं वक्ष्यमाणं च कर्मप्रसरादिकं विकुर्वितं विशुद्धया योजयन् तत्प्रदर्शनाय समाधिमामुखीकृतवानिति दर्शयन्नाह अथेत्यादि । सर्ववज्रधरा निष्पन्नास्तथागताः कायवाक्चित्तवज्राः अनिष्पन्नाः सत्त्वाः तेषां हृदयवज्राणि चित्तानि तेषां समतां प्रभास्वरैकनिष्ठतां विचिन्त्य ध्यात्वा तूष्णीमभूत् ।

अथ खल्वित्यादि सुगमम् ।

भगवन्त इत्यादि । कायवाक्चित्तवज्राणां यानुपलब्धिः प्रभास्वरतास्वभावाक्षरपदमिति । स्वभावेन तत्त्वतः । अक्षरपदमविनश्वरपदं कुलपुत्राः अयं महावज्रधरः निःस्वभावाक्षरपदमनभिलाप्यमविनश्वरस्थानं विचार्यान्विष्याधिगम्यास्माकं तत्प्रदर्शनार्थं तूष्णीं स्थितः प्रभास्वरं प्रविष्टवानित्यर्थः ।

अस्य चेत्यादिना अमुमर्थं विवृणोति । कायाक्षरमित्यादि । काय एव कायाक्षरं तदनुत्पन्नमतीतादिषु सत्त्वात् । लक्ष्यतेऽनेनेति लक्षणं वर्णसंस्थानात्मकं तद् यस्य नास्ति तदलक्षणम् । एतत्कायादिकं खवज्रकल्पना तथता । तं भूतं प्राप्तमिति खवज्रकल्पनाभूतं त्रैधातुकं कथं देवताचक्रमिति चेत् ? आह मिथ्यासंग्रहसंग्रहमिति । मिथ्या माया तां संगृह्णात्युपादत्त इति मिथ्यासंग्रहो मायोपमसूक्तिः तेन संगृह्यते इति संग्रहः । उक्तं चैतत्

सर्वयोगो हि भगवान् वज्रसत्त्वस्तथागतः ।
तस्योपभोगं सर्वं वै त्रैधातुकमशेषतः ।। इति ।

मिथ्यासंग्रहमित्यस्य वज्रपदस्याभिप्रायमजानाना इव बोधिसत्त्वास्तत्राविष्करणाभिप्रायेण तथागताश्चोदयन्तीति दर्शयन्नाह अथ मञ्जुश्रीरित्यादि । वाग्वज्रपदं धर्मदेशना मिथ्या मृषा सा समुदेत्यस्मादिति मिथ्यासमुदयः हेतुः अज्ञानं हेतुभावेन मा गृह्णत । एतत् कथमित्याह तदित्यादि । सर्वतथागताः अतीताः तेषां वज्रधातौ निर्वाणधातौ स्वभावेन प्रकृत्या चरिता चीर्णा गतागतिः प्रभास्वरप्रवेशव्यञ्जनं यस्य स सर्वतथागतवज्रधातुस्वभावचरितगतागतिकः सर्वतथागताधिपतिः । तस्माद् वाग्वज्रपदं समा मिथ्या कल्पत इति योज्यम् ।

अनन्तरोक्तप्रकारेण गाम्भीर्यौदार्यदर्शनं तस्य किं प्रयोजनमित्याशङ्कायामाह तत् कस्मादित्यादि । ब्रह्माद्या हिरण्यगर्भादयः महाबोधिः ज्ञेयावरणलक्षणा अक्लिष्टा विद्या तस्यां सत्त्वं चित्तं येषां ते महाबोधिसत्त्वाः महाभिज्ञाः अणिमामहिमादयः ज्ञानं लौकिकसर्वज्ञता एतत्प्राप्ताः तथापि

सर्वधर्मलक्षणस्वभावमजानन्त इति सर्वधर्मा रूपादयः तेषां लक्षणं मायोपमं संवृतिसत्यं स्वभावः प्रभास्वरत्वं एतद्द्वयं विभागतो न जानन्तः एव परिकल्पयन्ति वितर्कयन्ति ॥

किमिति सन्देहे । अयं महावज्रात्मा देशकः सर्वधर्माः स्थिरचलस्वभावा ये तेषां वज्रं तत्त्वं निष्ठारूपं तदनभिज्ञाय अनधिगम्य गुह्याक्षरं सर्वसत्त्वासाधारणं रहस्यं निर्दिशति, उत विज्ञायेति येषां सन्देहोऽभूत् तेषां सन्देहनिरसनार्थमात्मनः सत्यद्वयाधिगमप्रदर्शनाय प्रभास्वरप्रवेशव्युत्थानं दर्शितवानित्यभिसन्धिः ।

अथेत्यादि । सर्वतथागता अक्षोभ्यादयः तान् मञ्जुश्रीप्रमुखान् बोधिसत्त्वान् एवमाहुः । तिष्ठन्तु तावद् भवन्तो महाबोधिसत्त्वा इति ब्रह्मादीन् निर्दिशन्ति । कायवाक्चित्तवज्रगुह्याक्षरमिति । कायवाक्चित्तगुह्योद्द्योतकमक्षरं वज्रपदं प्राप्य महावज्रधरसकाशात् साक्षात् श्रुत्वापि कायवाक्चित्तबोधिमिति । कायवाक्चित्तो महावज्रधरः तस्य बोधिं फलाधिगमं वयं तावत् न साक्षात्कुर्मः । किं पुनर्ब्रह्मादय इत्यक्षोभ्यादय ऊचुः तत् कस्मादित्यादिना । स्वानधिगमकारणं दर्शयति सर्वकल्पनास्वभावनिःसृतत्वात् निःस्वभावाः अतएव अक्षरं परमार्थसत्यं तस्मात् संभूतः प्रसूतः अनुत्पादवज्रो महावज्रधरः तस्यापि संबोधिः हेतुफलाद्वैधीभावः । एवं वज्रधराभिसंबोधिदुर्लभतां प्रदर्श्य पुनः सकलसत्त्वसाधारणत्वेन सुलभतां प्रदर्शयन्त आहुः यावन्त इत्यादि । कुलपुत्रा इति बोधिसत्वानाह्वयन्ति सत्त्वसंग्रहेण संगृहीताः अण्डजादयः सर्वे ये सत्त्वाः ते बोधिप्रतिष्ठिताः बोधिस्तत्त्वाधिगमः तस्मिन् प्रतिष्ठिताः श्रुतचिन्ताभावनाक्रमेण प्रतिपन्नाश्चेत् संबुद्धवज्राः तथागता एव । तत् कस्मादित्यादिनात्र हेतुमाह । वत निश्चये । इमे सत्त्वाः त्रैधातुकपर्यापन्नाः । कायवाक्चित्तवज्रो महावज्रधरः तस्य ज्ञानमद्वयज्ञानं तत्प्राप्ताः प्राप्तभाजनस्थिताः भूतवदुपचारात् । त्रिकायवज्रः धर्मादिकायत्रयं तद् धारयतीति त्रिकायवज्रधरः षष्ठः तस्य भावः त्रिकायवज्रधरता तामुपादाय कारणं कृत्वा सर्वसत्त्वा बुद्धवज्रा इति योज्यम् ।

एवं बोधिसत्त्वतथागतसंस्पन्दनाय प्रसन्नो भगवान् तमेवार्थं स्ववचनेन द्योतयतीति दर्शयन्नाह अथेत्यादि । स्वभावशुद्धाः स्थिरचला भावाः तेषां नैरात्म्यं प्रभास्वरतां धर्मधातुः बोधिचित्तवज्रः । तन्निरिति । निःशेषेणालये

उत्पत्तिस्थाने सति वज्रसंभूताः कायवाक्चित्तवज्रसंभूताः। कल्पना बुद्धिविकुर्वणादिक्रिया गीयते इन्द्रायुधवत् दृश्यमानत्वात्। न च गीयते, विचारतोऽलभ्यमानत्वात्।

एवं महावज्रधरसमाधिं निश्चित्य घटमानयोगिनां बुद्धत्वसिद्धिहेतुं चोद्यपरिहारमुखेन दर्शयितुमाह अथेत्यादि। सर्वतथागताः तेषां कायादिसिद्धयः कुतः समवसरन्ति उत्पद्यन्ते क्व वा स्थिताः क्व लीना इति।

तथागतानां चोद्यवज्रधरः परिहारमाह स्वकायेत्यादि। स्वकायवाक्चित्तानां सन्तानः क्षणपरम्परयोत्पत्तिः। तदेव वज्रमप्रभास्वरप्रवेशात्। स्थितेः तत्र प्रतिष्ठिताः सर्वलौकिकलोकोत्तराः सिद्धयः तत एवोत्पद्यन्त इति ग्राह्यम्। सर्वसिद्धीनामुत्पत्तिस्थितिप्रलयहेतुः कायत्रयमिति यावत्।

सर्वेत्यादि। न केवलं लौकिकाः सिद्धयः कायादित्रयोद्भूताः किं तु दशबलवैशारद्यादिसर्वगुणाः त्रैधातुकं च कायवाक्चित्तोद्भूतं कायवाक्चित्तप्रतिष्ठितमेवेति। परिहारः सर्वतथागता इत्यादि। सर्वतथागतकायवाक्चित्तवज्रसिद्धीरिति लौकिकलोकोत्तरसिद्धिनिमित्तानि कायवाक्चित्तानि त्रैधातुकश्च पृथिव्यादिनी च। कुत्र स्थित इति तथागतानां प्रश्नः। आकाशधातुः भूतकोटिः तत्र प्रतिष्ठितमिति परिहारः। भूतकोटिः कुत्र स्थित इति पुनश्चोद्यम्। वज्रधरः प्राह न क्वचिदिति।

सर्वतथागतानामाश्चर्यप्रकारमाह अथेत्यादि। आश्चर्यप्राप्ताः विशुद्धौ अद्भुतप्राप्ता व्युत्थाने। अहो वज्र अहो वज्रेति प्रसादे आम्रेडितम्। अहो वज्रस्य देशनेति देशनादुर्लभत्वे आश्चर्यम्। वज्रस्य संवृत्तिः परमार्थसत्यस्य देशना यत्र यस्मिन् परमार्थसत्येन कायवाक्चित्तं तत्र तस्मिन् देवतारूपं सर्वाकारवरोपेतात्मकं विभाव्यते निष्पाद्यत इत्याश्चर्यकारणम्।

एवमनिमित्तसमाधिं निश्चित्य तदुपायदेवतामूर्तिर्यथा निष्पाद्यते तं दर्शयन्नाह अथेत्यादि। त्रिवज्राः सर्वसत्त्वाः तेषामग्र्याः हरिहरहिरण्यगर्भाः तेषामग्र्याः श्रावकप्रत्येकजिना तेषामग्र्यो महावज्रधरः त्रिवज्रपरमेश्वर इति त्रिवज्रेषु कायवाक्चित्तवज्रेषु परममत्यर्थमैश्वर्येण प्रवर्तत इति त्रिवज्रपरमेश्वरः। तथा चोक्तम्,

> कायैश्वर्यं वागैश्वर्यं चित्तैश्वर्यं तथैव च।
> ऋद्धिः सर्वगतैश्वर्य इच्छा कर्ता गुणाष्टमः॥ इति।

सर्वसिद्धीनां लौकिकलोकोत्तराणां साधनभूतो विद्यामयः पुरुषो विद्या-पुरुषः तस्य भावनां निष्पादनक्रमं भाषते कथयति । खवज्रेत्यादि । बुद्ध-मण्डलनिष्पन्नानिष्पन्नं सत्त्वराशिं खधातुवज्रमध्यस्थं प्रभास्वरगतं ध्यायात् । ततः सकलसत्त्वराशिं कायवज्रहेतुभूतं चन्द्रविम्बं ध्यात्वा वज्रं मूर्ध्नि प्रभावयेदिति । मूर्ध्नि चन्द्रमण्डलोपरि वज्रं पञ्चशूकं प्रभावयेत् । तत्परा-वृत्त्या अक्षोभ्यं त्रिमुखं त्रिकायसंभूतं त्रिकायात्मकं विस्फुरन्तं पञ्चरश्मि-स्फरणसंहरणोपेतं चिन्तयेत् ।

चक्रं वज्रं माण्डलेयदेवतावृन्दं तदात्मनः परिवाररूपेण धारयति स्फर-तीति चक्रवज्रधरः । एवंविधं देवतारूपं ध्यात्वा योगी बोधिमक्षोभ्यता-मवाप्नुयात् ।

अनेनैव क्रमेण वैरोचनादियोगी चक्रादिपरावृत्त्या सर्वेषां वैरोचनादीना-मिदं गुह्यं कुलभेदेन देवतारूपग्रहणरहस्यं विचिन्तयेत् । तेषां वैरोचना-दीनामन्यथा प्रकारान्तरेण भावनं सिद्धिः सिद्धिकारणं न भवतीत्याह भगवान् ॥

एवमात्मानं निष्पाद्य ततः किं कुर्यादित्याह त्रिधातुभूतामित्यादि । त्रिधातुः शरीरं तत्र भूतां स्थितां महाराज्ञीं देवीं वज्रधात्वीश्वरीं प्रीणयन्तीं आनन्दं सुखं जनयन्तीं विचिन्तयेत् पश्येत् । वृषभाः वज्रोपमसमाधिस्था योगिनः । कथंभूता इत्याह वज्रकायत्रिलक्षिता इति । वज्रकायाभ्यां पुंस्त्री-न्द्रियाभ्यां लक्षिताः अनुभूताः । त्रयः रागविरागमध्यरागाः तेन वज्रकाय-त्रिलक्षिताः ।

अनुशंसामाह यश्चेदमित्यादि । यः कश्चिद् दृष्टसत्यो वोधिः ज्ञानमुद्रा तस्यां सत्त्वं चित्तं यस्य स वोधिसत्त्वः उत्पत्तिक्रमानुपूर्वेणारूढनिष्पन्नक्रमत्वात् महायशाः । त्रिकायो महावज्रधरः तदीयां सिद्धिमवाप्नोति । महाद्युतिः उत्तप्तवीर्यः सप्ताहेनाचिरेणैव ॥

ज्ञानमुद्रासमापत्त्या च दृढचित्तानां वाह्याङ्गनासमापत्त्या परमानन्द-सुखानुभवः कर्तव्य इति दर्शयन्नाह अथेत्यादि । कायवाक्चित्तवज्राणां रागा-नलद्रुतानां विन्दुरूपेण समुदयेनैकीभावो यस्मिन् स कायवाक्चित्तवज्रसमुच्चयः । किं तत् ? गुह्यं धर्मोदयं तस्य साधनाङ्गत्वेन विधानं रहस्यं तत् स्वकाया-दिभ्यो निश्चारयेत् ।

कायेत्यादि । कायवाक्चित्तैः साधनं समेत्यनुयातीति कायवाक्चित्तसमया महामुद्रा । साधकस्यार्थ आनन्दः । तमालिङ्गनादिभिः कल्पयति संपादयतीति महामुद्रार्थकल्पना । कायवाक्चित्तसमया च महामुद्रार्थकल्पना च तां सहधर्मचारिणीं सर्वरागविरागमध्यरागाणां लक्षणैः लक्षणपरिज्ञानहेतोः विधिवत् मुद्रासंस्कारादिविधिपूर्वकं भावयेदुपचरेत् यः सर्वबुद्धत्वमाप्नुयात् ॥

अथेत्यादिना समाहितयोगीनां चर्याप्रकारमाह अथेत्यादि । सर्वसाधकाः कल्पितयोगिनः तेषां कायवाक्चित्तानामविषयत्वाद् रहस्यं वचनं तत् स्वकायादिभ्यो निश्चारयेत् ।

हस्तमुद्रामित्यादि । उत्तमां बोधिं वज्रधरत्वं तादात्म्यभावेनेच्छेत् भावयेत् हस्तमुद्रां वाह्यदेवताभिनिवेशकरीं न वध्नीयात् ।

वज्रसत्त्वः स्वयं साक्षात् किमन्यत् तु गवेषते। इति

वचनात् । सर्वेत्यादि । सर्वार्थसाधकं मन्त्ररहस्यं येषां ते सर्वे मन्त्राः तेषां समाजयोगिनामयं समयः जिनैरपि तथागतैरपि समाजाभियुक्तेन हस्तमुद्रा वद्धव्येति योऽयं समयः स नातिक्रम्यो धारयितुं न शक्यते इति ।

स[ा]माजिकेष्वपि कल्पियोगिनां समयमाह अथेत्यादि । सर्वबुद्धाः कायवज्रकुलीनाः तेषां समयमनुष्ठेयं स्वकायादिभ्यो निश्चारयामास । विडित्यादि विडादीनां जुगुप्सां प्रतिघं भावं नैव कारयेत् मन्त्री । तस्माद् विधिना आलिङ्गनचुम्बनादिप्रयोगेन [स]मुत्पादितं यदमृतं तत् नित्यं भक्षयेत् उपभुञ्जेत् । कस्मात् इत्याह इदं गुह्यं त्रिवज्रजमिति । कायवाक्चित्तसौस्थित्यकरं रसायनमिति यावत् ।

तदर्थमेवारभ्य वाग्वज्रसमयमाह त्रैधातुकेत्यादि । यावन्त्य उत्तमाधममध्यमयोषितः तासां त्रैधातुकपथे रम्ये त्रैधातुकाः सत्त्वाः तेषां पन्था मार्गः त्रैधातुकपथः अपत्यमार्गः पद्मं तस्मिन् रम्ये सर्वजनाह्लादकरे विधिवत् अनुरागणादिविधिसहितः सर्वाः मदनातपत्रपूर्णशशाङ्ककूर्मकादिका नाडीः वाग्वज्रैः जिह्वाव्यापारैश्चालयेत् कामयेत् हर्षयेत् आसृष्टि न जुगुप्सयेत् व्यापारोत्पन्नं यत् तन्न वा परित्यजेत् आस्वादयेदिति यावत् ।

अथेत्यादिना चित्तवज्रसमयमाह यावन्त इत्यादि । सर्वसमयाः पद्मिन्यादिस्त्रियः त्रिवज्रकायसंस्थिताः वैरोचनादिस्वभावास्ताः । त्रिवज्रसमयैरात्मानं कायवाक्चित्तव्यापारैः प्रीणयेत् हर्षयेत् । चित्तवज्रं न जुगुप्सयेदिति । तासां

चित्तं न विरागयेत् चित्तमूलत्वाद् देहस्य देहमूलत्वाद् बोधिचित्तस्येति भावः। महान्त असाधारणा त्रिवज्रसमयाः कायवाक्चित्तसमयेन देशिताः स महावज्रधर एवमाहेति संगीतिकारवचनम् ।।

त्रिविधचर्यारूढयोगिनां वाह्यबुद्धबोधिसत्त्वाभिनिवेशापनयनार्थमात्मनश्चाधिदेवत्वख्यापनार्थमाह अथेत्यादि । सर्वतथागताः त्रैयध्विका जिनाः तैर्देशितं गुह्यवज्रं हीनाधिमुक्तिकेभ्यो गोप्यत्वात् तद्दर्शितवान् समासेन कुलशतं संक्षिप्य वैरोचनादयः पञ्च बुद्धा प्रकीर्तिताः। ते पञ्चस्कन्धाः। ते रूपस्कन्धादयो नान्ये तद्व्यतिरिक्ता इति ग्राह्याः। वाह्याः क्षितिगर्भादयो बोधिसत्त्वाः सन्तीति चेत् ? तद्दृष्टचपकर्षणायाह वज्रेत्यादि। विषयग्रहणविभुत्वात् वज्रमिन्द्रियं तस्यायतनानि स्थानानि चक्षुरादीनि योनिः। बोधिसत्त्वाग्र्यमण्डलं क्षितिगर्भादिजिनौरसचक्रं यत्तदिन्द्रियाण्येव नान्यत् बोधिसत्त्ववृन्दर्दर्मिति ।

यो लोचनादिविद्यास्वदेवताभिनिवेशः तदपनयनोपायमाक्षिपन्नाह अथेत्यादि। त्रैधातुकं सत्त्वभाजनाख्यं भवत्रयं समुच्चीयते निष्पद्यते येन स त्रैधातुकसमुच्चयः पृथिव्यादिः स आप्रभास्वरप्रवेशात् स्थितेर्वज्रं तन्निश्चारितवान्। पृथिव्यादि। या लोचनादयो देव्यः परिकल्पिताः उपात्तानुपात्ताः पृथिव्यादयो चत्वारो धातवो नान्या लोचनादयः ।।

खवज्रेत्यादि। खवज्रधातुः स आकाशधातुः सर्वं स्थावरं जङ्गमं समेत्यनुगच्छतीति समयः स एव वज्रधर इत्याह। सर्वतथागताः पञ्चस्कन्धस्वभावाः वैरोचनादयः भुवनं लोचनादिस्वभावाः पृथिव्यादयः पञ्चधातवः तेषामीश्वरो महावज्रसत्त्व इत्याह ।।

एवं वैरोचनादीनां पञ्चस्कन्धादिस्वभावं निर्दिश्य पर्षदि प्रश्नावसरदानाय स्थितवानि[ति] दर्शयन्नाह अथेत्यादि । सर्वतथागतकायवाक्चित्तवज्रः तथागतो महावज्रधरः। सर्वतथागतानां समताविहारमिति । सर्वतथागता वैरोचनादयः क्षितिगर्भादयो लोचनादयश्च तेषां समता पञ्चस्कन्धादिभिरद्वयता तस्य विहारो व्याकरणं तन्नामधेयः समाधिः एकाग्रेण चेतसाविष्करणं तां समापन्नः कृतवान्। समापद्य च एवमुक्त्वा संहृत्य सर्वतथागतपर्षन्मण्डलं पञ्चस्कन्धादिस्वभावान् वैरोचनादीन् यथास्थानस्थितानवलोक्य तूष्णीमभूत्। प्रश्नावकाशं कृत्वा परमार्थसत्यं प्रविष्टवानिति यावत् ।।

भगवान् वैरोचनेन वैरोचनादीनां स्वभावं परिज्ञाय देशकविषये स्वभाव-परिज्ञानं प्रति जातसन्देहः। अदृश्यभूते भगवति प्रश्नासंभवात्। पार्श्वद्यान् तथागतान् यथा पृच्छति तद्दर्शयन्नाह अथेत्यादि। सर्वतथागताः निष्पन्ना-निष्पन्नाः तेषां कायवाक्चित्तवज्रगुह्यं तत्त्वं तत्प्रकाशको ग्रन्थसन्दर्भः समाजः। तत्राभिषिक्तः सर्वतथागतैरनुज्ञातः अधिकृतः भगवन्त इत्यामन्त्रणम्। लौकिकलोकोत्तराचारं दर्शयतीत्याचार्यः अधिपतिः। सर्वतथागतैः युष्माभिः सर्वबोधिसत्त्वैरस्माभिश्च कथं केन स्वरूपेण द्रष्टव्यः ज्ञातव्य इति मैत्रेयेणो-दितास्तथागताः प्राहुः बोधिचित्त इत्यादि। योऽयं देशकः स बोधिचित्तवज्र एव महावज्रधरो द्रष्टव्यः ज्ञातव्यः। तत् कस्मात् हेतोः ? बोधिचित्तश्च महावज्रधरश्चाचार्यश्चाक्षोभ्यश्च, एतदद्वयमद्वैधीकारम् हेतुफलयोः पृथक्फल-हेतुस्वभावेनाभिन्नत्वात्। यावदित्यादि। कुलपुत्रेति मैत्रेयामन्त्रणम्। यावत् संक्षेपेणेति अत्यन्तसंक्षेपेणेत्यर्थः। दशदिग्लोकधातुषु पूर्वादिदिङ्निविष्टेषु संख्येयेषु लोकधातुषु तथैवासंख्या बुद्धबोधिसत्त्वा ये तिष्ठन्ति धर्मकायेना-चलत्वात् ध्रियन्ते संभोगकायेनाकनिष्ठभवने देशनाभिर्धार्यमाणत्वात्। यापयन्ति निर्माणकायेन सत्त्वान् स्वर्गापवर्गप्रापणात्। ते त्रिष्कालं त्रिसन्ध्य-मागम्य तमाचार्यं गुह्यसमाजदेशकं सर्वतथागतपूजाभिः कायवाक्चित्तपूजाभिः संपूज्य स्वबुद्धक्षेत्रं गच्छन्ति। एवं पितास्माकमित्यादिवाक्समूहं निश्चारयन्ति उद्गीरन्ति।

यद् यथापि नामेत्यादि सुगमम्। भीतः संत्रासस्य च कारणं आचार्यः सर्वतथागतैः कथं द्रष्टव्य इति वितर्कवेदनम् पूज्यस्थाने आशङ्काया महा-दोषत्वात्। अतएव तूष्णींभावः।

मैत्रेयस्य तूष्णींभावेन प्रतिवचनमलब्ध्वा पुनस्तद्वाचनार्थमेव तदन्यान् बोधिसत्त्वानामन्त्र्य पुनरपि महावज्रधरस्वरूपं यथा प्रकाशयन्ति तद् दर्शयन्नाह अथेत्यादि। सर्ववज्रधरसिद्धिसमयावलम्बनमिति वज्रमणिर्देश्यं षष्ठं तत्त्वम्। तदुत्सर्गप्रवेशभावेन धार्यत इति वज्रधरः मण्डलाधिपतिः तस्य सिद्धि-समयाः निर्माणकायाः। सर्वे च ते वज्रधरसिद्धिसमयाश्च सर्ववज्रधरसिद्धि-समयाः तेषामालम्बनमामुखीकरणं यस्मिन् तन्नामकमभेद्यं समाधिं समापद्य तान् सर्वबोधिसत्त्वा अक्षोभ्यादयः शृण्वन्त्वित्यादिना आमन्त्रयते स्म।

तथागतवचनमाकर्ण्य पुनर्बोधिसत्त्वा यत् प्रश्नयन्ति तद् दर्शयन्नाह

अथेत्यादि । सर्वतथागताः कायवाक्चित्तसिद्धिरिति । सर्वतथागतात्मक-निर्माणरूपाणि कुत्र स्थितानीति बोधिसत्त्वानां प्रश्नः । त्रिकायगुह्यः काय-वाक्चित्तवज्राचार्यकायवाक्चित्तस्थितानीति अक्षोभ्यकायवाक्चित्तस्थितानीति परिहारः । कायवाक्चित्तवज्रं कुत्र स्थितमिति प्रश्नः । न कुत्रचिदिति परिहारः । बोधिचित्तवज्रे स्थितानीति कायवाक्चित्तवज्रे स्थितानीति वक्तव्ये न कुत्रचिदिति वचनमिदं तदिति वक्तुमशक्यं गुरूपदेशगम्यत्वात् । एवं बोधिसत्त्वा विगतसन्देहाः यथा वभूवुः तद्दर्शयन्नाह अथेत्यादि । आश्चर्य-प्राप्ता देशके अद्भुतप्राप्ताः तद्धेतौ । अथ खलु मैत्रेय इत्यारभ्य न क्वचित् स्थित इत्येतत्पर्यन्तेन ग्रन्थसमूहेन यथानिष्पन्नैर्बुद्धबोधिसत्त्वैर्मण्डलाधिपति-रक्षोभ्यः समाजदेशकत्वेन सत्कर्तव्यो गुरूकर्तव्यः पितास्माकमित्यादिभिर्मधुर-वचनैरभिष्टुत्य वाह्याध्यात्मिकपूजाभिर्यथा पूजितः तथाग्रमद्वयं समाश्रित्य सप्त-विधालङ्काराख्यायिकान्यायेन यः श्रीसमाजं विवृणोति सोऽप्यन[ा]गतैर्वज्र-पाणिभिः साक्षान्महावज्रधर इत्यादरमुत्पाद्य पूज्य इत्ययमर्थो दर्शितः । अमुमेवार्थं द्योतयन्नाह **श्रीमायाजालमहातन्त्रराजे**

आचार्यः कथं द्रष्टव्यः सर्वबुद्धसमो गुरुः ।
सर्ववज्रधरो राजा रत्नकेतुस्तथागतः ॥

आचार्यस्य गुणा ग्राह्या दोषाश्च न कदाचन ।
गुणग्रहणं सिद्धिः स्याद् दोषाणां सिद्धिहानितः ॥

तस्मात् सर्वप्रयत्नेन बुद्धत्वफलकांक्षिभिः ।
पूज्योऽसौ भक्तिमता सर्वैरचिन्त्यफलदायकः ॥ इति ।

तथाह **महामहायानरत्नराजसूत्रे**

भगवान् वज्रपाणिः ओड्डियानपर्वते निषण्णः सर्वांश्च वज्रयानशिक्षिताना-मन्त्रयामास । शृणुत निखिलवज्रयानशिक्षिताः तथागतं परिनिर्वृत्तं न पश्यत शास्तारम् । अपि तु वज्राचार्यो वज्रगुरुः । सोऽयं शास्ता भवतीति ॥

अत आह **लाक्षीभट्टारिकायां**

कल्याणमित्रमुपनिसृत्य बुद्धबोधिमिति ॥

अथेत्यादि । बोधिसत्त्वसंस्पन्दनकाले प्रभास्वरात्मको भूत्वा तदनन्तरं वज्रपाणिः तथागतोऽक्षोभ्यः गुह्यवज्र[ा]स्तथागताः ते समाधीयन्ते विलीयन्ते

यस्मिन् गुह्यवज्रसमाधिः भूतकोटिः तस्माद् व्युत्थाय पुनः पूर्ववत् द्वेषवज्रो भूत्वा तथागतादीन् शृण्वन्त्वित्यादिना आमन्त्र्य समाधिमण्डलं देशितवान्। सर्वतथागतो निष्पन्नक्रमारूढो महायोगी। तस्य बोधिश्चित्तम्। स संभव उत्पत्तिस्थानं यस्य मण्डलस्य तन्नामकमविनश्वरं समाधिमण्डलं मानसमण्डलं श्रोतुमामन्त्रितवान् ॥

भगवद्वचनेन सन्तुष्टाः बुद्धबोधिसत्त्वाः यथा भगवन्तं वचनेनाध्येषितवन्तः तद्दर्शयन्नाह अथ खल्वित्यादि।

तत् श्रुत्वा महावज्रधरः प्राह खधात्वित्यादि। खधातुराकाशधातुः मध्यगतं यस्मिन् मण्डले चतुरस्रमिति चतस्रोऽस्राः पृथिव्यादिस्वभावा लोचनादयो यस्मिन् तं चतुरस्रं कायमण्डलं सुशोभनमप्राकृतं चिन्तेत् ध्यायात्। बुद्धमण्डलयोगेनेति बुद्धमण्डलं पञ्चगुह्यतत्त्वात्मकमेतत् शरीरमेव। तदात्मको योगः समाधिः ध्यानवज्रमिति ध्यायते चिन्त्यते योगिभिरिति ध्यानमक्षोभ्यः षष्ठेन योज्यमानत्वात् वज्रः तं प्रचोदयेत्। उत्सृज्यानुप्रवेश्यात्मना क्षीरोदकवदेकीकुर्यादिति यावत् ॥

वज्रमण्डलमक्षोभ्यमण्डलं तस्मिन् देवताविन्यासक्रमो ध्यानं तेन वज्रमण्डलध्यानेन सर्वचक्रिणां माण्डलेयानामासनस्थापनं कार्यम्। एवं साधारणकायमण्डलं विभाव्य करणीयमाह पूजामित्यादि। तेनैव विधिना चित्तमण्डलविधिनैव मतिमान् स्वमुद्रासहिताः पूजां समापत्तिलक्षणां सदा कुर्वीत अनुतिष्ठेत्।

समारब्धपूजा एवाभिषेकं शिष्यस्य कुर्यादित्याह आचार्यमित्यादि। स्वचर्याचारिणः स्वपदं पातयति प्रापयतीति आचार्यो महावज्रधरः तं हृदये हृत्पुण्डरीके यथावत् ध्यात्वाभिषेकं मानसं समाचरेत् कुर्यात्। खधातुमित्यादि। खधातुं धर्मोदयं सर्वबुद्धैश्चित्तमण्डलवत् संस्थितैः परिपूर्णं विभाव्य तन्मध्येऽभिषिच्यमानं शिष्यं विभावयेत् ध्यायात् ॥

तदनन्तरं सर्वान् वैरोचनादीन् बुद्धबोधिसत्त्वान् त्रिभिरभिषेकपदैः ओमित्याद्यक्षरत्रितयैः प्राणायामस्थितैः पातयेत् शिष्यशिरसि बोधिचित्तवज्रत्वमापन्नान् पातयेत् पतितान् ध्यायात्। अभिषेकानुशंसामाह अनेनेत्यादि। अनेनाभिषेककरणेनाभिषिक्तः शिष्यः सर्वसत्त्वानुग्रहयोग्यान् बोधिं प्रतिष्ठितनिर्वाणमेति परार्थे संपत् तस्यैव दृष्टधर्मे सर्वसिद्धिमहाद्भुतमिति। सर्व-

सिद्धयो दशवलादयो बुद्धगुणाः तैर्महाद्भुतमतिशयप्राप्तं कायवाक्चित्तं सिध्यते सिद्धिमुपगच्छतीति स्वार्थसंपत् ।

सर्वबुद्धबोधिसत्त्वाः वैरोचनादयः क्षितिगर्भादयश्च यथावत् समयमेकीभावं गच्छन्ति यस्मिन् ध्यानेनैव यन्निष्पाद्यते प्रवुद्धजनाभिषेकार्थं तदभेद्यं ध्यानमण्डलमिति ॥

पुनरपि दुष्टनिग्रहपापप्रकारमाक्षिपन्नाह अथेत्यादि । वज्रपाणिर्देशकः पुनरपीति त्रयोदशचतुर्दशपटलोक्तक्रूरकर्माभिरतस्य संवन्धं दर्शयति सर्वतथागतयोगवज्रमिति सर्वे साधुजनाः तथतां पश्चतां यैर्गच्छन्ति सर्वतथागताः क्रूराशयाः तेषां योगवज्रं निग्रहोपायो यस्मिन् तत् कायवाक्चित्तं गुह्यं कायादिनिष्पादकमक्षरत्रितयं स्वकायादिभ्यो निश्चारयेत् ॥

॥ हूं ह्रीः खं ॥

खधात्वित्यादि । तावत् साधकः स्वकायमस्थिमांसस्नायुमयं दृष्ट्वा खधातुमध्यगतं प्रभास्वरप्रविष्टं चिन्तेत् । ततस्त्रिकायवाक्चित्तहृदयमिति त्रिविधमनन्तरोक्तं कायवाक्चित्तबीजात्मकमक्षरत्रितयं वज्रसत्त्वस्य महावलपराक्रमस्य वज्रडाकस्य निष्पत्त्यर्थं भावयेत् ।

ततः क्रूरं दुष्टासृग्भक्षणतत्परं विकृतं संक्रुद्धनीलोत्पलसमप्रभं चतुर्भुजविधानेनेति वक्ष्यमाणे[न] प्रकरणविधिना भावयेत् ।

एवं विभावितडाकरूपो मन्त्री ततः [किं] कुर्यादित्याह पश्चरश्मीत्यादि । पश्चरश्मयः यरलवहा इति वाय्वनलादिपश्चवीजानि तेषां प्रभाः कृष्णादिरश्मयः तैरुपद्योतितां देदीप्यमानां स्वजिह्वां पश्चसूचिकवज्राकारां व्रती विभावयेत् । ध्यानवज्रप्रयोगेणेति । अनन्तरोक्तक्रमेण विभावितजिह्वावज्रं तद्धयानवज्रम् ॥

तस्य प्रयोगः ॥ बीजपश्चकमुच्चार्य पश्चरश्मीन् साध्यहृदयं प्रवेश्य ऊलूकवत् सर्वाङ्गगतरुधिरमाकृष्य तं त्वगस्थिशेषं दृष्ट्वा रश्मीनुपहृत्य स्वदेहे प्रवेश्यात्मनि निषिक्तं ध्यायादिति रुधिराकर्षणमुत्तममिति ॥

अनेनैव वज्रयोगेन हस्तस्थप्रहरणकथनद्वारेण प्रयोगान्तरमाक्षिप्याह त्रिशूलमित्यादि । दक्षिणे प्रथमे त्रिशूलं द्वितीये दारुणोत्तममिति दारुणं कीलकमेकशूकवज्रं प्रथमे कपालमुक्तमेव वज्रयोगेन वज्रडाकयोगेनैव साधकः

बुद्धकायमपि तथागतशरीरमपि एभिः प्रहरणैर्विध्वा पीडयेत् । किं पुनः प्राकृतशरीरमिति प्रयोगातिशयः ।

अथेत्यादि । पुनरपीति पूर्वोक्तभक्षणसमयस्य पूर्वोक्तकान् स्मारयति । वज्राः साधकाः तेषामाहारसमयो भोजनकायः तस्मिन् कृत्यमनु[ति]ष्ठेत् । यत् तत् स्वकायादिभ्यो निश्चारयामास ।

अन्नं शाल्योदनादिकं पानं क्षीरादिकं व्रती त्रिविधोऽपि साधकः भक्षयेत् पिवेद् वा तत् सर्वं विण्मूमांसयोगेन विधिवत् आहारं हृत्कण्ठशोधनपूर्वक-मुपयुक्तस्यान्नपानस्य रसमांसादिस्वभावेन परिणतं ध्यायात् । अवशिष्टं विण्मूत्रभावेन परिकल्पयेत् । अयमाध्यात्मिको होमः ।

अथेत्यादि । सर्वतथागता वैरोचनादिस्वभावाः सर्वसत्त्वाः पञ्चबुद्धात्म-कुं सर्वजगों यमिति वचनात् । तेषां कायवाक्चित्तपूजाग्रचं पूजाविशेषं स्वकायादिभ्यो निश्चारयेत् ।

पञ्चोपहाराः पञ्च विषयाः तेषां पूजाग्रैः मनोज्ञविषयैः पूज्यमात्मानं चैतांश्च परान् प्रपूजयेत् । एष अयं विधिः सर्ववज्राणां सर्वयोगिभिः दुर-तिक्रमोऽलङ्घनीयः समयः ।

एवं साधारणपूजामुक्त्वा विशेषपूजामाक्षिप्याह अथेत्यादि । सर्वतथागता अनन्तरोक्ताः एषां कायादिपूजारहस्यं गुह्यं निश्चारयेत् ।

द्वयेन्द्रियप्रयोगेण वज्रपद्मसमायोगेन स्वशुक्रादिपरिग्रहैः स्वचेतोमहारजसा कललादिभावेन सन्तत्य पुत्रपौत्रप्रभृतीन् विधिवत् रक्षणपोषणादिविधिभिः पूजयेत् संगृह्णीयात् । एवं कृत्वा बुद्धबोधिमवाप्नुयादिति ।

एवं स्वपरपूजामुक्त्वा निरवशेषस्य सत्त्वधातोः पूजामाक्षिप्याह अथेत्यादि । यथा जन्मकाले आगताः विनाशे तथैव गता इति तथागताः सर्वसत्त्वाः । कायवाक्चित्तसंवरमिति । तेषां योगिनां संवरणमनुग्रहः । तं भगवान् स्वकाया-दिभिर्निश्चारितवान् ।

अनन्तस्य सत्त्वधातोः अण्डजादेः सत्त्वराशेः मातां लोचनाम् । कासौ ? पृथिवी । कीदृशीमित्याह सत्त्वानामुत्पादस्थितिभङ्गलक्षणास्तिस्रोऽवस्थाः समयः तां धारयतीति समयधारिणी तां समयधारिणीम् अशेषसत्त्वधातुसहितां पृथिवीं कामयेत् । त्रिवज्रसमयैरिति । आत्मनः शुभैः कायवाक्चित्तव्यापारैः

हितसुखोपसंहितैः कामयेत् रमयेत् अनुगृह्णीयात् । अयं समयः सामाजिकानां महाद्भुतः महतः सत्त्वराशेः परिग्रहात् विशिष्टतरः ।

एवं पूजाप्रकारमुक्त्वा तद्विशुद्धिं दर्शयन्नाह अथेत्यादि । बोध्युपकरणत्वादनन्तरोक्ताः पूजाविधयः सर्वसाधनानि तेषां समादानं संवरः तस्य सारः वज्रः तं निश्चारयेत् ।

पूजाविधिषु यः कायादिव्यापारः कायवाक्चित्तसंभोगः तं त्रिगुह्यालयवज्रजं प्रभास्वरसमुत्थितमधिमुञ्चेदिति शेषः । एवमधिमुच्य किं कुर्यादित्याह साधयाम्यहमिति । भद्रं बुद्धत्वं वज्रधरत्वं साधयामि प्राप्नोमीति दार्ढ्यमुत्पादयेत् । यद्येवं न कुर्यात् ततः किमित्याह नाशयेदित्यादि सर्वान् बोधिसंभारान् निष्फलीकुर्यात् सोपलम्भत्वात् ॥

एवं योगिनः सत्त्वविषये प्रवृत्तिं प्रदर्श्य पुनरप्यात्मनः शरीराप्यायनं दर्शयन्नाह अथेत्यादि । सर्वबुद्धत्वादिकं साधयत्यनेनेति सर्वसाधकस्वशरीरं तस्य वज्रसत्त्वसंवरं वज्रसत्त्वसंपादनोपायो वज्रसत्त्वसंवरः तं निश्चारयेत् ॥

वितस्तिमात्रमित्यादि । स्वशिरस्युपरिगगने वकारपरावृत्तिसंज्ञाजातस्य चन्द्रमण्डलस्य कल्पनां भावनां तावत् कुर्यात् । ततः ओङ्कारं प्रवेशात्मकं चन्द्रमण्डलमध्यगतं ध्यात्वा पञ्चामृतनिपातनं कार्यम् । न म्रियन्त इत्यमृताः पञ्चामृतास्तथागताः तेषां निपातनं पञ्चरश्मिस्वभावेन मूर्ध्न आपादतलादभिषेचनं कार्यम् ॥

अनेनोक्तलक्षणेन वज्रयोगेन तथागतालम्बनेन तेजस्वी वपुष्मान् जायते क्षणादचिरात् । कायादिसौस्थित्यं चाप्नोतीत्यनुशंसा ।

निष्पन्नक्रमाधिगतस्य महामुद्रासाधनप्रविष्टस्य प्रवृत्तिमाह अथेत्यादि । सर्वे मन्त्रा रहस्या यस्मिन् स सर्वमन्त्रः समाजः तं धारयतीति सर्वमन्त्रधरः सामाजिको महायोगी तस्य कायवाक्चित्तगुह्यं कायादिप्रवृत्तिरहस्यं स्वकायादिभ्यो निश्चारयेत् ।

चैत्यकर्म मृद्वालुकादिस्तूपपूजाक्रियां न कुर्वीत आत्मन एव सर्वतथागतात्मकस्य चैत्यपूजाभिनिवेशायोगात् [।] न च पुस्तकवाचनमिति अनाभोगेनैव वज्रजापं सततमेव प्रवर्तयतः अन्यस्मिन् स्वाध्यायादौ प्रवृत्तेर्न युक्तत्वात् । एवं बाह्यं मण्डलं तन्न कुर्वीत । स्वकायमण्डलमुक्त्वा बहिर्मण्डलस्य तत्त्वतो-

ऽभावात् । त्रिवज्राग्राः श्रावकप्रत्येकबुद्धसम्यक्संबुद्धाः तेषां कायादिना प्रशमनं वन्दनं तन्न कुर्यात् । आत्मनः सर्वतथागतभावस्य विरोधात् ।

एतत् सर्वं लोकप्रज्ञप्तिमागम्य कर्तव्यम्, न विरुध्यत एवानभिनिवेशत इति पञ्चदशपटलोक्तं क्षुद्रकर्मशेषमाक्षिपन्नाह अथेत्यादि । सर्वविषं स्थावर-जङ्गमं लघुप्रकारं तस्यापहरणादिकं कायादिभ्यो निश्चारयेत् । तद्यथा चक्र-मध्यगतमित्यादि विषाभिभूतं चक्रमध्यगतं सितप्रणवोद्भवाष्टारचक्रनाभिस्थं शीतांशुरश्मिगहनं पीतवर्णैर्विषतेजोभिस्तावद् व्याप्तदेहं सितचक्रेणैव शिरसि स्थगितं तद्रश्मिनिवहैः शनैः शनैरपनीयमानपीतावभासं विचिन्त्य निर्विषं कुर्यादिति विषापहरणम् । पीतसन्निभमिति । एतत्सर्वं स्तम्भनाभिप्रायेण पीतवर्णं ध्यायादिति विषस्तम्भनम् । एतत् सर्वं धूम्रवर्णं ध्यात्वा यत्रेच्छति तत्र संक्रामयेदिति विषापकर्षणमुक्तं भवति ।

त्रिवज्ररश्मिसमयैः सितपीतधूम्ररश्मिप्रयोगैः वीजोऽयं ओङ्कारः गुह्यसंभवः विषापहरणादितत्त्वस्थितो ध्येयः ।

एवं विषापहरणादिप्रयुक्तमन्त्रिणो रक्षार्थमाह अथेत्यादि । कायवा-क्चित्तरक्षार्थं चक्रं तस्य मन्त्रवज्रं मन्त्रसारं कायादिभ्यो निश्चारयेत् ।

ओङ्कारादिफट्कारावसानिको निरन्ताख्यो मन्त्रः । भूर्जपत्रादिषु चक्रमष्टारं कर्मवज्रप्रतिष्ठितं विश्ववज्रवरटकस्थितमालिख्य फटकारमध्यगतं कृत्वेति चक्रनाभिगतं फट्कारमालिख्य तन्मध्ये रक्ष्यनाम समालिखेत् ॥

मन्त्राक्षरपदैः ओमित्यादिकैः सम्यगानुपूर्व्या मण्डितमारसन्धिषु शोभितं सदा सर्वकालं करण्डकादौ संस्थाप्य पूजयेत् । ओं प्रथमारे । हुलु हुलु द्वितीये । तिष्ठ तिष्ठ तृतीये । बन्ध बन्ध चतुर्थे । हन हन पञ्चमे । दह दह षष्ठे । अमृते सप्तमे । [हूं] फट् अष्टमेऽरे इति मन्त्राक्षरविन्यासः । एवं रक्षाचक्रविन्यासः । सर्वमन्त्राणां साधकानां त्रिगुह्यं कायवाक्चित्तं तस्यालयः समुच्चयः रक्षासमूह इति ।

इदानीं कर्मावसाने वज्रज्ञानप्रयोगं दर्शयन्नाह अथेत्यादि । वज्राञ्जनं वश्यादिषु विसंवादकत्वात् तदेव सर्वसंपदामास्पदत्वात् पदं प्रतिष्ठा, तं निश्चारयेत् ।

साधकस्थानं चतुष्पथादिकं प्रसिद्धं वज्राञ्जनपदमित्यादिकस्यायमुपदेशः पञ्चामृतभावितार्कपद्मसूत्रेण वर्तितं कृत्वा कपालचुल्लीमध्यस्थवसापूर्ण-

कपालमध्यगतं संस्थाप्य तदुपरि सुरापरिपूर्णकपालं संस्थाप्य अनन्तरोक्त-चक्रमन्त्रमष्टोत्तरशतं जपेत् । भूतदिनेऽर्धरात्रौ कपालासनस्थः साधकः आज्ञा-चक्रोक्तविधिना च रक्षां कृत्वा कज्जलं पातयेदिति वज्राञ्जनपदविधिः ।

ततः कज्जलमादाय करण्डके संस्थाप्य तमेव मन्त्रमष्टोत्तरशतवारानावर्त्य जपेत् । त्रिविधा सिद्धिरुत्तममध्यमाधमाः । तत्रान्तर्धानमुत्तमा । भूगतनिधान-दर्शनं मध्यमा । वशीकरणं [अधमा]सिद्धिरित्याह भगवान् समन्तभद्रः ।

अथ संगीतिकारस्तन्त्रमाहात्म्यमुद्भावयन्नाह । अथ भगवन्तः सर्व-तथागताः वज्रपाणिं सर्वतथागताधिपतिमेवमाहुः । कतिभिर्भगवन् गुह्याक्षरैः समन्वागताः ते बोधिसत्त्वा महासत्त्वा [य] इदं सर्वतथागतगुह्यसमयं श्रद्धास्यन्ति भावयिष्यन्ति चेति भगवन्तं पृष्टवन्तः ।

अथ वज्रपाणिः तान् सर्वतथागतानेवमाह त्रिगुह्याक्षरैः भगवन्तः सर्व तथागताः ते बोधिसत्त्वा य इदं सर्वतथागतबोधिचर्यावज्रं श्रद्धास्यन्ति भावयिष्यन्ति चेति परिहारः ।

सर्वतथागताः प्राहुः कतमैस्त्रिभिरिति पुनश्चोद्यम् ।

वज्रधरः प्राह सर्वतथागतकायवज्रेण सर्वतथागतवाग्वज्रेण सर्वतथागत-चित्तवज्रेण एभिस्त्रिभिरिति परिहारः ।

अथ ते सर्वतथागता भगवतो वज्रपाणेः पादयोः प्रणिपत्य तूष्णीं स्थिता अभूवन्निति ।

एवं विगतसन्देहानां तथागतानां भूयोऽपि तन्त्रस्य दुष्प्राप्यत्वख्यापनेन प्रसादाभिवृद्ध्यर्थं तथागता अन्यथा मन्त्रयन्ति तद्दर्शयन्नाह अथ वज्रपाणिः सर्वतथागताधिपतिः तान् सर्वतथागतान् बोधिसत्त्वांश्चामन्त्रयते स्म । भूतपूर्वं भगवन्तः सर्वतथागताः अनभिलाप्यानभिलाप्यबुद्धक्षेत्रपरमाणुरजःसमाः कल्पाः क्षीणा यावत् भगवतो दीपङ्करस्य तथागतस्यार्हतः सम्यक्संबुद्धस्याप्यति-क्रान्तस्य काश्यपस्यापि महामुनेरभिसंबुद्धस्य न भाषितम् ।

तत् कस्मात् हेतोः ? अभव्या भगवन्तः सत्त्वाः अस्य महागुह्यपदार्थस्य तेन कालेन तेन समयेन न भाषितमिति भूतपूर्वमित्यादिना अतीतवृत्तकमाहृत्य काश्यपतथागते परिनिर्वृतेरप्रवृत्तिं प्रदर्शितवान् । तत् कस्मात् हेतोरित्यादिना । किमर्थं न भाषितम् ? अत्र कारणमाह तावति काले सत्त्वाः हीनाधि-मुक्तिकाः दानशीलादिविरागधर्मविनेया गम्भीरदेशनायामुत्त्रस्तसंज्ञिनः इत्यतो

भव्याः । तस्मिन् काले महागुह्यपदार्थं न प्रकाशितवान् । अस्मिन् काले रागचरितानां पञ्चकषायोद्धुतानां सत्त्वमधिमुक्तिमुपलक्ष्यागत्य तथागतेन केवलं देशितम्, अपि तु बुद्धत्वमनेन प्राप्यत इति केषांचिदाशङ्का स्यात् । अतः तन्निरासायाह अपि तु भगवन्तः सर्वतथागताः अस्मिन् गुह्यसमाजे बुद्ध-बोधिं क्षणलवमुहूर्तेणैव निष्पादयन्ति । यदनेकैः गङ्गानदीवालुकासमैः कल्पैः घटयन्तो व्यायच्छन्तो बोधिसत्त्वाः बोधिं न प्राप्नुवन्ति, तदिहैव जन्मनि गुह्य-समाजाभिरतो बोधिसत्त्वः सर्वतथागतानां बुद्ध इति संख्यां गच्छति । बुद्ध-बोधिः क्षणलवाः मुहूर्तेणैव निष्पादयतीत्ययमर्थः ।

अध्यात्माभिसंबोधिक्रमेण परमार्थसत्यं प्रविश्य सकलकलिमलं प्रक्षाल्य क्षणलवमुहूर्त्तनिमेषमात्रेण स्वाधिष्ठानक्रमेण व्युत्थाय सर्वसंपत्संबन्धागतो भवति । अस्मिन् श्रीगुह्यसमाजे अधिगततत्त्वानां दृष्टधर्मे एवेह जन्मनि बुद्धत्वप्राप्तिं श्रुत्वा तन्त्रं ग्रन्थतः साकल्येन श्रुत्वापि षट्कोटिपदविभागेन तन्त्रार्थे असंत्यक्तमोहाश्चन्दनादयःश्रोतारो न आत्तमनसो बभूवुः तद् दर्शयन्नाह अथ ते बोधिसत्त्वा इदं वाग्वज्राक्षरपदं श्रुत्वा प्ररोदयामासुरिति ।

एवं दुःखितमनस्कान् मृद्विन्द्रियान् प्ररुदितान् दृष्ट्वा रत्नपुद्गला उभयत्र विशारदा यथाश्वासयामासुः तद् दर्शयन्नाह अथ ते सर्वतथागताः तान् बोधि-सत्त्वानेवमाहुः । मा भगवन्तो बोधिसत्त्वाः प्ररोदत मा च त्रिदुःखं भावयत । एवं रत्नपुद्गलैः समाश्वस्ताश्चन्दनादय आत्मनो दुःखकारणं यथा निवेदयन्ति, तद् दर्शयन्नाह अथ ते महाबोधिसत्त्वाः तान् सर्वतथागतानेवमाहुः । कथं भगवन्तः सर्वतथागताः न प्ररोदामहे ? कथं त्रिदुःखं न प्रभावयामहे ? तत् कस्य हेतोः ? सु[? अ]भव्या भगवन्तः त्रिगुह्याक्षरेऽन्तगः तद्दर्शनमश्रवणेनापीति त्रिदुःखमिति । दुःखदुःखं विपरिणामदुःखं संस्कृतदुःखं च । अथ वा कायवाङ्-मानसं दुःखं त्रिगुह्याक्षर इति कायवाक्चित्तं त्रिगुह्यं अक्षरार्थं त्र्यक्षरं त्रिगुह्यं समस्ताङ्गं त्वरितविवन्धवास्पकं त्रिगुह्यकम् । गर्भी । प्रज्ञोपायोपलब्धि त्रिगुह्यम् कोलिकं । एतानि त्रिगुह्याक्षराणि ।

एवं विशुद्धिं द्योतयन्नाह सर्वतथागताः प्राहुः सामान्याक्षरं कुलपुत्राः यथा भवद्भिर्न ज्ञातं न श्रुतं तथास्माभिरपि सर्वतथागतैः सर्वबोधिसत्त्वैश्च कुलपुत्राः यत्ते गुह्याक्षरं न प्राप्ताः नाभिसंबुद्धाः, तत् कस्य हेतोः ? त्रिगुह्या-क्षरविशुद्धत्वात् ।

